Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 4.

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

# THE TAITTIRÍYA SAMHITÁ

OF THE

# BLACK YAJUR-VEDA

WITH THE

COMMENTARY OF BHATTABHA'SKARAMIS'RA.

**Vol. I.**

(Kanda I—Prasnas 1—3).

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,

*Curator, Government Oriental Library, Mys*

AND

PANDITARATNAM K. RANGACHARYA,

*Pandit, Government Oriental Library, Mysor*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS,

1894.

# PREFACE.

In this edition of the Taittiríya-Saṃhitá, the original is 
ı in *Saṃhitá* and *Pada* texts along with Bhaṭṭabháskara's ıentary. But the pada text of the 1st praśna of the a I. is given separately at the end of the praśna, as the tion of the pada-páṭha in this edition was only the outcome afterthought. In the pada-páṭha, the text of each section *váka*) is marked off into sub-sections to facilitate reference ıe commentary.

The following MSS. were used in the preparation of edition of the commentary :—

क.—A Grantha MS. of the Sarasvatí-Bhaṇḍára of His Highness the Maharaja of Mysore, comprising káṇḍas I—III and V—VII of the Saṃhitá.

ख.—A Telugu MS. containing the commentary on káṇḍa I. up to the 23rd anuváka of the 4th praśna.

ग.—A Telugu MS. obtained from Vizagapatam containing the commentary on the first six praśnas of káṇḍa I.

घ.—Another Grantha MS. belonging to the Sarasvatí-Bhaṇḍára of His Highness the Maharaja of Mysore. Very closely allied to क.

म.—A Grantha MS. copy of the commentary on káṇḍa I.

तं.—MSS. of the commentary belonging to the Palace Library at Tanjore.

To this volume is appended an edition of Káṇḍánukra-í, prepared from a MS. copy of the text and com-tary belonging to the Government Oriental Library. Weber's edition of the same has also been consulted.

Our remarks on the life, works and date of Bhaṭṭa-ıkara will appear in a future volume, as our researches in direction have not yet been completed.

ıYSORE, *ober*, 1894.

A. M. S.
क. र.

# अनुवाकविषयसूचिका.

## प्रथमः प्रपाठकः.

### र्शपूर्णमासाङ्गमन्त्राः आध्वर्यवाः १—१३ अनुवाकाः.


| कर्तव्यकर्माङ्गमन्त्राः १—३ अनुवाकाः | | | | अनुवाकः. |
| --- | --- | --- | --- | --- |
| पाकरणम् | ... | ... | ... | १ |
| हरणम् | ... | ... | ... | २ |
| म् | ... | ... | ... | ३ |
| नकर्तव्यकर्माङ्गमन्त्राः ४—१३ अनुवाकाः. | | | | |
| र्वापः | ... | ... | ... | ४ |
| घातः | ... | ... | ... | ५ |
| पेषणम् | ... | ... | ... | ६ |
| ोपधानम् | ... | ... | ... | ७ |
| ाशनिष्पादनम् | ... | ... | ... | ८ |
| रणम् | ... | ... | ... | ९ |
| ग्रहणं सन्नहनं च | ... | ... | ... | १० |
| बर्हिस्स्रुचां प्रोक्षणादि | | ... | ... | ११ |
| रः | ... | ... | ... | १२ |
| ूहनम् | ... | ... | ... | १३ |
| ष्टिकाण्डान्तर्गतसं २-२-१ मानुवाकाम्नातानां काम्येष्टीनां याज्याः पुरोनुवाक्याश्च १४ अनुवाकः. | | | | मन्त्राः. |
| ग्निष्टिः | ... | ... | ... | १—४ |
| चरुः | ... | ... | ... | ५—६ |
| त्यचरुः | ... | ... | ... | ७—८ |
| कृतीष्टिः | ... | ... | ... | ९—१२ |
| ातीष्टिः | ... | ... | ... | १३—१४ |

# द्वितीयः प्रपाठकः.

## सोमक्रयार्था मन्त्राः १–१३ अनुवाकाः.


| | अनुवाकः. |
|---|---|
| प्राचीनवंशशालाप्रवेशः ... ... ... | १ |
| दीक्षा " ... ... ... | २ |
| देवयजनस्वीकारः ... ... ... | ३ |
| सोमक्रयणीगमनम् ... ... ... | ४ |
| सोमक्रयणीपदसङ्ग्रहः ... ... ... | ५ |
| सोमोन्मानम् ... ... ... | ६ |
| सोमक्रयः ... ... ... | ७ |
| सोमस्य शकटारोपणम्... ... ... | ८ |
| शकटारोपितस्य सोमस्य प्राचीनवंशे नयनम् ... | ९ |
| आतिथ्येष्टिः ... ... ... | १० |
| उपसदः ... ... ... | ११ |
| उत्तरवेदिः ... ... ... | १२ |
| हविर्धानमण्टपनिर्माणम् ... ... | १३ |

काम्येष्टिकाण्डान्तर्गते सं. २-२-२ यानुवाके समाम्नातायां राक्षोघ्नेष्टौ.

| | |
|---|---|
| सङ्गतः ... ... ... | १४ |
| | मन्त्राः. |
| सामिधेन्यः ... ... ... | १–१५ |
| पुरोनुवाक्या ... ... ... | १६ |
| याज्ये द्वे ... ... ... | १७–१८ |


# तृतीयः प्रपाठकः.

## अध्वरशेषभूतेषु सदोनिर्माणादिषु सङ्गता मन्त्राः १–४ अनुवाकाः.


| | |
|---|---|
| सदोनिर्माणम् ... ... ... | १ |
| हविर्धानगतोपरवनिर्माणम् ... ... | २ |
| धिष्णियाः ... ... ... | ३ |
| वसर्जनहोमः ... ... ... | ४ |

अग्नीषोमीयपशुसङ्गता मन्त्राः ९—११ अनुवाकाः.

| | अनुवाकाः |
|---|---|
| यूपच्छेदः ... ... ... | ५ |
| यूपस्थापनम् ... ... ... | ६ |
| पशूपाकरणम् ... ... ... | ७ |
| पशुविशसनम् ... ... ... | ८ |
| वपायागः ... ... ... | ९ |
| वसाहोमः ... ... ... | १० |
| उपयट्संज्ञका होमाः ... ... ... | ११ |

सोमाभिषवसङ्गता मन्त्राः १२—१३ अनुवाकाः.

| | |
|---|---|
| वसतीवरीणां ग्रहणम् ... ... ... | १२ |
| सोमस्य शकटादुपावरोहः ... ... | १३ |

काम्येष्टिकाण्डान्तर्गते सं. २-२-२ यानुवाकशेषमारभ्य ४र्थानुवाक पर्यन्ते समाम्नातानामिष्टीनां याज्याः पुरोनुवाक्याश्च १४ अनुवाकः.

| | मन्त्राः |
|---|---|
| रुद्रवद्यागीये पुरोनुवाक्यायाज्ये ... ... | १—२ |
| सुरभिमद्यागीये „ ... ... | ३—४ |
| क्षामवद्यागीये „ ... ... | ५—६ |
| कामयागीये „ ... ... | ७—८ |
| यविष्ठयागीये „ ... ... | ९—१० |
| आयुष्मद्यागीये „ ... ... | ११—१२ |
| जातवेदोयागीये „ ... ... | १३—१४ |
| रुक्मद्यागीये „ ... ... | १५—१६ |
| तेजस्वद्यागीये „ ... ... | १७—१८ |
| साहन्त्ययागीये „ ... ... | १९—२० |
| अन्नवद्यागीये „ ... ... | २१—२२ |
| पवमानयागीये „ ... ... | २३—२४ |
| पावकयागीये „ ... ... | २५—२६ |
| शुचियागीये „ ... ... | २७—२८ |

हरिः ॐ.

# तैत्तिरीयसंहिता

## भट्टभास्करीयभाष्ययुक्ता.

## प्रथमः काण्डः.

### प्रथमः प्रश्नः

हरिः ओम्॥ [1]इ॒षे त्वो॒र्जे त्वा॑ [2]वा॒यव॑स्स्थोपा॒यव॑स्स्थ

---

ॐ

## भट्टभास्करीयं ज्ञानयज्ञाख्यम्

# तैत्तिरीयसंहिताभाष्यम्.

ईशानस्सर्वविद्यानां भूतानामीश्वरः* परः* ।
पुनातु सर्वदा चास्मान्† शब्दब्रह्ममयश्शिवः ॥

अत्राहुः—

यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्‡ ॥ इति.

किञ्च,—

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा‡ ॥ इति.

'स्वाध्यायोऽध्येतव्यः'[1] इति विधिना चार्थज्ञानपर्यन्तमध्ययनं विधीयत इति न्यायसिद्धम् । श्रूयते च, 'यदेव विद्यया करोति....तदेव वीर्यवत्तरं भवति'[2] 'य उ चैनमेवं वेद'[3] इति च । मन्त्राः पुनरविदितार्थाः नानुष्ठेयार्थप्रकाशनसमर्थाः । तस्मात्प्रतिपन्नवेदार्थोऽनुष्ठाताऽभिलषितानि कर्मफलानि प्राप्नोति, न च प्रत्यवैति, इति वेदार्थः प्रतिपत्तव्यः[4] । अत्र मनुः—

सैनापत्यं च राज्यं च वेदविद्ब्राह्मणोऽर्हति[5] । इति.

अत्र च,—

इतिहासपुराणज्ञः पदवाक्यप्रमाणवित् ।
अर्थो[6]पकारवेदी च वेदार्थं ज्ञातुमर्हति ॥

इति, अनेवंविधा अल्पश्रुता नाधिक्रियन्ते ।

मन्त्राणां विनियोगमक्षरविधिं [7]छन्दांस्यृषीन्देवताः
काण्डर्षीन्निगमान्निरुक्तमितिहासाख्यायिका ब्राह्मणम् ।
वाक्यार्थस्वररूपवृत्तिमनन[8]न्यायांश्च वक्ष्ये पृथक्
शब्दानामनसूयवस्सुमनसश्शृण्वन्तु जिज्ञासवः ॥
एतैष्षोडशभिस्सहैव विदितः पुंसां भवेच्छ्रेयसे
वेदार्थस्सषडङ्ग एव खलु सोऽध्येयश्श्रुतौ चोद्यते ।
वाक्यार्थैकपराण्यधीत्य च भवस्वाम्यादि[9]भाष्याण्यतो
भाष्यं सर्वपथीनमेतदधुना सर्वीय[10]मारभ्यते ॥

---

[1] तै. आ. २-१५.
[2] छा. उ. १-१-१०.
[3] तै. ब्रा. ३-८-१८—३-९-२०.—३-११-९—इत्यादिप्रदेशेषु.
[4] क—वेदार्थान्न प्रतिपत्तव्यः.[ वेदोऽर्थाच्च प्रतिपत्तव्यः ? ]
[5] सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च । सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ (मनु. १२-१००).
[6] म—अङ्गो
[7] तं—मागमविधिं.
[8] क—मर्थमनने.
[9] क—ण्यधीत्य मम योसर्वाणि.
[10] क—न स्वीय.

तस्मात्,—

प्रणम्य शिरसाऽऽचार्यान्बोधायनपुरस्सरान् ।
व्याख्यैषाऽध्वर्युवेदस्य यथाबुद्धि विधीयते ॥

अपि च,—

'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्छति गर्तं वा पद्यते प्र वा मीयते पापीयान्भवति यातयामान्यस्य छन्दाꣳसि भवन्ति अथ यो मन्त्रेमन्त्रे वेद स सर्वमायुरेति'* इत्यादिदर्शनात्प्रतिमन्त्रमृष्यादीनि ज्ञातव्यानि । अत्र मन्त्राणामृषिर्द्रष्टा । अक्षरसङ्ख्याविशेषश्छन्दः । मन्त्रवाच्योर्थो देवता । विनियोजकं ब्राह्मणम् । तत्रैकैव महती देवता अग्निवायुसूर्य†रूपेण विभक्ता सर्वत्र ध्यातव्या ; तासां विभूतयः पृथिव्यन्तरिक्षद्युस्थानस्थाः अन्या अपि देवता‡ इति नैरुक्ताः । ताश्च प्रतिमन्त्रं लिङ्गैर्विनियोगेन च गम्यन्ते च ज्ञायन्ते च । न§ तासां पृथगभिधानाय प्रयत्स्यामः । ऋषयः प्रजापत्यादयः प्रतिकाण्डं भिद्यन्ते । ते च होमतर्पणाद्यर्थं च ज्ञातव्याः । तदाहुः—

अथ काण्डऋषीनेतानुदकाञ्जलिभिश्शुचिः ।
अव्यग्रस्तर्पयेन्नित्यमन्त्रैः पर्वाष्टमीषु¶ च ॥
काण्डोपाकरणेष्वेतान्पुरस्तात्सदसस्पतेः ।
जुहुयात्काण्डसमाप्तौ च श्रुतिरेषा सनातनी** ॥

तत्र प्रजापतेर्नव काण्डानि††—पौरोडाशिकं, याजमानं, होतारः,

---

*आर्षे-१-१.
†म—...वायुसूर्यादि.
‡ग—अन्या देवता.
§तं—गम्यन्त एवेति न.
¶ग—प्रतिपर्वाष्टमीषु.
**काण्डानुक्रमणी. २-१०-११.

इष्टि[1]हौत्रं, चतुर्णां च ब्राह्मणानि, पितृमेधश्चेति । सोमस्य नव काण्डानि—अध्वरग्रहदाक्षिणानि, तेषां त्रयाणां ब्राह्मणमेकं, वाजपेयः, तस्य च ब्राह्मणम्, सवाः, शुक्रीयं ‘नमो वाचे’[2] इत्यादिकं, तस्य च ब्राह्मणमिति । अथाग्नेः सप्त काण्डानि—अग्न्याधेयं, पुनराधेयं, अग्न्युपस्थानं, अग्निः, तस्य च ब्राह्मणं ‘सावित्राणि जुहोति’[3] इत्यादि, तस्यैव द्वितीयं ब्राह्मणं ‘यदेकेन’[4] इत्यादि, अग्निहोत्रब्राह्मणमिति । अथ विश्वेषां देवानां षोडश काण्डानि—राजसूयः, तस्य च ब्राह्मणं, काम्याः पशवः, काम्या इष्टयः, उपानुवाक्यं ‘प्रजापतिरकामयत’[5] इति प्रश्नपञ्चकं, याज्याः, अश्वमेधः, तस्य च ब्राह्मणं, सत्राणि, उपहोमाः, सूक्तानि, नक्षत्रेष्टयः, सौत्रामणिः, अच्छिद्राणि पशुहौत्रं, नरमेधः इति । सांहितीनामुपनिषदां सांहित्य उपनिषद ऋषयः ‘शं नो मित्रः’[6] इत्यादीनाम् । याज्ञिकीनामुपनिषदां याज्ञिक्यः ‘अम्भस्यपारे’[7] इत्यादीनाम् । वारुणीनां वारुणः ‘सह नाववतु’[8] इत्यादीनाम् । इत्येवं तित्तिरिशाखायां चतुश्चत्वारिंशत्काण्डानि । अथ काठके काण्डान्यष्टौ हव्यवाडादीनाम् । तत्र हव्यवाहः चत्वारि काण्डानि ; सावित्रचित्यं, नाचिकेताचित्यं, चातुर्होत्रचित्यं वैश्वसृजचित्यमिति । अथारुणकेतुकचित्यस्यारुणाः काण्डर्षयः । अथ विश्वेषां देवानां द्वे काण्डे ; दिवश्श्येनेष्टयः ‘तुभ्यम्’ ‘देवेभ्यः’[9] इत्यनुवाकौ, अपामेष्टयः ‘तपसा’ ‘देवेभ्यः’[9] इत्यनुवाकौ । अथ स्वाध्यायब्राह्मणस्य ब्रह्मा स्वयम्भूः ऋषिः । अथैकाग्निकाण्डं ‘प्रसुग्मन्ता’[10] इति प्रश्नद्वयं वैश्वदेवाग्निमन्त्राश्च,[11] तस्य विश्वेदेवा ऋषयः[12] ॥

[1] क—होत्रारब्धेष्टिः. [2] तै. आ. ४-१. [3] सं. ५-१-१. [4] सं. ५-३-१.
[5] सं. ३-१-१. [6] तै. उ. १-१. [7] तै. उ. ४-१. [8] तै. उ. २-१.
[9] आ. ३-१२-१, २,३,४. [10] तै. मं. १-१.
[11]

अत्र च काण्डानां सङ्कीर्णत्वेपि यथाम्नायमेवाध्येयं सारस्वतत्वादस्य पाठस्य । सरस्वती हि स्वसुताय सारस्वतायेमं पाठमुपदिदेश । स च सर्वविद्यानिधिरमुमेव पाठमध्यैष्ट । तस्मादयमनतिक्रमणीय इति । किञ्च—पूर्वं भगवता व्यासेन जगदुपकारार्थमेकीभूय स्थिता वेदाः व्यस्ताः, शाखाश्च परिच्छिन्नाः । तत्र वैशम्पायनं नाम शिष्यं यजुश्शाखानामाधिपत्ये नियुयोज । स चैतं पाठं यास्काय, यास्कश्च* तित्तिरये, सोपि चोखाय, उखश्चात्रेयाय ददौ येन पदविभागश्चक्रे । अतश्चेयं शाखा आत्रेयीत्युच्यते । उक्तं च—

एतानृषीन्यजुर्वेदे यः पठेद्द्वै स वेदवित् ।
ऋषीणामेति सालोक्यं स्वयम्भोश्चैति सात्मताम्[†] ॥ इति.

अथैषां काण्डानामाद्यवसानावगमः परस्ताद्व्याख्यानावसरे भविष्यति । अयं च वेदो विध्यर्थवादमन्त्रात्मना त्रेधा भवति । विधयश्चोदनाः । अर्थवादास्स्तुतयः । मन्त्रा अनुष्ठेयार्थप्रकाशकाः । एते च ऋग्यजुषविभागेन द्वेधा वर्तन्ते । ऋचः पादबद्धाः । अतोऽन्यानि यजूंषि । अत्राहुः—

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ।
स्वरमात्राविभागज्ञो गच्छेदाचार्यसंसदम् ॥ इति.

तस्मात्,—

विनियोगस्य मन्त्राणां भेदस्यर्ग्यजुषस्य च ।
पदार्थस्वररूपाणामभिव्यक्त्यै च यत्यते ॥

[1]तत्रामावास्यायां सन्नयतश्शाखामाच्छिनत्त्यध्वर्युः—इषे त्वोर्जे

*ग—यस्काय. यस्कश्च. †—याज्ञवल्क्याय प्रोवाच ...

[3]दे॒वो वः॑ सवि॒ता प्रार्प॑यतु॒ श्रेष्ठ॑तमाय॒ कर्म॑ण॒

त्वेति ॥ 'उभा वामिन्द्राग्नी'* इत्यतः प्रागितः प्रभृति ये मन्त्रास्तेषां प्रजापतिः काण्डर्षिः । अत्र केचित् युष्मच्छब्दद्वयाद्द्वे यजुषी आहुः । तदानीं छेदने द्वयोस्समुच्चयः । अपरे तु द्वितीयेन सन्नमनादि कुर्वन्ति । मन्त्रार्थस्तु—इडन्नं सर्वैरेषणीयत्वात् । इह तु सान्नाय्यलक्षणं गृह्यते । ऊर्क् रसः बलप्राणयोरुद्दीपकः । इषु इच्छायाम्, ऊर्ज बलप्राणनयोः, आभ्यां कर्मणि करणे च सम्पदादिलक्षणस्स्त्रियां क्विप्प्रत्ययः, उभयत्र तादर्थ्ये चतुर्थी, 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । हे शाखे इडर्थं त्वां छिनद्मि । ऊर्गर्थं त्वां छिनद्मि । एवं योग्यक्रियां सम्पाद्य अध्याहारेण व्याख्येयम् । प्रयोगकाले तु तदर्थस्मृतिमात्रमेव । ऊहप्रवरनामधेयेषु श्रुतपदस्थाने योग्यपदान्तरप्रयोगो युज्यत एव ॥

[2]वत्सानपाकरोति—वायवस्स्थेति ॥ केचित् आख्यातावृत्त्या द्वे यजुषी आचक्षते । वायवः गन्तारः । वातेर्गतिकर्मणः 'कृवापाजि' इत्युण्प्रत्ययः । उपायवः उपगन्तारः । उपपूर्वादिणः 'छन्दसीणः' इत्युण्प्रत्ययः, उभयत्र प्रत्ययस्वरेणान्तोदात्तत्वम्, उत्तरत्र गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । स्थेति अस्तेः पञ्चमलकाररूपम् । हे वत्साः मातृसकाशाद्गन्तारो भवत, पुनर्दोहकाले उपगन्तारो भवतेति । वायुशब्देनैषामभिधानं वाय्वधिष्ठातृकत्वमेषां प्रदर्शयितुम् । 'वायुर्वा अन्तरिक्षस्याध्यक्षाः'[1] इति ब्राह्मणम् ॥

[3]गोचराय गाः प्रस्थापयति—देवो व इत्यादिभिस्तिसृभिः ऋग्भिः । तत्र प्रथमया सवितारमभ्यर्थयते । इयं च द्विपदा विरा-

'आ प्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः

गायत्री जागतगायत्रपादत्वादि*ति† ॥ षू प्रेरणे । देवस्सविता सर्वस्य प्रेरकः, येन विना तृणाग्रमपि न चलति, स युष्मान् प्रार्पयतु प्रस्थापयतु । अर्तेर्णौ पुगागमः । किमर्थम्? श्रेष्ठतमाय कर्मणे यज्ञाय । 'यज्ञो हि श्रेष्ठतमं कर्म'‡ । प्रकर्षवतामपि पुनःप्रकर्षविवक्षायां द्वितीय आतिशायनिको भवत्येव । तृणादिभक्षणेन सान्नाय्यनिष्पत्त्यर्थत्वाद्यज्ञार्थं प्रेरणम् ॥

'अथ प्रस्थाप्यमाना गा एव प्रार्थयते द्वितीयया—इयं च भववसुरुद्रेशपादत्वात् मध्येज्योतिस्त्रिष्टुप्§ ॥ हे अघ्नियाः गावः अहननार्हाः । अहननं अघ्नः 'घनर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति हन्तेः कः । अघ्नमर्हन्तीति 'छन्दसि च' इति घप्रत्ययः¶ । यद्वा—'अघ्न्यादयश्च' इति यक्प्रत्ययान्तो निपात्यते । इकारश्छान्दसः । तदा गवामियं संज्ञा । सर्वदा प्रत्य-

*म—...पादत्वाद्व्यक्षरोनत्वाच्च.

†'तृतीयं द्विपाज्जागतगायत्राभ्याम्' (३-१६) इति पिङ्गळसूत्रम् । अत्र आद्यपादे उत्तरपादगतवर्णद्वयसङ्कलनया जागतत्वमवगन्तव्यम् । षडक्षरस्यापि गायत्रत्वं न हीयत इति च बोध्यम् ॥

‡ब्रा. ३-२-१.

§'वसुशब्दः अष्टसु, भवरुद्रेशशब्दाश्चैकादशसु प्रसिद्धाः । 'मध्येज्योतिर्मध्यमेन' (३-५३) इति पिङ्गळसूत्रम् । मध्यमेन त्रैष्टुभेन पादेन अन्यैश्च चतुर्भिः पादैर्युतं छन्दः मध्येज्योतिर्नाम । हलायुधस्तु—अत्रान्येषां चतुर्णां पादानां गायत्रतामभिप्रैति । तदेतद्विरुद्धं बोध्यम् ॥

¶अत्र सर्वेष्वेव कोशेषु 'घप्रत्ययः' इत्येव वर्तते । 'छन्दसि च' (५-१-६८) इति सूत्रं यत्प्रत्ययविधायकमेव । घप्रत्ययविधायकं च नान्यदीदृशं सूत्रमुपलभ्यते । 'छन्दसि घस्' (५-१-१०६) इति सूत्रं च ऋतशब्दादेव [illegible]

प्रजावतीरनमीवा अयक्ष्मा मा वस्स्तेन ईशत

योदात्तत्वम् । इह तु आष्टमिकं 'आमन्त्रितस्य च' इति सर्वानुदात्तत्वम् । देवस्येन्द्रस्य भागं सान्नाय्यलक्षणं यूयमाप्यायध्वं आप्याययत । अन्तर्भावितण्यर्थात् प्यायतेर्ण्यन्ताद्वा लोट्, 'बहुलमन्यत्रापि संज्ञाछन्दसोः' इति णेर्लुक् । अण्यन्तस्याचित्तवत्कर्तृकात्* 'अणावकर्मकात्' इति परस्मैपदाभावः । 'ऐन्द्रं दध्यमावास्यायां'† इति सान्नाय्यस्यैन्द्रत्वम् । 'वत्सेभ्यश्च वै'‡ इत्यादि ब्राह्मणम् । ऊर्जस्वत्त्वादिगुणयुक्ता यूयमाप्यायध्वम् । यद्वा—ऊर्जस्वत्त्वादिगुणयुक्तान् युष्मान् स्तेनो मा ईशतेति । शेषत्वविवक्षायां 'अधीगर्थ' इति षष्ठ्यभावः । प्रथमपक्षे 'वा छन्दसि' इति पूर्वसवर्णः । ऊर्जस्वत्यो बलवत्यः, बहुरसा वा । पयस्वत्यः बहुक्षीराः । असुन्नन्तस्याद्युदात्तत्वम् । मतुब्ङीपोरनुदात्तत्वम् । प्रजाबह्वपत्याः । 'उपसर्गे च संज्ञायाम्' इति डप्रत्ययस्योदात्तत्वम्, कृदुत्तरपदप्रकृतिस्वरेण प्रजाशब्दोन्तोदात्तः । अनमीवाः । 'शेवयह्वजिह्वाग्रीवाप्वामीवाः'§ इति वन्प्रत्ययान्तो पूर्वस्यामीवशब्दो निपातितः । अमीवा उदरव्याधिः, तद्रहिता अनमीवाः । अयक्ष्माः, यक्ष्मा व्याधिः तद्रहिताः । पृथगुपादानात् । 'डाबुभाभ्याम्' इति डापि उभयत्र 'नञ्सुभ्याम्' इति उत्तरपदान्तोदात्तत्वम् । स्तेनः । स्तेन चौर्ये, इति चुरादिः, अपहर्ता । मा युष्माकं ईशत ईशिष्ट, स्ववशाः युष्मान् कार्षीत् । व्यत्ययेन च्लेरङादेशः । किञ्च—अघशंसोपि युष्मान्

* §कत्वादिति युक्तः पाठः. † तै. सं. २-५-४. ‡ ब्रा. ३-२-१.

§ ...तु—'ग्रीवाप्वमीवाः' इति पठित्वा 'मीवा उदरक्रिमिः' इति व्याच-

माघशꣳसो [5]रुद्रस्यहेतिः परि वो वृणक्तु [6]ध्रुवा अस्मिन्गोपतौ स्यात बह्वी[7]र्यजमानस्य पशून्पाहि ॥ १ ॥

इषे त्रिचत्वारिꣳशत् ॥ १ ॥

मेशिष्ट मा वो जिघांसीत् । अघे पापे भक्षणलक्षणे शंसा अभिलाषो यस्य [स्या] नियोगेन* सोघशंसः पापतत्परः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अघशब्दोयमन्तोदात्तोप्यस्ति, यथा 'अप नश्शोशुचदघम्'[1] इति । अङ्घते गच्छति दानादिना । आगमशास्त्रस्यानित्यत्वात् न नुम् । पचादित्वादच्, प्रत्ययस्वरेणान्तोदात्तत्वम् ॥

[5]अथ न केवलं मनुष्य एव, अपि तु देवोपि युष्मान् मा हिंसीदिति तृतीयया आशास्ते—रुद्रस्येति ॥ इयं चैकपदा त्रिष्टुप्, 'एकद्वित्रिचतुष्पदीत्युक्तपादम्'[1] इति वचनात् । हेतिः आयुधम् । 'ऊति यूति' इत्यादिना क्तिन्नन्तोऽन्तोदात्तो निपातितः । सा रुद्रस्य हेतिः युष्मान् परिवृणक्तु सर्वतो वर्जयतु ॥

[6]यजमानं ध्यायति ईक्षते वा—ध्रुवा अस्मिन्नित्यृचा त्रिष्टुभैकपदया ॥ गवां पतिर्गोपतिः यजमानः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । अस्मिन् यजमाने । ध्रुवाः अविनाशाः । स्यात भवत । बह्वयश्च सन्तानवृद्ध्या भवत । 'वा छन्दसि' इति पूर्वसवर्णदीर्घता ॥

[7]शाखामुपगूहति—यजमानस्येति । हे शाखे यजमानस्य पशून्

[1]यज्ञस्य घोषदसि [2]प्रत्युष्टꣳ रक्षः प्रत्युष्टा

पाहि रक्ष । 'तास्यनुदात्तेन्ङिदद्दुपदेशाल्लसार्वधातुकमनुदात्तं मह्न्वि-ङोः' इति लसार्वधातुकानुदात्तत्वे यजमाने धातुस्वरः । 'तस्मात्सायं पशवः'* इत्यादि ब्राह्मणम् ॥

इति प्रथमोनुवाकः.

---

[1]अश्वपर्शुमसिदं वाभिमन्त्रयते—यज्ञस्येति ॥ 'चतुर्थ्यर्थे बहुलं छन्दसि' इति तादर्थ्ये षष्ठी । घुषेर्ण्यन्ताच्छतरि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वाण्णिलोपः । 'अदुपदेशात्' इति शतुरनुदात्तत्वम् । उदात्तनिवृत्तिस्वरेण शप उदात्तत्वम् । असिदाश्वपर्श्वोः वस्तुत्वेन विवक्षितत्वान्नपुंसकत्वम् । लिङ्गव्यत्ययो वा । बर्हिर्लवनद्वारेण मयैव शीघ्रं यज्ञं सम्पादयस्वेति यज्ञार्थमाघोषयत्! असीति स्तुतिः । घोषदिति धननामेति केचित् ॥

[2]गार्हपत्ये प्रतितपति—प्रत्युष्टमिति ॥ केचित्तु—'प्रत्युष्टा अरातयः' इति गायत्र्येकपदा यजुरादिकेत्याहुः । रक्षेरसुनि अर्थविपर्यासः । 'क्षरमूर्छने' इत्यस्य वर्णविपर्यासो वा । यदत्र छिद्रान्वेषि रक्षस्तदनेन प्रतितपनेन प्रत्युष्टं प्रतिमुखीकृत्य दग्धमस्तु । उष दाहे । 'आदितश्च' इति चकारादाश्वस्तादिवदिट्प्रतिषेधः । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । किञ्च, अरातयोपि प्रत्युष्टास्सन्तु । रातयो धनस्य दातारस्सुहृदः । 'कृत्यल्युटो बहु-

**अरा॑तयः ³प्रेयम॑गाद्धि॒षणा॑ ब॒र्हिरच्छ॒ मनु॑ना कृ॒ता स्व॒धया॒ वित॑ष्टा॒ त आव॑हन्ति क॒वय॑ः**

---

क्तम्' इति बहुलवचनात्कर्तरि क्तिन् । अतोन्येऽरातयः । अव्यय-पूर्वपदप्रकृतिस्वरत्वम् ॥

³गार्हपत्यप्रदेशादाहवनीयं गच्छति—प्रेयमिति त्रिष्टुभा ॥ इय-मश्वपर्शुः प्रागात् प्राचीं गच्छति । 'छन्दसि लुङ्लङ्लिटः' इति लुङ् । धिषणा धृष्टा लवने समर्था । 'धृषेर्धिषि च संज्ञा-यां' इति क्युप्रत्ययः । बर्हिरच्छ आप्तुं मनुना प्रजापतिना सर्वस्य कर्त्रा कृता । स्वधया अन्नेन मांस*लक्षणेन करणेन मनुना कर्त्रा कृता । दधातेः 'आतोनुपसर्गे कः' । कृदुत्तर-पदप्रकृतिस्वरत्वम् । वितष्टा विशेषेण तनूकृता अतिनिशिता । 'यस्य विभाषा' इतीट्प्रतिषेधः । 'गतिरनन्तरः' इति पूर्वपद-प्रकृतिस्वरत्वम् । कस्मात्पुनरियं प्राचीं गच्छतीत्याह—त इति ॥ ते खलु कवयो मेधाविनः यज्ञकर्मविदः पुरस्तात्पूर्वस्या दिशः बर्हिरावहन्ति । पञ्चम्यन्तादस्तातिः । देवेभ्यः 'षष्ठ्यर्थे चतुर्थी वक्तव्या' । देवेभ्यो जुष्टं, एवं हि क्रियमाणे देवानां प्रियं भव-तीति । 'नित्यं मन्त्रे' इति जुष्टशब्द आद्युदात्तः । वेदिं प्रत्यवेक्षमाणो मन्त्रशेषं ब्रवीति—इह अस्यां खलु वेद्यां, तत् लविष्यमाणं बर्हिः, आसदे आसादयितव्यम् । एवमिदमर्हति । सदेर्ण्यन्तात् 'कृत्यार्थे तवैकेन्' इति केन्प्रत्ययः । 'बहुलं संज्ञा-छन्दसोः' इति णेर्लुक् । 'न लुमता' इति वृद्ध्यभावः । कृदु-

पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे [4]देवानां परिषूतमसि [5]वर्षवृद्धमसि [6]देवबर्हिर्मा त्वान्व-

[4]प्रस्तरार्थान् दर्भान्प्रतिगृह्णाति—देवानामिति ॥ चतुर्थ्यर्थे षष्ठी । देवार्थं परिषूतं परिगृहीतमसि, नात्मार्थम् । अतो मामयं वृथैव हनिष्यतीति नोद्वेजितव्यम्* । प्रवृद्धादेराकृतिगणत्वादुत्तरपदान्तोदात्तत्वम् । 'परेरभितोभावि मण्डलम्' इति वा । 'अथो यथा वस्यसे'† इत्यादि ब्राह्मणम् ॥

[5]दर्भस्तम्बमुन्मार्ष्टि—वर्षवृद्धमसीति ॥ वर्षेण वर्धितमसि । पूर्ववण्णिलुक् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । वर्षशब्द उञ्छादित्वादन्तोदात्तः ॥

[6]असिदादिना बर्हिस्संश्लेषयति—देवबर्हिरिति ॥ देवानां बर्हिः तल्पभूतम् । षाष्ठिकं 'आमन्त्रितस्य' इत्याद्युदात्तत्वम् । प्रत्ययलक्षणं तत्र नास्तीति चेत्‡ सोः व्यत्ययेन 'हल्ङ्याभ्यः' इति लोपः करिष्यते । अन्वक् पर्वणोधस्तात् । तिर्यक् तिरश्चीनम् । यत्र क्वापि एवं त्वा माच्छिदम् । 'अहिंसायै'† इति ब्राह्मणदर्शनात्, 'आच्छेत्ता' इति वक्ष्यमाणत्वाच्च माशब्देन छेदनं निषिध्यते इति वेदितव्यम् । कस्मात्पुनरन्वक् छेदादि वर्ज्यत इत्याह—पर्वेत्यादि । ते तव खलु पर्व प्ररोहस्थानं राध्यासं पुनरपि प्ररोहार्थं अविनष्टं स्थापयामीतीयमाशीः ॥

*ख—नोद्विजितव्यम्.

‡ख—नास्तीति वचनव्यत्ययेन. [स्वमोर्नपुंसकादिति लुका लुप्तत्वेन आमन्त्रितविभक्त्यन्तत्वं न संभवतीति भावः.]

†ब्रा. ३—२—२.

ङ्मातिर्यक्पर्वं ते राध्यास[7]माच्छेत्ता ते मा रिषं [8]देवबर्हिश्शतवल्शं विरोह [9]सहस्रवल्शाः ॥ २ ॥ वि वयꣳ रुहेम [10]पृथिव्यास्संपृचः पाहि

[7]आच्छिनत्ति—आच्छेत्तेति ॥ कृदुत्तरपदप्रकृतिस्वरत्वम् । मर्यादायामाकारः । मर्यादा च विधानम् । यस्मादहं विधानेन तव छेत्ता, न तु वृथा, तस्मादहं मा रिषं विनाशं मा गाम् । रिषेर्लुङि व्यत्ययेन च्लेरङादेशः । केचिदस्य पुषादित्वमिच्छन्ति, यथा 'तेन गच्छन्नरिष्यति '* इति । तदा पुषादित्वादेवाङ् सिद्धः ॥

[8]आच्छिन्नानभिमृशति—देवबर्हिरिति ॥ हे देवानां बर्हिः शतवल्शं अनेकप्ररोहणम्† यथा तथा विरोह । एकत्र पूर्वपदामन्त्रितायुदात्तत्वम् । अन्यत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

[9]आत्मानं प्रत्यभिमृशति—सहस्रवल्शा इति त्रिष्टुभैकपदया ॥ वयमपि सहस्रवल्शाः पुत्रपौत्राद्यनेकप्ररोहवन्तो विरुहेम विरूढा भूयास्म । 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः । यासुडादि । 'छन्दस्युभयथा' इति सार्वधातुकत्वादियू । यस्य लोपः‡ ॥

[10]प्रस्तरं निदधाति—पृथिव्या इति ॥ ङीष उदात्तत्वात् 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । संपृचन्तीति संपृचः । 'क्विप्च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । नित्यसमासत्वाद्विभक्तिस्वराभावः । पृथिवीसम्पृक्तानस्मान्पाहि दिविष्ठस्त्वम्, उपरि निधानात् ॥

*मनु—४-१७८. †क, ग—अनेकप्ररोहं.
‡ग—सार्वधातुकत्वात्तस्य 'लिङस्सलोपोनन्त्यस्य' इति लोपः.

[11]सुसंभृतां त्वा संभरा[12]म्यदित्यै रास्नाऽ[13]सीन्द्राण्यै सन्नहनं [14]पूषा ते ग्रन्थिं ग्रथ्नातु [15]स ते मास्था-

[11]सम्भरति—सुसंभृतेति ॥ सुष्ठु सम्भ्रियतेऽनयेति* सुसंभृत्। पूर्ववत्क्विप्। तादृश्या रज्ज्वा त्वा त्वां सम्भरामि इतरमुष्टिभिस्सह भरामि। भृञ् भरणे, भौवादिकः॥

[12]रास्नां करोति—अदित्या इति ॥ षष्ठ्यर्थे चतुर्थी, कर्मणि क्तिन्। अखण्डनीया पृथिवी अदितिः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। रास्ना शुल्वं अदित्याः रास्ना त्वमसि, यामदितिरकरोदिति स्तुतिः। सामर्थ्याच्चायं मन्त्रस्सम्भरणमन्त्रात्पूर्वो द्रष्टव्यः॥

[13]सन्नह्यति—इन्द्राण्या इति ॥ सैव चतुर्थी। इन्द्रस्य पत्न्यास्सन्नहनं संयमनमसीति स्तुतिः। 'इन्द्राणी वा अग्रे देवतानाँ समनह्यत'† इति ब्राह्मणम्। 'प्रथमे उदात्तयणः' इति विभक्तेरुदात्तत्वम्। द्वितीये कृदुत्तरपदप्रकृतिस्वरेण 'लिति' प्रत्ययात्पूर्वमुदात्तत्वम्। सन्नहनं च शुल्वान्तयोस्संश्लेषणम्; ग्रन्थिकरणस्य विधास्यमानत्वात्॥

[14]ग्रन्थिं करोति—पूषेति ॥ पूषा आदित्यस्स ते तव ग्रन्थिं ग्रथ्नातु करोतु। सामान्यग्रन्थेः विशेषग्रन्थिः कर्म॥

[15]शुल्बान्तमुपगूहति—स ते इति ॥ सः ते तव ग्रन्थिः मा स्थात्, मा प्रदेशान्तरमातिष्ठतु यावद्विमोकं शिथिलो मा भूत्। 'गातिस्था' इति सिचोलुक्॥

*घ—अनेनेति वा [इत्यधिकः पाठः]. †ब्रा—३.२.२.

[16]इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे [17]बृहस्पतेर्मूर्ध्ना हरा[18]म्युर्वन्तरिक्षमन्विहि [19]देवंगममसि ॥ ३ ॥
सहस्रवल्शा अष्टात्रिꣳशच्च ॥ २ ॥

[16]बर्हिरुद्यच्छते—इन्द्रस्येति ॥ इन्द्रस्य बाहुभ्यां त्वा त्वां उद्यच्छे उत्क्षिपामि, नात्मीयाभ्यामिति स्तुतिः । 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदम् ॥

[17]शीर्षन्नधिनिधत्ते—बृहस्पतेरिति ॥ बृहस्पतेरेव मूर्ध्ना त्वां हरामि, नात्मीयेनेति स्तुतिः । 'उभे वनस्पत्यादिषु युगपत्' इति युगपदुभयोः प्रकृतिस्वरत्वम् । बृहच्छब्दो वृत्तिविषये आद्युदात्त इष्यते, पतिशब्दश्च । प्रत्ययाद्युदात्तत्वेन मूर्धन्शब्दोन्तोदात्तः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

[18]प्रत्यागच्छति—उर्विति गायत्र्यैकपदया ॥ उरु विस्तीर्णमन्तरिक्षं अन्विहि अनुगच्छ । महान् पन्थाः, सुखेन गच्छेति भावः ॥

[19]उपरि सादयति—देवंगममसीति ॥ देवान् गच्छतीति देवंगमम् । 'गमश्च' इति खच् । श्वो देवगामि असि भवितासि । वर्तमानसामीप्ये लट् । तत्र हविषो धारणाद्बर्हिषो देवंगमत्वं भविता; प्रस्तरस्य त्वग्नौ प्रहरिष्यमाणत्वात् । 'दिवं गच्छ'* इति च मन्त्रलिङ्गम् । 'अनधस्सादयति'† इति ब्राह्मणम् ॥

इति द्वितीयोनुवाकः.

[11]सुसंभृता त्वा संभरा[12]म्यदित्यै रास्नाऽ[13]सीन्द्राण्यै सन्नहनं [14]पूषा ते ग्रन्थिं ग्रथ्नातु [15]स ते मास्था-

[11]सम्भरति—सुसंभृतेति ॥ सुष्ठु सम्भ्रियतेऽनयेति* सुसंभृत्। पूर्ववत्क्विप्। तादृश्या रज्ज्वा त्वा त्वां सम्भरामि इतरमुष्टिभिस्सह भरामि। भृञ् भरणे, भौवादिकः॥

[12]रास्नां करोति—अदित्या इति ॥ षष्ठ्यर्थे चतुर्थी, कर्मणि क्तिन्। अखण्डनीया पृथिवी अदितिः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। रास्ना शुल्बं अदित्याः रास्ना त्वमसि, यामदितिरकरोदिति स्तुतिः। सामर्थ्याच्चायं मन्त्रस्सम्भरणमन्त्रात्पूर्वो द्रष्टव्यः॥

[13]सन्नह्यति—इन्द्राण्या इति ॥ सैव चतुर्थी। इन्द्रस्य पत्न्यास्सन्नहनं संयमनमसीति स्तुतिः। 'इन्द्राणी वा अग्रे देवतानाँ समनह्यत'† इति ब्राह्मणम्। 'प्रथमे उदात्तयणः' इति विभक्तेरुदात्तत्वम्। द्वितीये कदुत्तरपदप्रकृतिस्वरेण 'ल्रिति' प्रत्ययात्पूर्वमुदात्तत्वम्। सन्नहनं च शुल्बान्तयोस्संश्लेषणम्; ग्रन्थिकरणस्य विधास्यमानत्वात्॥

[14]ग्रन्थिं करोति—पूषेति ॥ पूषा आदित्यस्स ते तव ग्रन्थिं ग्रथ्नातु करोतु। सामान्यग्रन्थेः विशेषग्रन्थिः कर्म॥

[15]शुल्बान्तमुपगूहति—स ते इति ॥ सः ते तव ग्रन्थिः मा स्थात्, मा प्रदेशान्तरमातिष्ठतु यावद्विमोकं शिथिलो मा भूत्। 'गातिस्था' इति सिचोलुक्॥

*घ—अनेनेति वा [इत्याधिकः पाठः]. †ब्रा—३-२-२.

[16]इन्द्र॑स्य त्वा बा॒हुभ्या॒मुद्य॑च्छे॒ [17]बृह॒स्पते॑र्मू॒र्ध्ना ह॑रा[18]म्यु॒र्व॑न्तरि॑क्ष॒मन्वि॑हि [19]दे॒वं॒ग॒मम॑सि ॥ ३ ॥

स॒हस्र॑वल्शा अ॒ष्टात्रि॑ꣳशच्च ॥ २ ॥

---

[16]बर्हिरुद्यच्छते—इन्द्रस्येति ॥ इन्द्रस्य बाहुभ्यां त्वा त्वां उद्यच्छे उत्क्षिपामि, नात्मीयाभ्यामिति स्तुतिः । 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदम् ॥

[17]शीर्षन्नधिनिधत्ते—बृहस्पतेरिति ॥ बृहस्पतेरेव मूर्ध्ना त्वां हरामि, नात्मीयेनेति स्तुतिः । 'उभे वनस्पत्यादिषु युगपत्' इति युगपदुभयोः प्रकृतिस्वरत्वम् । बृहच्छब्दो वृत्तिविषये आद्युदात्त इष्यते, पतिशब्दश्च । प्रत्ययाद्युदात्तत्वेन मूर्धन्शब्दोन्तोदात्तः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

[18]प्रत्यागच्छति—उर्विति गायत्र्यैकपदया ॥ उरु विस्तीर्णमन्तरिक्षं अन्विहि अनुगच्छ । महान् पन्थाः, सुखेन गच्छेति भावः ॥

[19]उपरि सादयति—देवंगममसीति ॥ देवान् गच्छतीति देवंगमम् । 'गमश्च' इति खच् । श्वो देवगामि असि भवितासि । वर्तमानसामीप्ये लट् । तत्र हविषो धारणाद्बर्हिषो देवंगमत्वं भविता; प्रस्तरस्य त्वग्नौ प्रहरिष्यमाणत्वात् । 'दिवं गच्छ'* इति च मन्त्रलिङ्गम् । 'अनधस्सादयति'† इति ब्राह्मणम् ॥

इति द्वितीयोनुवाकः.

---

*सं. १-४-४३.

[11]सुसंभृता त्वा संभरा[12]म्यदित्यै रास्नाऽ[13]सीन्द्राण्यै सन्नहनं [14]पूषा ते ग्रन्थिं ग्रथ्नातु [15]स ते मास्था-

[11]सम्भरति—सुसंभृतेति ॥ सुष्ठु सम्भ्रियतेऽनयेति* सुसंभृत्। पूर्ववत्क्विप्। तादृश्या रज्ज्वा त्वा त्वां सम्भरामि इतरमुष्टिभिस्सह भरामि। भृञ् भरणे, भौवादिकः ॥

[12]रास्नां करोति—अदित्या इति ॥ षष्ठ्यर्थे चतुर्थी, कर्मणि क्तिन्। अखण्डनीया पृथिवी अदितिः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। रास्ना शुल्बं अदित्याः रास्ना त्वमसि, यामदितिरकरोदिति स्तुतिः। सामर्थ्याच्चायं मन्त्रस्सम्भरणमन्त्रात्पूर्वो द्रष्टव्यः ॥

[13]सन्नह्यति—इन्द्राण्या इति ॥ सैव चतुर्थी। इन्द्रस्य पत्न्यास्सन्नहनं संयमनमसीति स्तुतिः। 'इन्द्राणी वा अग्रे देवतानाँ समनह्यत'† इति ब्राह्मणम्। 'प्रथमे उदात्तयणः' इति विभक्तेरुदात्तत्वम्। द्वितीये कृदुत्तरपदप्रकृतिस्वरेण 'लिति' प्रत्ययात्पूर्वमुदात्तत्वम्। सन्नहनं च शुल्बान्तयोस्संश्लेषणम्; ग्रन्थिकरणस्य विधास्यमानत्वात् ॥

[14]ग्रन्थिं करोति—पूषेति ॥ पूषा आदित्यस्स ते तव ग्रन्थिं ग्रथ्नातु करोतु। सामान्यग्रन्थेः विशेषग्रन्थिः कर्म ॥

[15]शुल्बान्तमुपगूहति—स ते इति ॥ सः ते तव ग्रन्थिः मा स्थात्, मा प्रदेशान्तरमातिष्ठतु यावद्विमोकं शिथिलो मा भूत्। 'गातिस्था' इति सिचोलुक् ॥

*घ—अनेनेति वा [इत्यधिकः पाठः]. †ब्रा—३.२.२.

[16]दिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे [17]बृहस्पतेर्मूर्ध्ना हरा[18]म्युर्वन्तरिक्षमन्विहि [19]देवंगममसि ॥ ३ ॥

सहस्रवल्शा अष्टात्रिंशच्च ॥ २ ॥

---

[16]बर्हिरुद्यच्छते—इन्द्रस्येति ॥ इन्द्रस्य बाहुभ्यां त्वा त्वां उद्यच्छे उत्क्षिपामि, नात्मीयाभ्यामिति स्तुतिः । 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदम् ॥

[17]शीर्षन्नधिनिधत्ते—बृहस्पतेरिति ॥ बृहस्पतेरेव मूर्ध्ना त्वां हरामि, नात्मीयेनेति स्तुतिः । 'उभे वनस्पत्यादिषु युगपत्' इति युगपदुभयोः प्रकृतिस्वरत्वम् । बृहच्छब्दो वृत्तिविषये आद्युदात्त इष्यते, पतिशब्दश्च । प्रत्ययाद्युदात्तत्वेन मूर्धन्शब्दोन्तोदात्तः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

[18]प्रत्यागच्छति—उर्वीति गायत्र्यैकपदया ॥ उरु विस्तीर्णमन्तरिक्षं अन्विहि अनुगच्छ । महान् पन्थाः, सुखेन गच्छेति भावः ॥

[19]उपरि सादयति—देवंगममसीति ॥ देवान् गच्छतीति देवंगमम् । 'गमश्च' इति खच् । श्वो देवगामि असि भवितासि । वर्तमानसामीप्ये लट् । तव हविषो धारणाद्बर्हिषो देवंगमत्वं भविता; प्रस्तरस्य त्वग्नौ प्रहरिष्यमाणत्वात् । 'दिवं गच्छ'* इति च मन्त्रलिङ्गम् । 'अनधस्सादयति'† इति ब्राह्मणम् ॥

इति द्वितीयोनुवाकः.

---

*सं. १-४-४३. †ब्रा. ३-२-२.

**[1]शुन्धध्वं दैव्याय कर्मणे देवयज्यायै [2]मातरिश्वनो घर्मोऽसि [3]द्यौरसि पृथिव्यसि विश्वधाया**

[1]सान्नाय्यपात्राणि प्रोक्षति—शुन्धध्वमिति ॥ शुन्ध शुद्धौ, उदात्तेत्, व्यत्ययेनात्मनेपदं । यद्वा, शुन्ध शौचकर्मणि ; अस्माण्ण्यन्तात्कर्मकर्तर्यात्मनेपदम् । 'यक्चिणोः प्रतिषेधे णि श्रन्थिग्रन्थि' इत्यादिना यक्प्रतिषेधः । 'बहुळं संज्ञाछन्दसोः' इति णिलुक् । लसार्वधातुकानुदात्तत्वे धातुस्वरः । देवानामिदं दैव्यं 'देवाद्यञञौ' इति यञ्प्रत्ययः प्राग्दीव्यतीयः । ञित्वादाद्युदात्तत्वं । 'छन्दसि निष्टर्क्य' इत्यादौ देवयज्याशब्दो यप्रत्ययान्तो निपातितः । हे पात्राणि देवयज्यात्मने दैव्याय कर्मणे शुन्धध्वं शुद्धानि भवत, स्वयमेवात्मानं शोधयतेति वा । प्राधान्यख्यापनार्था देवशब्दावृत्तिः, साकल्यार्था वा, यथा 'निधीनां त्वा निधिपतिं हवामहे' इति* ॥

[2]अङ्गारान्निरूहति—मातरिश्वन इति ॥ मातरि सर्वस्य परिच्छेदके अन्तरिक्षे शेत इति मातरिश्वा । 'श्वन्नुक्षन्' इत्यादिना शीङः कनिन्प्रत्यये वकारोन्तादेशो निपात्यते । 'तत्पुरुषे कृति बहुळम्' इत्यलुक् । निपातनसामर्थ्यादेव सप्तम्या उदात्तत्वं । वायुरुच्यते । तस्य यो घर्मः अग्निर्वैद्युताख्यः स एव त्वमसीति पार्थिवोऽग्निः स्तूयते । यद्वा, घरणाधिकरणं घर्मः । घृक्षरणदीप्त्योः । क्षरणं सञ्चलनं† । घर्म इति मन्प्रत्ययान्तो निपातितः । वायोरपि सञ्चलनाधारभूतः अन्तरिक्षमेव त्वमसीति कुम्भ्याधारोऽङ्गारस्स्तूयते धारणसामर्थ्यख्यापनार्थम् । 'अन्तरिक्षं वै मातरिश्वनो घर्मः । एषां लोकानां विधृत्यै'‡ इत्यादि ब्राह्मणम् ॥

*सं. ७-४-१२. †ग–संचरणं. ‡ब्रा–३-२-३.

अग्ने परमेण धाम्ना दृꣳहस्व मा ह्वा[4] वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारꣳ

[3]सान्नाय्यतपनीमधिश्रयति—द्यौरसीति ॥ द्युप्रभृतीनां कार्यभूता स्थाली कारणात्मना स्तूयते । 'दिवश्च ह्येषा पृथिव्याश्च संभृता'* इति ब्राह्मणम् । लोकाधिकाराद्विश्वधाया इत्यन्तरिक्षमुच्यते । 'वृष्टिर्वै विश्वधायाः'* इति दर्शनात् । विश्वस्य धायो धारणं यस्या इति बहुव्रीहिः, विश्वं धीयतेनयेति । 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन्प्रत्ययः । णिदित्यनुवृत्तेर्युक् । तत्र हि 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इत्युक्तम् । तेन कारकपूर्वादपि भवत्येव । पूर्वपदप्रकृतिस्वरग्रहणस्य च बहुव्रीहिस्वरस्योपलक्षणत्वात् 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वं । सा त्वमीदृशेन परमेण प्रकृष्टेन धाम्ना धारणशक्त्या दृंहस्व वर्धस्व दृढा भव । दृहदृहि वृद्धौ, व्यत्ययेनात्मनेपदम् । केचिदाहुर्वर्धनायां वर्तत इति । यद्वा—दृंहगा इतिवत् ण्यन्तात्कर्मकर्तर्यात्मनेपदम् । पूर्ववद्यक्प्रतिषेधादि । मा ह्वाः मा कुटिला भूः । ह्वृ कौटिल्ये, लुङ्मध्यमपुरुषैकवचने, सिचि वृद्धौ, 'बहुलं छन्दसि' इतीडभावे, हल्ङ्यादिलोपे, 'रात्सस्य' इति सकारलोपः । अत्र 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते दृंहस्व मा ह्वाः इति ॥

[4]उखायां शाखापवित्रं निदधाति—वसूनामिति ॥ प्राणिनां वासहेतुत्वात्पयःप्रभृतीनि धनानि वसुशब्देनोच्यन्ते, प्राणाश्च, 'प्राणा वै वसवः'* इति दर्शनात् । तेपि हि वासहेतवः । 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इति वसेः करणे उप्रत्ययः । 'धान्ये नित्' इत्यतो निदिति हि तत्रानुवर्तते । नित्त्वादाद्युदात्तः ।

*ब्रा. ३-२-३.

[5]हुतस्स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याꣳ [6]सा विश्वायु[7]स्सा विश्वव्यचा-

पयःप्रभृतीनां वसूनां शतधारमनेकप्रकारं पवित्रं पावनमसि। प्राणात्मनां वसूनां सहस्रधारं पूर्वस्मादपि बहुप्रकारं पावनमासि यागसाधनद्वारेण । 'पुवस्संज्ञायाम्' इति इत्रप्रत्ययः ॥

[5]स्तोकाननुमन्त्रयते—हुत इति ॥ अल्पो बिन्दुस्तोको महान्बिन्दुर्द्रप्सः । दोहनकालेऽमहान्बिन्दुः पात्राद्बहिर्निपतितस्स्तोकः, स हुतोस्तु देवतोद्देशेन परित्यक्तोस्तु । द्रप्सोपि हि हुतोस्तु । कस्मै । अग्नये बृहते नाकाय नाकनाम्ने । कं सुखं, तदस्य नास्तीत्यकः, तस्मादन्यो नाकः । 'न भ्राण्नपात्' इति निपातितः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'बृहन्महतोरुपसङ्ख्यानम्' इति बृहतः परस्याजादेर्विभक्तेरुदात्तत्वम् । 'दिवि नाको नामाग्निः'* इत्यादि ब्राह्मणम् । एवं हुतोस्त्विति सङ्कल्पेन हविषोस्कन्नता क्रियते । कः पुनरित्थं वदतीत्याह, स्वाहा स्वयमेव सरस्वती आह ब्रूते । 'स्वैव ते वागित्यब्रवीत्'* इत्यादि ब्राह्मणम् । स्वयमेवाहेत्यस्यार्थस्य द्योतकोयं निपातः । आह स्वेत्यस्य प्रतिलोमपाठे स्वाहेति भवति । निपाता आद्युदात्ताः । न केवलं नाकायैवापितु, द्यावापृथिवीभ्यामपि हुतोस्त्विति । 'दिवो द्यावा' इति द्यावादेशः आद्युदात्तः । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोः प्रकृतिस्वरत्वम् ॥

[6]प्रथमां दुग्धां गामभिमन्त्रयते—सा विश्वायुरिति ॥ या प्रथमं दुग्धा गौस्सा विश्वायुर्नाम, विश्वं आयुर्जीवनं यस्यामिति पृथिव्यभिधीयते । तदात्मना च गौः स्तूयते । 'इयं वै विश्वायुः'* इत्यादि ब्राह्मणम् ॥

*ब्रा. ३-२-३.

[8]स्सा॒वि॒श्वक॑र्मा॒ [9]सं॑पृ॒च्यध्व॒मृता॑वरीरू॒र्मिणी॒र्मधु॑म-

[7]द्वितीयामभिमन्त्रयते—सा विश्वव्यचा इति ॥ विश्वं व्यचति व्याप्नोतीति विश्वव्यचाः । अञ्चु गतौ, अञ्चु इत्येतस्मादसुन्, शिष्टं विश्वधायाशब्दवत् । अन्तरिक्षं विश्वव्यचाः ॥

[8]तृतीयामनुमन्त्रयते—सा विश्वकर्मेति ॥ विश्वानि कर्माणि कर्मफलानि यस्यां सा विश्वकर्मा द्युलोकः । पूर्ववत्स्वरः । 'इमानेवैताभिः'* इत्यादि ब्राह्मणम् ॥

[9]गोदोहनसंक्षालनीया अपः पयस्यानयति—संपृच्यध्वमिति गायत्र्या ॥ हे ऋतावरीः ऋतेन सत्येन यज्ञेन वा तद्वत्यः, ऋतसम्पादिका आपः यूयं पयसा सम्पृच्यध्वं सम्पृक्ता भवत । कर्मणि लकारः । 'छन्दसीवनिपौ' इति वनिप् । 'वनो र च' इति ङीप्रेफौ । 'अन्येषामपि दृश्यते' इति दीर्घः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वं । आष्टमिकमामन्त्रितानुदात्तत्वम् । ऊर्मिमत्त्वादिगुणयुक्तास्सत्यस्सम्पृच्यध्वम् । एतेषामामन्त्रितत्वाभावाद्यथायथं स्वरा भवन्ति । पयस्सम्पर्केण वाह्येते गुणाः अपामुपजायन्ते । महद्भिरूर्मिभिस्तद्वत्यः ऊर्मिण्यः । 'तुन्दादिषु स्वाङ्गाद्विवृद्धौ' इति पाठादिनिप्रत्ययः । स्वमङ्गं स्वाङ्गम् । पूर्ववद्दीर्घत्वम् । मधुमत्तमाः मधुरतमाः । मन्द्राः मादयित्र्यः । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययः । किमर्थं सम्पृच्यत इत्याह—धनस्येति । धनस्य सान्नाय्यलक्षणस्य । सातये लाभाय । धनवनषण सम्भक्तौ, 'जनसनखनां

त्तमा मन्द्रा धनस्य सातये [10]सोमेन त्वा तनु-
च्मीन्द्राय दधि [11]विष्णो हव्यꣳ रक्षस्व ॥ ४ ॥

सोमेनाष्टौ च ॥ ३ ॥

---

सञ्झलोः ' इत्यात्वम् । 'ऊतियूति ' इत्यादिना क्तिन्प्रत्ययान्तोऽन्तोदात्तो निपातितः । युष्मत्सम्पर्के हि तत्सिद्धिरिति भावः ॥

[10]दध्ना तनक्ति—सोमेनेति ॥ सोमसदृशेन दध्ना त्वा त्वां आतनच्मि घनीकरोमि । यद्वा—सोमेन सदृशत्वात् सान्नाय्यमेव सोमः । ' सोमः खलु वै सान्नाय्यम् '* इति च श्रूयते । सोमशब्दात्तत्करोतीति णिचि, ' एरचिण्यन्तानां ' इति वचनात्करणे घञ् । ञित्वादाद्युदात्तत्वं । किमर्थमित्याह—इन्द्राय यथा त्वं दधि भवसि तथा तदर्थमातनच्मि । ' ऐन्द्रं दध्यमावास्यायाम् '† इत्यैन्द्रत्वं दध्नः । तञ्चू सङ्कोचने, श्नान्नलोपः ॥

[11]उपरि निदधाति—विष्णाविति ॥ हे विष्णो सर्वस्य रक्षक इदं दुग्धलक्षणं हव्यं रक्षस्व । व्यत्ययेनात्मनेपदम् । हवमर्हतीति हव्यं होमार्हम् । ' छन्दसि च ' इति यत्प्रत्ययः ॥

इति तृतीयोनुवाकः.

---

*ब्रा. ३-२-३. †सं. २-५-४.

[1]कर्मणे वां देवेभ्यश्शकेयं [2]वेषाय त्वा [3]प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो [4]धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मान् धूर्वति तं धूर्वयं वयं धूर्वाम[5]स्त्वं

[1]यागदिवसे कर्मारम्भे हस्तौ सम्मृशति*—कर्मणे वामिति ॥ देवेभ्य इति षष्ठ्यर्थे चतुर्थी । हे हस्तौ देवानां सम्बन्धिने कर्मणे तत्सिद्ध्यर्थं† वां युवयोः शकेयं युवां विनियोक्तुं समर्थो भूयासम् । 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः । 'छन्दस्युभयथा' इति सार्वधातुकत्वात्सलोपः ॥

[2]शूर्पमादत्ते—वेषाय त्वेति ॥ वेषः विष्णुर्यज्ञ इति पर्यायाः । पचाद्यजन्तः । वृषादित्वादाद्युदात्तत्वम् । सर्वव्यापिने विष्णवात्मने यज्ञाय त्वामादद इति शेषः ॥

[3]प्रत्युष्टमिति प्रतितपनमन्त्रो व्याख्यातः‡ ॥

[4]धुरमभिमृशति—धूरिति ॥ धूस्स्थोऽग्निरुच्यते । धूर्हिंसकः त्वमसि युगप्रदेशस्य धूर्भूत्वा स्थितस्त्वं । हे अग्ने धुर्य 'एष वै धुर्योऽग्निः',§ इति ब्राह्मणम् । धुर्वी हिंसायां, कर्तरि क्विप्, राल्लोपः, उपधादीर्घः । यत ईदृशस्त्वं तस्माद्धूर्वन्तं यज्ञस्य हिंसकं राक्षसादिकं तावद्धूर्व नाशय । किञ्च, तं च धूर्व योस्मान् धूर्वति जिघांसति । अपि च, तमपि धूर्व यं वयं धूर्वामः जिघांसामः । सर्वत्र 'उपधायाश्च' इति दीर्घत्वम् ॥

[5]अनोभिमन्त्रयते—त्वमिति ॥ हे शकट त्वं देवानां असि देवसंबन्ध्यसि, देवतार्थं हविर्धारणेन । अत एव सस्नितमं शुद्ध-

*ग—हस्तावववमृशति. †ख.ग—कर्मसिद्ध्यर्था [illegible]

दे॒वाना॑मसि॒ सस्नि॑तम॒ꣳ॒ पप्रि॑तम॒ꣳ॒ जुष्ट॑तम॒ꣳ॒ वह्नि॑तमं देव॒हूत॑म॒मह्रु॑तमसि हवि॒र्धान॒ꣳ॒ दृꣳह॑स्व॒ मा ह्वा᳚र्मि॒त्रस्य॑ त्वा॒ चक्षु॑षा॒ प्रेक्षे॒ मा भेर्मा सं वि॑क्था॒ मा त्वा॑ ॥ ५ ॥

---

तमं इदानीमसि । ष्णा शौचे 'आदृगम' इत्यादिना किन् लिड्वच्च । पप्रितमं पूर्णतमं व्रीह्यादिभिः । प्रा पूरणे, स एव प्रत्ययः । जुष्टतमं प्रियतमं देवानां । 'नित्यं मन्त्रे' इत्याद्युदात्तत्वम् । वह्नितमं वोढृतमं हविषाम् । 'वहिश्रिश्रुयुद्रुग्ला' इत्यादिना निप्रत्ययः । स च नित् । देवहूतमं देवानामाह्वातृतममिवासि हविर्धारणेन । क्विपि, सम्प्रसारणे, 'हलः' इति दीर्घः, कृदुत्तरपदप्रकृतिस्वरत्वम् । अह्रुतं अकुटिलं असि धृतिमत्तया 'ह्रुह्वरेश्छन्दसि' इति ह्रुभावः । हविर्धानं हविर्भूता व्रीह्यादयो निधीयन्तेस्मिन्निति हविर्धानम् । कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । यतस्त्वमेवंविधस्तस्माद्दृंहस्व । मा ह्वारिति व्याख्यातम् *॥

[6]पुरोडाशीयान् प्रेक्षते—मित्रस्येति ॥ जगतां मित्रभूतस्य सर्वजगद्बन्धोरादित्यस्य चक्षुषा त्वां पुरोडाशीयसमूहं प्रेक्षे, नात्मीयेन । ततश्च त्वं मनुष्येण दृष्टोहमिति मा भेः मा भैषीः । 'बहुलं छन्दसि' इतीडभावः । सिचि वृद्धिं बाधित्वा व्यत्ययेनान्तरङ्गो गुण एव क्रियते । 'संज्ञापूर्वको विधिरनित्यः' इति वा वृद्ध्यभावः । मा च संविक्थाः मा च कंपिष्ठाः । ओविजी भयचलनयोः, लुङि 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वम् । 'झलो झलि' इति सिचो लोपः । अत्र मा च भेः

---

*सं. १-१-२३.

हि॒ꣳसि॒ष॒[7]मु॒रुवाता॑य [8]दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे᳚ऽश्विनो᳚र्बा॒हुभ्यां᳚ पू॒ष्णो हस्ता᳚भ्याम॒ग्नये᳚ जुष्टं॒

मा च संविक्थाः, इति चार्थस्य गम्यमानत्वात् 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । गम्यमानार्थस्याप्रयोग एव लोपः । नन्ववघातादिना पीडां* कर्तुमारभते भवान्, तत्किमुच्यते मा भेरिति; तत्राह—मां त्वा हिंसिषं, अवघातादिना न त्वामहं नाशयामि, किन्तु हविर्भूतं त्वां देवतायै सङ्कल्प्य,† उच्छ्रितं स्थानं प्रापयामि । यथोक्तं :—

'यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितं पदम्' इति ॥

[7]तृणानि निरस्यति—उर्विति ॥ वातार्थं वातप्रवृत्त्यर्थं उरु महद्भव । एतेनावारुणत्वं हविषः कृतं भवति । 'यद्वै किञ्च वातो नाभिवाति'‡ इत्यादि ब्राह्मणम् ॥

[8]निर्वपति—देवस्य त्वेति ॥ सवितुस्सर्वप्रेरकस्य देवस्य प्रसवे प्रेरणायां तेनैव प्रेरितोहं त्वामग्नये अग्न्यर्थं जुष्टं प्रियं निर्वपामि निष्कृष्य शूर्पे निक्षिपामि । 'थाथघञ्क्ताजबित्रकाणाम्' इति सूत्रेण प्रसवशब्दोन्तोदात्तः । अश्विनोर्बाहुभ्यां नत्वात्मीयाभ्यामिति स्तुतिः । 'अश्विनौ हि देवानामध्वर्यू आस्ताम्'‡। तथा पूष्ण एव हस्ताभ्यां पाणितलाभ्याम् । उदात्तनिवृत्तिस्वरेण षष्ठ्या उदात्तत्वम् ॥

[9]अग्नीषोमीयं निर्वपति—अग्नीषोमाभ्यामिति ॥ 'देवताद्वन्द्वे

*ग—हिंसां. †ख. ग—समर्प्य. ‡ब्रा. ३-२-४.

निर्वपा[9]म्यग्नीषोमाभ्या[10]मिदं देवाना[11]मिदमु नस्सह [12]स्फात्यै त्वा नारात्यै [13]सुवरभि विख्येषं वैश्वा-

च' इति पूर्वोत्तरपदयोः युगपत् प्रकृतिस्वरत्वम् । अत्र च 'देवस्य त्वा' इत्यादि, 'जुष्टं निर्वपामि' इति चानुषज्यते ॥

[10]निरुप्तानभिमृशति—इदं देवानामिति ॥ इदं निरुप्तं धान्यं देवानां स्वं, तदुद्देशेन निरुप्तत्वात् । अन्यस्माद्व्यावृत्तमभूदित्यर्थः ॥

[11]निरुप्तशेषमभिमृशति—इदमु नस्सहेति ॥ इदं निरुप्तशेषं नः अस्माकं भवतु । उशब्दः पूर्वस्माद्व्यावृत्त्यै । तुशब्दो वा लुप्ततकारः । किमस्माकमेव ? नेत्याह । सहैव देवैः इदमस्माकं स्वम् । न निरुप्तवद्देवानामेव, न चास्माकमैहिकभोगायैव । तत्र शेषस्य निरुप्ते यदा आवापः, तदा यागोत्तरकालं शेषभक्षणेन साधारणत्वम् । यदा तु कोष्ठादौ, तदा तदुत्तरस्यामिष्ट्यामुभयं भविष्यतीति साधारण्यम् ॥

[12]निरुप्ते कोष्ठादौ वाऽवशिष्टमावपति—स्फात्यै त्वेति ॥ स्फायी ओप्यायी वृद्धौ । ण्यन्तात् क्तिन्, 'तितुत्रतथसिसुसरकेषु च' इतीट्प्रतिषेधः, णिलोपयलोपौ । उदात्तनिवृत्तिस्वरेण क्तिन उदात्तत्वम् । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । स्फात्यै वर्धनाय अस्मदीयं धान्यं वर्धयितुं त्वामवशिष्टमावपामीति शेषः । नारात्यै, तत्र वर्धितं नादानाय, अपि तु दानार्थैव दानार्थमेवेति । रातेः क्तिनि अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

[13]आहवनीयमन्वीक्षते—सुवरिति ॥ सुष्ठु श्रेयांसि गमयतीति सुवः । अन्तर्भावितण्यर्थात् 'अन्येभ्योपि दृश्यते' इति विच् ।

न्रं ज्योति[14]र्दृ॒ꣳह॑न्तां दु॒र्या॑ द्यावा॑पृथि॒व्यो[15]रु॒र्वन्त-

'इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलम्' इत्युवङादेशः। 'न्यङ्स्वरौ स्वरितौ' इति वस्स्वरितत्वम्। एवंविधं वैश्वानरं विश्वेषां नराणां स्वामित्वेन सम्बन्धिनं ज्योतिर्द्योतनशीलं आहवनीयं अभिविख्येषं आभिमुख्येन पश्यामि। 'अभिरभागे' इति लक्षणे कर्मप्रवचनीयत्वेन गतित्वाभावात् 'गतिर्गतौ' इति निघाताभावः। लिङ्याशिष्यङ्, यासुट्, अतोयेयः। 'नरे संज्ञायाम्' इति विश्वशब्दस्य दीर्घः, 'तस्येदम्' इत्यण्। अन्तोदात्तो वैश्वानरशब्दः। 'तमसीव वा एषोन्तश्चरति'* इति ब्राह्मणम्॥

[14]गृहाननुवीक्षते—दृꣳहन्तामिति॥ दुर्याः गृहाः। दुर्वी हिंसायां, क्विप्प्रत्यये, राल्लोपापृक्तलोपयोः† कृतयोः, दूः हिंसा। तस्मात् 'तत्र साधुः' इति यत्। 'नभकुर्छुराम्' इति दीर्घाभावः। 'यतो नावः' इत्युदात्तत्वम्। दुरि साधवो दुर्याः दुःखहेतवः। दिवि च पृथिव्यां चास्माकमुपभोगार्थं‡ दृंहन्तां वर्धन्ताम्। दृंहस्वेतिवत्पदस्वरूपमनुसरणीयम्। 'द्यावापृथिवी हविषि गृहीत उदवेपेताम्'* इति ब्राह्मणम्। 'देवताद्वन्द्वे च' इति द्यावापृथिवीशब्दे पूर्वोत्तरपदे युगपत्प्रकृतिस्वरेण 'उदात्तयणः' इति विभक्तेरुदात्तत्वम्। 'दिवो द्यावा' इति द्यावादेशः॥

*ब्रा. ३-२-४.

†अत्र क-ग-कोशयोः "वलिलोपापृक्तलोपयोः" इति पाठः.

‡ख—भोगार्थं गृहाः दृंहन्ताम्. ग—भोगार्थाः गृहाः दृंहन्ताम्.

रिक्षमन्विंहि[16] अदित्यास्त्वोपस्थे सादयाम्यग्ने[17] हव्यꣳ रक्षस्व ॥ ६ ॥ मा त्वा षट्चत्वारिꣳशच्च ॥ ४ ॥

[15]'उर्वन्तरिक्षमन्विंहि' इति गमनमन्त्रो व्याख्यातः* ॥

[16]हविस्सादयाति—अदित्या इति ॥ द्यतेः कर्मणि क्तिनि दितिः खण्डनीया, अदितिः अखण्डनीया पृथिवी । 'इयं वा अदितिः'† इति दर्शनात् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तस्याः उपस्थे उत्सङ्गे त्वां स्थापयामीति स्तुतिः । उपस्थीयते अस्मिन्नित्युपस्थः । 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति घञर्थे कः । 'स्वाङ्गानामकुर्वादीनाम्' इति द्वितीयमक्षरमुदात्तम् ॥

[17]गार्हपत्यमभिमन्त्रयते—अग्न इति ॥ हे अग्ने गार्हपत्य, इदं हव्यं हवनाय निरुप्तं रक्षस्व । व्यत्ययेनात्मनेपदम् । 'छन्दसि च' इति यः‡ ॥

इति चतुर्थोऽनुवाकः.

---

*सं. १-१-२[18]. †ब्रा. ३-२-४.

‡ अत्र सर्वेष्वेव 'यः' इत्येव पाठोऽस्ति । तत्र च 'दण्डादिभ्यो यः' इति पूर्वसूत्रात् 'यः' इत्यनुवर्तते इति भावः । मनोरमादौ तु 'दण्डादिभ्यो यत्' इत्येव पूर्वसूत्रपाठ इति भाष्यानुसारात्साधितम्.

[1]दे॒वो वं॑स्सवि॒तोत्पु॑ना॒त्वच्छि॑द्रेण प॒वित्रे॑ण॒ वसो॒स्सूर्य॑स्य र॒श्मिभि॒ [2]राप॑ दे॒वीरग्रेपुवो

[1]अप उत्पुनाति—देवो व इति गायत्रचा । 'सावित्रियर्चा'* इति ब्राह्मणम् । हे आपः देवस्सविता सर्वस्य प्रेरकः, वः युष्मान् उत्पुनातु ऊर्ध्वं शोधयतु । अच्छिद्रेण पवित्रेण जगतां पावनेन आदित्यात्मनानेन छिन्नं छिद्रमतोन्यदच्छिद्रं अविच्छेदेन वर्तमानं । अव्ययपूर्वपदप्रकृतिस्वरत्वं । 'पुवस्संज्ञायाम्' इति पुनातेरित्रप्रत्ययः । 'असौ वा आदित्योच्छिद्रं पवित्रम्'* इत्यादि ब्राह्मणम् । वसोर्जगतां वासहेतोः सूर्यस्य मण्डलात्मनो रश्मिभिः जगतां शुद्धिहेतुभिः उत्पुनातु । वसेः करणे उप्रत्ययः, स च निद्वे । 'यद्दर्भैरप उत्पुनाति' 'द्वाभ्यामुत्पुनाति'* इति प्राप्तयोर्दर्भयो[1]रादित्यात्मना मण्डलरश्मितया च स्तुतिः ॥

[2]उन्महयन्नुपोत्तिष्ठति—आप इति ॥ हे आपः । आमन्त्रिताद्युदात्तत्वम् । उत्तरेषामामन्त्रितानामाष्टमिकं सर्वानुदात्तत्वम्, 'विभाषितं विशेषवचने बहुवचनम्' इति पूर्वस्य विद्यमानत्वात् । हे देवीः देवनगुणयुक्ताः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । हे अग्रेपुवः भस्मादेश्शुद्धिकारणात् प्रथममेव वस्तूनां शोधिकाः । क्विपि 'तत्पुरुषे कृति बहुलं' इत्यलुक् । हे अग्रेगुवः प्रथमं स्नानकाल एव यागसाधनत्वं गच्छन्त्यः । 'ऊङ् च गमादीनामिति वक्तव्यम्' इति क्वौ अनुनासिकलोपः ऊकारश्च । ईदृश्यो यूयमिमं प्रस्तुतं यज्ञमग्रे नयत यज्ञानामग्रं प्रापयत । यज्ञपतिं यजमानं

*ब्रा. ३–२–५.

[1]ख–इति हस्तयोरुभयो.

**अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये [3]प्रोक्षिताः स्था[4]ग्नये वो जुष्टं प्रोक्षा-**

चाग्रे धत्त यजमानानामग्रगण्यं कुरुत । 'पत्यावैश्वर्ये' इति यज्ञपतौ पूर्वपदप्रकृतिस्वरत्वम् । किं हि नाम भवतीनामशक्यमित्याह युष्मानिति । युष्मान्खल्विन्द्रो वृत्रतूर्ये वृत्रवधार्थसङ्ग्रामे अवृणीत वृणीतवान् । यूयमपीन्द्रं वृत्रतूर्ये अवृणीध्वं वृतवत्यः । युष्माकमिन्द्रो यूयं चेन्द्रस्य सहाया इति स्तुतिः । वृत्रस्तूर्यते हिंस्यतेऽस्मिन्निति वृत्रतूर्यं युद्धम् । तुर्वी त्वरणहिंसयोः, 'हन्त्यर्थाश्च' इति चुरादिपाठात् स्वार्थिकण्यन्तात् 'अचो यत्' इति यत् । 'यतो नावः' इत्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् तेन । 'वृत्रँ ह हनिष्यन्निन्द्र आपो वव्रे'* इत्यादि ब्राह्मणम् ॥

[3]प्रोक्षणीः प्रोक्षति—प्रोक्षितास्थेति ॥ स्वत एव शुद्धा यूयं शुद्धाः इति मन्त्रोच्चारणमेवासां प्रोक्षणम् । 'अद्भिर्ह्येव हवीꣳषि प्रोक्षति ब्रह्मणापः'† इत्यादि ब्राह्मणम् । 'प्रोक्षितास्थेत्याह । तेनापः प्रोक्षिताः'* इति च । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[4]पुरोडाशीयान् प्रोक्षति—अग्नय इति ॥ अग्न्यर्थं युष्मान्प्रोक्षामि आद्भिस्सिञ्चामि । जुष्टं प्रियं यथा भवति तथा सिञ्चामि । 'नित्यं मन्त्रे' इति जुष्टशब्द आद्युदात्तः । अग्नीषोमाभ्यामित्यत्र 'वो जुष्टं प्रोक्षामि' इत्यनुषज्यते । 'देवताद्वन्द्वे च' इति युगपत्स्वरः ॥

*ब्रा. ३-२-५.

†सं. २-६-५.

म्यग्नीषोमाभ्याꣳ [5]शुन्धध्वं दैव्याय कर्मणे देवयज्याया [6]अवधूतꣳ रक्षोऽवधूता अरातयोऽ[7]दित्यास्त्वगसि प्रति त्वा ॥ ७ ॥

पृथिवी वे[8]त्त्वधिषवणमसि वानस्पत्यं प्रति

---

[5]पात्राणि प्रोक्षति—शुन्धध्वमिति । गतम्* ।

[6]कृष्णाजिनमवधूनोति—अवधूतमिति यजुरादिकयैकपदया गायत्र्या ॥ अवधूतं विनाशितम्† । शिष्टं व्यख्यातम्‡ प्रत्युष्टादि मन्त्रेण । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[7]कृष्णाजिनमवस्तृणाति—अदित्या इति ॥ अदितिः अखण्डनीया । कर्मणि क्तिन्, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अखण्डितायाः पृथिव्यास्त्वगिव प्रियतममसि, अतस्त्वामास्तीर्णां पृथिवी प्रतिवेत्तु आत्मन उपरि तवावस्थानमनुजानातु, न न्यक्कारयतु । सा तु माऽवमंस्त । पृथिवीशब्दो ङीषन्तोऽन्तोदात्तः ॥

[8]उलूखलमध्यूहति—अधिषवणमिति ॥ अधिषूयते अभिपीड्यते अवहन्यतेऽस्मिन्निति सुनोतेरधिकरणे ल्युट्, 'उपसर्गात्सुनोति' इत्यादिना षत्वम्, कृदुत्तरपदप्रकृतिस्वरेण लिति प्रत्ययात्पूर्वस्योदात्तत्वम् । वनस्पतेर्विकार इति पत्युत्तरपदलक्षणो ण्यः । ईदृशं महाभागं त्वमसि । तस्मात् अदित्यास्त्वग्भूतं कृष्णाजिनं त्वां प्रतिवेत्तु अनुजानातु । आत्मोपरि तवावस्थानं क्षमताम् ॥

---

*सं. १-१-३[1]. †ख.—शोधितम्. ‡सं. १-१-२[2]

**त्वादित्यास्त्वग्वै [9]त्वग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णा[10]म्यद्रिरसि वानस्पत्यस्स इदं देवेभ्यो हव्यꣳ सुशमि शमि[11]ष्वेषमावदो-**

[9]पुरोडाशीयानावपति—अग्नेरिति ॥ अग्नेस्तनूश्शरीरमिवासि, उद्दीपकत्वात् । हे पुरोडाशीयसमूह । 'कृपिचमितमि' इत्यादिना तनोतेरुप्रत्ययः । स्तुत्यर्थत्वादग्निशब्दोपादानस्य विकृतौ नोहः । 'अग्नेर्वा एषा तनूः । यदोषधयः' *इति ब्राह्मणम् । किञ्च—वाचो विसर्जनमसि । विसृज्यते वागनेनेति करणे ल्युट् । कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरः । 'सावेकाचः' इति वाचः परस्य विभक्तेरुदात्तत्वम् । 'यदा हि प्रजा ओषधीनामश्नन्ति । अथ वाचं विसृजन्ते' *इति ब्राह्मणम् । एवं विश्वजननं त्वां देववीतये देवानां भक्षणार्थं† गृह्णामि उलूखले त्वां प्रक्षिपामि । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ॥

[10]मुसलमवदधाति—अद्रिरसीति ॥ अत्ता आहर्ता तुषाणां अद्रिः । 'अदिशदिभूशुभिभ्यः क्रिन्' इति क्रिन्प्रत्ययः, निच्वादाद्युदात्तत्वम् । ईदृशो वनस्पतेर्विकारस्त्वमसि । स तादृशस्त्वं इदं हव्यं हवनार्हम् । 'छन्दसि च' इति यत्प्रत्ययः । सुशमि सुष्ठु स्वयमेव शाम्यतीति सुशमि । 'शमित्यष्टाभ्यो घिनुण्' । 'परादिश्छन्दसि बहुलं' इत्युत्तरपदाद्युदात्तत्वम् । ईदृशमिदं हव्यं देवेभ्यः देवतार्थं शमिष्व शामय सुखहेतुं‡ कुरु । शमयतेः लोट् । 'बहुळं छन्दसि' इति शपो लुक् ॥

[11]वृषारवेण दृषदुपले समाहन्ति—इषमिति ॥ हविर्लक्षणं यदि-

*ब्रा. ३–२–५. †ख. ग–रक्षणार्थम्. ‡क–शान्तम्.

ऊर्जमावंद द्युमद्वंदत वयꣳ सङ्घातं जेष्म [12]वर्ष-
वृंद्धमसि [13]प्रति त्वा वर्षवृंद्धं वेत्तु [14]परापूतꣳ

दमन्नं आवद देवेभ्य आवेदय, युष्मदर्थमिदमनेन यजमानेन संस्क्रियते, इति । एवं ऊर्जमावदेति व्याख्यातम् । ऊर्क् रसः । इदानीं यज्ञायुधान्युच्यन्ते—द्युमत् दीप्तिमत् । दिवेः क्विप्प्रत्ययान्तान्मतुपि ' दिव उत् ' इत्युत्वे ' ह्रस्वनुड्भ्यां मतुप् ' इति मतुप उदात्तत्वम् । ईदृशमिदमन्नं संस्क्रियमाणं देवेभ्यो वदत वेदयत । ननु देवास्स्वयमेव ज्ञास्यन्ति, तत्किमनेन घोषणेनेत्यत्राह—वयं युष्मदीयेन शब्देन सङ्घातं भ्रातृव्यसमूहं जेष्म जयेम । जयतेर्लेटि ' सिब्बहुळं लेटि ' इति सिप्प्रत्ययः, ' बहुळं छन्दसि ' इति शपो लुक् । सङ्घातशब्दस्य थाथादिस्वरेण उत्तरपदान्तोदात्तत्वम् । ' मनोश्श्रद्धा देवस्य ' *इत्यादिब्राह्मणम् ॥

[12]शूर्पमुपयच्छति—वर्षवृद्धमसीति ॥ व्याख्यातं† बर्हिषि । इह तु शूर्पमुच्यते ॥

[13]पुरोडाशीयानुद्वपाति—प्रति त्वेति ॥ हे पुरोडाशीयसमूह वर्षवृद्धं त्वां शूर्पः‡ प्रतिवेत्तु अनुजानातु आत्मोपरि तव प्रक्षेपणं क्षमताम् ॥

[14]परापुनाति—परापूतमिति यजुरादिकैकपदया गायत्र्या । परापूतं परास्तं । शिष्टं प्रत्युष्टादिना व्याख्यातम्§ । ' गतिरनन्तरः ' इति पूर्वपदप्रकृतिस्वरत्वम् । ' यज्ञꣳ रक्षाꣳस्यनुप्राविशन् '* इति ब्राह्मणम् ॥

*ब्रा. ३-२-५. †सं. १-१-२[5] ‡ग—शूर्पं त्वां. §सं. १-१-२[2]

रक्षः परापूता अरातयो [15]रक्षसां भागोऽसि [16]वायुर्वो विविनक्तु देवो वस्सविता हिरण्यपाणिः प्रतिगृह्णातु ॥ ८ ॥

त्वा भाग एकादश च ॥ ५ ॥

---

[15]तुषान्निरस्यति—रक्षसामिति ॥ सुबोधम् । 'कर्षा त्वतः' इति भागशब्दोन्तोदात्तः ॥

[16]त्वचं विविनक्ति—वायुरिति ॥ वायुर्वो युष्मान् विविनक्तु तण्डुलेभ्यः कणान्पृथक्करोतु ॥

[17]तण्डुलान् प्रस्कन्दयति—देवो व इति ॥ देवस्सविता सर्वस्य प्रेरकः हिरण्यपाणिः हिरण्याभरणपाणिः युष्मान् प्रतिगृह्णातु प्रतिगृह्य रक्षतु । हिरण्यस्य विकारो वलयाङ्गुलीयकादिः पाण्योर्य*स्येति समुदायविकारषष्ठ्या विगृह्य 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वाचोत्तरपदलोपश्च' इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'उशीरदाशेरकपालपलालशैवालश्यामाकशरीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम्' इति हिरण्यशब्द आद्युदात्तः । 'अन्तरिक्षादिव'† इत्यादि ब्राह्मणम् ॥

इति पञ्चमोनुवाकः.

---

*ख–पणीय. †ब्रा. ३–२–५.

[1]अवधूत्ꣳ रक्षोऽवधूता अरातयो[2]ऽदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु [3]दिवस्कम्भनिरसि प्रति त्वाऽदित्यास्त्वग्वेत्तु [4]धिषणासि पर्वत्या प्रति त्वा दिवस्कम्भनिर्वेत्तु [5]धिषणासि

[1-2]अवधूननोपस्तरणमन्त्रौ व्याख्यातौ*॥

[3]शम्यां निदधाति—दिव इति ॥ 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । दिवो यागसाधनद्वारेण स्कम्भनिरसि धारयित्र्यसि । स्कभ्नातेः करणे ल्युटि ङीपि वर्णव्यत्ययेन ह्रस्वत्वम् । 'गर्भिगयो भवन्ति' †इति यथा । यद्वा—'वृतेश्च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् स्कभ्नातेरनिप्रत्ययः । सर्वत्रोञ्छादित्वादन्तोदात्तत्वम् । हे शम्ये अदित्यास्त्वक्, एवंभूतां त्वां, अदित्यास्त्वग्भूतं कृष्णाजिनं प्रतिवेत्तु अनुजानातु आत्मोपरि तवावस्थानम् । 'द्यावापृथिवी सहास्ताम्' ‡इत्यादि ब्राह्मणम् ॥

[4]शम्यायां दृषदमत्यादधाति—धिषणेति ॥ धिषणा धृष्टा त्वमसि । हे दृषत् पर्वत्या । पर्वतमर्हतीति पर्वतशब्दात् 'छन्दसि च' इति यत्प्रत्ययः §। धिषणाशब्दो व्युत्पादितः प्राक्¶ । त्वामीदृशीं दिवस्कम्भनिः शम्या प्रतिवेत्तु अनुजानातु उपरिनिधानम् ॥

[5]दृषद्युपलामत्यादधाति—धिषणेति ॥ धिषणा धृष्टासि हे उपले पार्वतेयी । पर्वतिः परिपूर्णा महाशिला दृषल्लक्षणा । पूर्व पर्व मर्व पूरणे, 'वहिवस्यर्तिभ्यश्चित्' इति वहतिर्वसतिररतिरिति विधीय-

*सं. १-१-५.[6-7] †सं. २-१-२. ‡ब्रा. ३-२-६. §क—इति यः ¶सं. १-१-२[3].

**पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामधिवपामि [7]धान्यमसि धिनुहि देवान्प्राणाय**

मानोतिप्रत्ययो बहुलवचनात्पर्वतेरपि भवति । तस्यापत्यं पार्वतेयी । आकृतिगणत्वाड्ढकि 'कितः' इत्यन्तोदात्तत्वम् , उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । शिलापुत्रकवदपत्यत्वमुपचर्यते । यस्मात्त्वं धिषणासि पार्वतेयी, तस्मात्त्वां दुहितृस्थानीयां सा पर्वतिः दृषत् प्रतिवेत्तु , त्वां मातेव दुहितरमुत्सङ्गस्थामनुजानातु ॥

[6]पुरोडाशीयानधिव[न्निर्व]पाति—देवस्य त्वेति ॥ सावित्रो व्याख्यातः* । अधिवपनं दृषदि प्रक्षेपणम् ॥

[7]अधिवपति—धान्यमिति ॥ धान्यं पोषकमसि । दधातेः पोषणकर्मणः 'दधातेर्यन्नुट्' इति यत्प्रत्ययः, बहुलवचनात् 'यतो नावः' इत्याद्युदात्तत्वं बाधित्वा तित्स्वरितत्वम् । यद्वा—'तित्यशिक्यमर्त्यकाष्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' इति अन्तस्वरितत्वम् । धिनोत्यर्थे प्रीणने वा दधातिर्वर्तते । यस्मात्त्वमीदृशमसि तस्माद्देवानां धिनुहि प्रीणय । यद्वा—धान्यं पोषणशीलं वर्धिष्णुस्वभावं हव्यमसि । तस्माद्देवान् यावदभिलाषं प्रथित्वा प्रीणय । 'एतस्य यजुषो वीर्येण '†इत्यादि ब्राह्मणम् ।‡ हिवि दिवि धिवि जिवि प्रीणनार्थाः । 'धिन्विकृण्व्योरच' इत्युप्रत्ययः । 'अतो लोपः' 'उतश्च प्रत्ययाच्छन्दो वा वचनम्' इति हेर्लुक् क्रियते, पित्त्वनिषेधात् । ङित्त्वादुदात्तत्वं च हेः ॥

*सं.१-१-४.[8] †ग–तो. ‡ब्रा.३-२-६

त्वाऽपानाय॑ त्वा व्या॒नाय॑ त्वा॒ [9]दी॒र्घामनु॒ प्रसि॑-ति॒मायु॑षे धां [10]दे॒वो व॑स्सवि॒ता हिर॑ण्यपाणिः प्रति॑गृह्णातु ॥ १ ॥

प्राणाय॑ त्वा॒ पञ्च॑दश च ॥ ६ ॥

---

[8]पिनष्टि—प्राणायत्वेति ॥ प्राणार्थं त्वां प्राचीनं पिनष्मि, अपानार्थं प्रतीचीनं, व्यानार्थं तिरश्चीनं ; प्राणादिवृत्तीनामेवंरूपत्वात् । सर्वत्र थाथादिस्वरेणान्तोदात्तत्वम् । घञर्थे कः, घञ् वा । बहुलमिति वचनाद्वृद्ध्यभावः । व्याने संहितायां छान्दसं दीर्घत्वम् ॥

[9]बाहू अन्ववेक्षते—दीर्घामन्विति त्रिष्टुभैकपदया ॥ प्रसितिः प्रबन्धः कर्मसन्तानः । षिञ् बन्धने, 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वरत्वम् । दीर्घामविच्छिन्नां प्रसितिमनु युवां धां दधामि अविच्छिन्नेन कर्मसन्तानेन युवां सम्बध्नामि । 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वम् । धामिति दधातेर्लेट्, 'इतश्च लोपः परस्मैपदेषु', 'बहुलं छन्दसि' इति शपो लुक् । आयुषे आयुरर्थं, यजमानस्याविच्छिन्नमायुर्भूयादिति । यद्वा—आयुरन्नं पुरोडाशलक्षणं, तत्सिद्ध्यर्थम् ॥

[10]कृष्णाजिने पिष्टानि प्रस्कन्दयाति—देव इति ॥ व्याख्यातम् * । 'अन्तरिक्षादिव वै '[1]इत्यादि ब्राह्मणम् ॥

इति षष्ठोनुवाकः.

---

*सं.१-१-५.[1]

[1]ब्रा.३-२-६.

[1]धृष्टिरसि ब्रह्म यच्छा[2]पाग्नेऽग्निमामादं जहि
[3]निष्क्रव्यादꣳ सेधा[4]ऽऽदेवयजं वह [5]निर्दग्धꣳ रक्षो

[1]धृष्टिमादत्ते—धृष्टिरिति ॥ धृष्टिरुपवेषः । धृष्टिर्धर्षणे समर्थासि शत्रूणाम् । अतो ब्रह्म हविर्लक्षणमन्नं यच्छ देहि । किं हि नाम त्वया न शक्यते कर्तुमिति ॥

[2]गार्हपत्यमभिमन्त्रयते—अपेति ॥ हे अग्ने गार्हपत्य यस्त्वयि आमात् अग्निः तं जहि नाशय । आमात् अपक्काशी हविषो विनाशकः । 'अदोनन्ने' इति विट्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[3]अङ्गारं निरस्यति—निरिति ॥ क्रव्यादं अग्निं निस्सेध निष्कृष्य बहिरपनय । षिधू गत्यां, भौवादिकः । आममांसभक्षकः क्रव्यात् चिताग्निः । 'क्रव्ये च' इति विट्प्रत्ययः, पूर्वपदप्रकृतिस्वरत्वम् ॥

[4]अङ्गारमन्यमावर्तयति—एति ॥ देवान् यजतीति देवयट्, हविषां सम्यक्सम्पादकः । 'अन्येभ्योपि दृश्यते' इति क्विप्प्र*त्ययः । स एव प्रकृतिस्वरः । देवयजं अग्निम् आवह आनय । 'य एवामात्क्रव्यात्'†इत्यादि ब्राह्मणम् ॥

[5]अङ्गारमधिवर्तयति—निर्दग्धमिति ॥ प्रत्युष्टादिना व्याख्यातम् । 'अग्निवत्युपदधाति'‡इत्यादि ब्राह्मणम् ॥

*क—विचप्र. †ब्रा.३-२-७. ‡सं.१-१-२.

निर्दग्धा अरातयो [6]ध्रुवमसि पृथिवीं दृꣳहा-
युर्दृꣳह प्रजां दृꣳह सजातानस्मै यजमाना-
य पर्यूह [7]धर्त्रमस्यन्तरिक्षं दृꣳह प्राणं दृꣳ-
हापानं दृꣳह सजातानस्मै यजमानाय प-

[6]मध्यमं कपालमुपदधाति—ध्रुवमिति ॥ ध्रुवं निश्चलं मध्यमं सर्वकपालानामसि । सर्वं तद्वत् * । पृथिवीं दृंह दृढां कुरु । दृह दृहि वृद्धौ, अन्तर्भावितण्यर्थः । पृथिवीशब्दो ङीषन्तोऽन्तोदात्तः । यजमानस्यायुः प्रजां च दृंह । प्रजाशब्दः कृदुत्तरप्रकृतिस्वरेणान्तोदात्तः । किञ्च—अस्मै यजमानाय । षष्ठ्यर्थे चतुर्थी । अस्य यजमानस्य सजातान् समानजन्मनः पर्यूह परितस्सेवमानान् कुरु । 'सजातानस्मा अभितो बहुलान् करोति '† इत्यादि ब्राह्मणम् । समानस्य 'छन्दसि' इत्यादिना सभावः । 'वा जाते' इत्युत्तरपदान्तोदात्तत्वम् । जात्यादिग्रहणं नानुवर्तिष्यते । 'ऊडिदम्' इत्यादिना अस्मा इति विभक्तेरुदात्तत्वम् । लसार्वधातुकानुदात्तत्वे यजमाने धातुस्वरः । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इत्यूहतेः परस्मैपदत्वम् ॥

[7]पूर्वार्धमुपदधाति—धर्त्रमिति ॥ धर्त्रं धारकं पुरस्तात्पुरोडाशस्यासि । धृञ् धारणे, 'गुधृविपचि' इत्यादिना त्रप्रत्ययः । अन्तरिक्षादिकं दृंह निश्चलं धारय । प्राणापानशब्दौ थाथादिस्वरेणान्तोदात्तौ । समानमन्यत् ॥

* क—सः त्वद्वत्. ख—तत्वं तद्वत्. ['सर्वं तद्वत्'—धर्त्रमित्याद्युत्तरं सर्वं इत्थमेव व्याख्येयमित्यर्थः.]

† ब्रा. ३-२-७

यूंह [8]धरुणमसि दिवं दृꣳह चक्षुः ॥ १० ॥

दृꣳह श्रोत्रं दृꣳह सजातानस्मै यजमानाय पर्यूह [9]धर्मासि दिशो दृꣳह योनिं दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह [10]चितस्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूह [11]भृगूणामङ्गिरसां त-

---

[8]अप*रार्धमुपदधाति—धरुणमिति ॥ धरुणं धारकं अपरतः पुरोडाशस्यासि । 'धारेर्णिलुक्च' इति उनन्प्रत्ययः । तत्त्वं द्युप्रभृतीनि दृंह । समानमन्यत् ॥

[9]दक्षिणार्धमुपदधाति—धर्मेति ॥ धर्म धारकं दक्षिणतः पुरोडाशस्यासि । ध्रिञो मनिन् । अत्र तु प्रजननशक्तिः प्रजा ॥

[10]अन्यान्युपदधाति—चित इति ॥ चीयन्ते उपचीयन्ते इति चितः चितयः । यस्माच्चितः स्थ, तस्मादस्य यजमानस्य प्रजार्थं पर्यूहत परितश्चिनुत । प्रत्येकमभिधानादेकवचनम् । शिष्टं स्पष्टम् ॥

[11]अङ्गारैरभिवासयति—भृगूणामिति ॥ भृगवोऽङ्गिरसश्च तपस्विनः प्रसिद्धाः । तेषां तपसा तप्यध्वं तप्तानि भवत । कर्मणि लकारः । 'देवतानामेव'[1]इत्यादि ब्राह्मणम् ॥

---

*ख—उत्त

पंसा तप्यध्वं [12]यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ॥ ११ ॥

चक्षुरष्टाचत्वारिꣳशच्च ॥ ७ ॥

[12]कपालानि विमुञ्चति—यानीति ॥ इष्टिसंस्थानकालभाविनोपि विमोकमन्त्रस्य प्रासङ्गिकमिहाम्नानम् । इयं चतुष्पदानुष्टुप्; यणादेशाकरणेन प्रथमतृतीयौ पूरणीयौ । विधायको वेधाः अध्वर्युः । विध विधाने, असुन्प्रत्ययः, उञ्छादित्वादन्तोदात्तः, व्यत्ययेन बहुवचनम्, एको ह्यध्वर्युरुपदधाति । यानि कपालानि घर्मे अङ्गारे वेधसः उपचिन्वन्ति उपहितवन्तः । वर्तमानसामीप्ये लट् । तानि कपालानि इन्द्रवायू विमुञ्चताम्; ध्रुवमसीत्यादिमन्त्रैरुपहितानां तावेव विमोचकाविति भावः । 'नोत्तरपदेनुदात्तादौ' इत्युभयपदप्रकृतिस्वरत्वे निषिद्धे समासान्तोदात्तत्वम् । किमुपधानं विमोकार्थं? इत्यत आह—पूष्णः पोषकस्याग्नेः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । तस्य व्रते हविश्श्रपणलक्षणे कर्मणि अपीते समाप्ते इदानीं विमुञ्चतामिति । 'सं ते मनसा मनः'* इत्यादिवदपीत्युपसर्गश्रुतेर्योग्यं क्रियापदमध्याह्रियते । उपचिन्वन्तीत्यत्र 'सतिशिष्टोपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते' इति वचनाल्लसार्वधातुकाद्युदात्तत्वम् । 'चतुष्पदयर्चा'† इत्यादि ब्राह्मणम् ॥

इति सप्तमोनुवाकः.

*सं. १-३-१० †ब्रा. ३-२-७

[1]सं व॑पामि [2]समापो॑ अ॒द्भिर॑ग्मत॒ समोष॑ध-
यो॒ रसे॑न॒ सꣳ रे॒वती॒र्जग॑तीभि॒र्मधु॑मती॒र्मधु॑म-

---

[1]पिष्टानि संवपति—समिति ॥ समित्येकीभावे ; सह प्रक्षिपामि । सावित्रशेषश्चायम् । 'अग्नये जुष्टम्' इत्यपि लभ्यते ॥

[2]प्रणीता मदन्तीरानीयमानाः प्रतिमन्त्रयते—समाप इति वस्वष्टवस्वादित्यपद्या उपरिष्टाद्बृहत्या ॥ आपः प्रणीतालक्षणाः, अद्भिर्मदन्तीलक्षणाभिः, समग्मत सङ्गच्छन्ताम् । 'ऊडिदम्' इत्यादिना असर्वनामस्थानविभक्तेरुदात्तत्वम् । 'छन्दसि लुङ्लङ्लिटः' इति लङ्, 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम्, 'बहुलं छन्दसि' इति शपो लुक्, 'आत्मनेपदेष्वनतः' इत्यदादेशः। यद्वा—तेनैव लुङ्, 'मन्त्रे घस' इत्यादिना च्लेर्लुक्, 'गमहन' इत्युपधालोपः । किञ्च, ओषधयः पिष्टलक्षणाः रसेनानीयमानेन द्विप्रकारेण रसेन जलेन सङ्गच्छन्ताम् । ओषा धीयन्त आस्वित्योषधयः । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् , ओषशब्दो घञन्त आद्युदात्तः, 'कर्मण्यधिकरणे च' इति दधातेः किप्रत्ययः । एवं परोक्षवदभिधायेदानीं प्रत्यक्षवदुच्यते—रेवतीः रेवत्यः धनवत्यः सर्वधनकारणत्वात् । 'रयेर्मतौ बहुलम्' इति सम्प्रसारणम् , 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् , 'ह्रस्वनुड्भ्यां मतुप्' इत्यत्र 'रेशब्दाच्चोपसङ्ख्यानम्' इति मतुप उदात्तत्वं, वत्वं च । ईदृश्यो यूयं जगतीभिस्संसृज्यध्वं संसृष्टा भवत । कर्मणि लकारः । जगतीभिः जङ्गमस्वभावाभिः । 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवत्' इति गमेरतिप्रत्ययः, मकारलोपः, द्विर्वचनं च निपात्यते, 'उगितश्च' इति ङीप्, 'अभ्यस्तानामादिः' इत्याद्यु-

**तीभिस्सृज्यध्व[3]मद्भ्यः परि प्रजातास्थ सम- द्भिः पृच्यध्वं [4]जनयत्यै त्वा संयौ[5]म्यग्नये**

दात्तत्वम् । शतृवद्भावेन लसार्वधातुकत्वात् प्रत्ययस्यानुदात्तत्वम् । तथा मधुमतीः मधुमत्यः मधुरा यूयं मधुमतीभिस्संसृज्यध्वम् । एतदुक्तं भवति—हे आपः रेवत्यो मधुमत्यश्च यूयं जगतीभिर्मधुमतीभिश्च ओषधीभिस्संसृज्यध्वम्, इति । 'आपो वा ओषधीर्जिन्वन्ति '*इत्यादि, 'आपो वै रेवतीः'*इत्यादि च ब्राह्मणम् ॥

[3]अपः परिप्लावयति—अद्भ्य इति गायत्र्यैकपदया यजुरन्तया॥ हे ओषधयः यूयं अद्भ्यः परिप्रजाताः अद्भ्य एव सर्वास्सम्भूताः । यस्मादेवं स्थ, तस्मादाभिरद्भिस्सम्पृच्यध्वं सम्पृक्ता भवत । कर्मणि लकारः । अद्भिस्सम्पर्केण युष्माकमभिवृद्धिरिति । 'यथा सुवृष्टः'*इत्यादि ब्राह्मणम् । 'ऊडिदम्' इत्यादिना अद्भ्यो विभक्तेरुदात्तत्वम् । प्रकृष्टा जाताः प्रजाता इति प्रादिसमासः प्राचार्यवत् । गतित्वाभावात् अव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा— अन्तर्भावितण्यर्थात् कर्मणि निष्ठायां 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[4]आलोडयति—जनयत्या इति ॥ जनयत्यै प्रजानां जननाय त्वां संयौमि मिश्रीकरोमि । 'ओमेरतिः' इति विधीयमानोतिप्रत्ययो बहुलवचनाज्जनेर्ण्यन्तादपि भवति । 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वात् णिलोपाभावः ॥

[5]व्यूह्याभिमृशति—अग्नय इति ॥ अग्न्यर्थं त्वामभिमृशामीति शेषः ॥

त्वा[6]ग्नीषोमाभ्यां [7]मखस्य शिरोऽसि [8]घर्मोऽसि विश्वायु[9]रुरु प्रथस्वोरु ते यज्ञपतिः प्रथतां [10]त्वचं गृह्णी[11]ष्वान्तरितꣳ रक्षोऽन्तरिता अरा-

[6]अग्नीषोमाभ्यामित्यत्र त्वेत्यनुषज्यते । पूर्ववच्छ्लेषः । अभिमर्शेन चान्यस्माद्व्यावृत्तिः क्रियते ॥

[7]पिण्डं करोति—मखस्य शिरोसीति ॥ यज्ञो वै मखः, तस्य शिरः मुख्यमङ्गमसि, प्राधान्यात् ॥

[8]अधिश्रयति—घर्म इति ॥ घर्मः प्रवर्ग्य आदित्यो वा, स एवासि, उष्णत्वात् । विश्वमायुर्येन क्रियत इति विश्वायुः, विश्वायुर्नामासि । ' बहुव्रीहौ विश्वं संज्ञायां ' इति पूर्वपदान्तोदात्तत्वम् ॥

[9]प्रथयति—उर्विति ॥ उरु यथा भवति तथा प्रथस्व । यज्ञपतिः यजमानः अनेन तवोरुप्रथनेन उरु प्रथतां पश्वादिभिः । ' पत्यावैश्वर्ये ' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[10]श्लक्ष्णीकरोति—त्वचमिति ॥ त्वचं गृह्णीष्व त्वचा अतिश्लक्ष्णतनूर्भव । ' सर्वमेवैनꣳ सतनुम् ' *इत्यादि ब्राह्मणम् ॥

[11]पर्यग्नि करोति—अन्तरितमिति यजुरादिकयैकपदया गायत्र्या ॥ अन्तरितं तिरोहितमपनीतं । ' अन्तरपरिग्रहे ' इति गतिसंज्ञिकत्वात् ' गतिरनन्तरः ' इति पूर्वपदप्रकृतिस्वरत्वम् । व्याख्यातमन्यत् । ' घर्मो वा एषोशान्तः ' *इत्यादि ब्राह्मणम् ॥

*ब्रा ३-२-८ †सं.१-१-२.[2]

तयो [12] देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाकेऽग्निस्ते तनुवं माति धा [13] गग्ने

[12]श्रपयति—देव इति ॥ देवस्सविता सर्वस्य प्रेरकः त्वां श्रपयतु पक्कं करोतु । किमर्थं?—वर्षिष्ठे वृद्धतमे नाके सुखरूपे स्वर्गे निमित्ते । 'निमित्तात्कर्मयोगे' इति सप्तमी । नाके स्वर्गार्थं त्वां श्रपयतु । सप्तम्यर्थमेवाधिशब्दो द्योतयति । 'अधिपरी अनर्थकौ' इति कर्मप्रवचनीयसंज्ञा । यद्वा—देवस्सविता त्वां श्रपयतु । कीदृशं?—वर्षिष्ठे अधिनाके, योयं दिवि नाको नामाग्निः वृद्धतमो रक्षसां हन्ता तस्मिन्नधि तेनेश्वरेण रक्ष्यमाणं त्वां श्रपयतु । 'अधिरीश्वरे' इति कर्मप्रवचनीयत्वम् । 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' इति स्वामिविशेषे द्योत्ये स्वामिविशेषात्सप्तमी, यथा 'अधिब्रह्मदत्ते पञ्चालः' इति । 'पुरोडाशं वा अधिश्रितम्'* इत्यादि ब्राह्मणम् । किञ्च—अग्निस्ते तनुवं मातिधाक् कृशावस्थामतीत्य मा धाक्षीत् । दहेर्लुङि, च्लेस्सिचि, हलन्तलक्षणा वृद्धिः, 'बहुळं छन्दसि' इतीडभावः, हल्ङ्यादिलोपसंयोगान्तलोपौ, घत्वचर्त्वभषूभावाः । 'तन्वादीनां छन्दसि बहुळम्' इति तनोतेरुवङादेशः ॥

[13]गार्हपत्यमभिमन्त्रयते—अग्न इति ॥ व्याख्यातम् † ॥

[14]भस्मनाभिवासयति—समिति ॥ ब्रह्मणा बृहता अनेन भस्मना संपृच्यस्व संपृक्तो भव हे पुरोडाश । पृचेः कर्मणि लकारः । 'मस्तिष्को वै पुरोडाशः'* इत्यादि ब्राह्मणम् । 'पशोर्वै प्रतिमा पुरोडाशः'* इति च ब्राह्मणम् ॥

*ब्रा. ३-२-८. †मं. १-१-४ 17

हृव्यꣳ रक्षस्व [14]सं ब्रह्मणा पृच्य [15]स्वैकृताय स्वाहा द्वितायु स्वाहा त्रितायु स्वाहा ॥१३॥

सविता द्वाविꣳशतिश्च ॥ ८ ॥

[1]आदंद [2]इन्द्रस्य बाहुरसि दक्षिणस्सहस्र-

---

[15]पात्रनिर्णेजनीरपो निनयति—एकतायेति ॥ एकतादयस्संज्ञा-शब्दाः 'तत एकतोजायत '* इत्यादिब्राह्मणे प्रसिद्धाः तद्वाच्याः पित्रादयः अग्निष्वात्तादयः, तेभ्य इमा आहुतयस्सन्त्विति स्वयमेव सरस्वत्याह; न त्वहं मनुष्य इति । एकतोभिपातादस्यास्ति जन्मेत्येकतः । अर्शआदेराकृतिगणत्वादच्प्रत्ययः, 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वादव्ययानां भमात्रे टिलोपः, अस्तिसामानाधिकरण्याभावेपि 'बहुळं छन्दसि' इति मत्वर्थीयो दृश्यते, यथा 'सोन्तर्वानभवत्'† इति । एवं द्वितस्त्रितोपि द्रष्टव्यः । 'देवा वै हविर्भूत्वाब्रुवन्'* इति ब्राह्मणम् ॥

इत्यष्टमोनुवाकः.

---

[1]स्फ्यमादत्ते—आदद इति ॥ सावित्र‡शेषोयम् ॥

[2]स्फ्यमनुमन्त्रयते—इन्द्रस्येति ॥ 'स्वाङ्गाख्यायामादिर्वा' इति दक्षिणशब्द आद्युदात्तः । बाहुर्विशेष्यते—सहस्रभृष्टिः अनेकपरिवारः शत्रूणां निवारकः । शततेजा बह्ववधानः§ तद्वत्त्वमपीति । उभयत्रापि 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

---

*ब्रा. ३-२-८. †ब्रा. २-२-९. ‡सं. १-१-४.४ §क—बह्वपदानः.

भृष्टिश्शततेजा [3]वायुरसि तिग्मतेजाः [4]पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषं [5]मपहतो-

[3]तीक्ष्णीकरोति—वायुरिति ॥ वायुरसि वायुरिव क्षिप्रकार्यसि। कुत इत्यत आह—तिग्मतेजाः तीक्ष्णदीप्तिः निशितधारत्वात्। तादृशो हि त्वमसि। पूर्ववत्प्रकृतिस्वरत्वम् ॥

[4]बर्हिः प्रहरति—पृथिवीति ॥ हे पृथिवि देवयजनि देवयागाधिकरणभूते त्वदीयाया ओषध्या मूलं मा हिंसिषम् अनेन स्फ्यप्रहारेण न विनाशयामि। प्रथमस्यामन्त्रितस्य षाष्ठिकमाद्युदात्तत्वम्। 'नामन्त्रिते समानाधिकरणे' इति पूर्वस्याविद्यमानवत्त्वनिषेधाद्द्वितीयः पदात्परत्वान्निहन्यते। ओषधिशब्दस्य दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्। ओषशब्दो घञन्त आद्युदात्तः। 'विषाद्वै नामासुरः'* इति ब्राह्मणं। तेन ब्राह्मणोक्तमेध्यत्वाभिप्रायं पृथिव्या देवयजनत्वम्। यथा 'मेध्यामेवैनां देवयजनीं करोति'* इति ॥

[5]सतृणं पुरीषमादत्ते—अपहत इति ॥ अपहतोपनीतः। 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम्। 'अररुर्वै नामासुर आसीत्'* इत्यादिब्राह्मणप्रसिद्धोसुरविशेषोऽररुः, अरणशीलः गूढचारी। 'अर्तेररुः' इत्यरुप्रत्ययः। स इतः पृथिव्या अपहतः। अपादानस्य शेषत्वेन विवक्षायां षष्ठ्यर्थे चतुर्थी। 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ॥

*ब्रा. ३-२-९.

रुरुः पृथिव्यै [6]व्रजं गच्छ गोस्थानं [7]वर्षतु
तेद्यौ [8]र्बधान देव सवितः परमस्यां परावति
शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म-
स्तमतो मा मौ[9]गपहतोररुः पृथिव्यै देवय-
जन्यै [10]व्रजम् ॥ १४ ॥ गच्छ गोस्थानं

---

[6]हरति—व्रजमिति ॥ व्रजन्त्यस्मिन्निति व्रजः । ‘गोचरसंचर’ इत्यादौ घप्रत्ययान्तो निपातितः । यस्मिन्प्रदेशे पांसवस्सङ्घीभूता उत्करभावमापद्यन्ते, तं देशं गच्छति । कीदृशं?—गोस्थानम् गोशब्दस्य प्रत्याश्रावणलक्षणस्य सम्बन्धि स्थानम् । ‘छन्दाँसि वै व्रजो गोस्थानः’* इति ब्राह्मणम् । छन्दस्त्वेन तस्य स्तुतिः । तान्यपि हि गवां शब्दानां स्थानानि । कृदुत्तरपदप्रकृतिस्वरत्वम् । स्थानशब्दो लित्स्वरेणाद्युदात्तः । ननु ‘मन्क्तिन् व्याख्यानशयन’ इत्यादिना कृदुत्तरपदान्तोदात्तत्वेन भाव्यम् । तर्हि ‘परादिश्छन्दसि बहुलम्’ इत्युत्तरपदाद्युदात्तत्वं भविष्यति ॥

[7]वेदिं प्रत्यवेक्षते—वर्षत्विति ॥ ते तव स्फ्येन प्रहतायाश्शान्त्यर्थं द्यौर्वर्षतु दिविष्ठपर्जन्यद्वारेण ॥

[8–16]निवपति—बधानेति द्विपदया गायत्र्या यजुरन्तया ॥ हे देव सवितः सर्वस्य प्रेरक । परमस्यां परावति सुदूरेपि देशे स्थितं जनम् । ‘उपसर्गाच्छन्दसि धात्वर्थे’ इति वतिः । छान्दसश्चाडागमः । शतेन पाशैः बहुभिः पाशैः तं बधान

[11] वर्षतु ते द्यौ [12] र्बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौ [13] गपहतोररुः पृथिव्या अदेवयजनो [14] व्रजं गच्छ गोस्थानं [15] वर्षतु ते द्यौ [16] र्बधान देव सवितः परमस्यां परावति

अस्मिन्नुत्करे तं निश्लिष्टं स्थापय । कम्?—योस्मान्द्वेष्टि यं च वयं द्विष्मस्तमस्माकं द्वेष्टारं द्वेष्यं च बधान । बद्धं तमस्मादुत्करात् मा मौक् मा मुचः । यद्वा—परमस्यां परावति परागतौ पराजये शतेन पाशैः अस्माकं द्वेष्टारं द्वेष्यं च बधान । बद्धं च तं, अस्मात्पराजयात् मा मौक् मा मुचः । यद्वा–परमस्यां परावति पराजये पराजयार्थं तस्मिन्नुत्करे बधान । बद्धं च तं मा मुचः उत्करात्पराजयाद्वा । मुचेर्लुङि व्यत्ययेन अङं बाधित्वा च्लेस्सिजादेशः, 'बहुळं छन्दसि' इतीडभावः, हलन्तलक्षणा वृद्धिः, हल्ङ्याादिसंयोगान्तलोपौ । द्वितीये पर्याये देवयजन्या इति पृथिव्या विशेषणम्, अपहत इत्यादौ प्रथमप्रहारेण देवयागयोग्यत्वस्यापादितत्वात्* । तृतीये च पर्याये अदेवयजनत्वमसुरस्य विशेषणम्, यस्मिन्वेदिदेशमनुप्रविश्य शयाने तस्यां भुवि देवयजनं नास्ति; तेन अदेवयजनोऽसुरोपहत इति । नञ्समासे कृते अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तृतीय एव शेषः 'अररुस्ते दिवं मास्कान्' इति । अत एवोत्करस्य योयमररुस्त्वयि बद्धः, स दिवं स्वर्गं मास्कान् मा गात् ।

*ख–स्याविवक्षितत्वात्.

शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म- स्तमतो मा ॥ १३ ॥ मौगररुस्ते दिवं मा स्कान् [17]वसवस्त्वा परि गृह्णन्तु गायत्रेण छन्दसा रुद्रास्त्वा परि गृह्णन्तु त्रैष्टुभेन छन्द- सादित्यास्त्वा परि गृह्णन्तु जागतेन छन्दसा [18]देवस्य सवितुस्सवे कर्म कृण्वन्ति वेधस

स्कन्देर्लुङि हलन्तलक्षणा वृद्धिः, 'बहुलं छन्दसि' इतीडभावः, 'झलो झलि' इति सिचो लोपः, हल्ङ्यादिसंयोगान्तलोपौ। 'भ्रातृव्यो वा अररुः'* इत्यादिब्राह्मणम् ॥

[17]वेदिं परिगृह्णाति—वसव इति ॥ वसवोष्टौ । अष्टाक्षरा गायत्री । ते च गायत्रेण छन्दसा त्वां दक्षिणतः परिगृह्णन्तु। एकादश रुद्राः । एकादशाक्षरा त्रिष्टुप् । ते एकादशाक्षरेण त्रैष्टुभेन छन्दसा त्वां पश्चात्परिगृह्णन्तु । द्वादशादित्याः । ते द्वादशाक्षरेण जागतेन छन्दसा त्वामुत्तरतः परिगृह्णन्तु। 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थे उपसंख्यानम्' इति गायत्रादि- भ्यस्स्वार्थेऽणप्रत्ययः । तत्र त्रिष्टुप्जगतीशब्दाभ्यां उत्सादित्वा- दञ्, प्राग्दीव्यतीयत्वात्तस्योपसङ्ख्यानस्य । 'असुराणां वा इयमग्र आसीत्'* इत्यादि ब्राह्मणम् ॥

[18]खनति—देवस्येति द्विपदया गायत्र्या ॥ सवितुः सर्वप्रेर- कस्य देवस्य सवेनुज्ञायां अनुज्ञां लब्ध्वैव वेधसो विधायका

*ब्रा.३-२-९.

[21]ऋतम॑[22]स्यृ॒तस॑द॑नम[23]स्यृ॒तश्रीर॑सि॒ [24]धा अ॑सि स्व॒धा अ॑स्यु॒र्वी चा॑सि॒ वस्वी॑ चासि पुरा क्रूरस्य॑ वि॒सृपो॑ विरफ्शिन्नुदा॒दाय॑ पृ॒थि॒वीं

ऋत्विजः कर्म कुण्वन्ति । यत एवं, तस्मादहमपि देवेन सवित्राऽनुज्ञात एव वेदिं खनामि । ततो मम नापराध इति। कृविजिघांसायां, कृविहिंसाकरणयोरित्यन्ये । 'धिन्विकृण्व्योरच' इत्युप्रत्ययः, 'अतो लोपः'। 'सवजवौ छन्दसि' इति सवशब्दोऽजन्तत्वादन्तोदात्तः ॥

[21—23]उत्तरं परिग्राहं परिगृह्णाति—ऋतमसीति ॥ हे वेदे ऋतं सत्यं यज्ञो वा त्वमसि, तदाधारत्वात् । तदेवाह ऋतसदनमसीति। ऋतस्य सदनमसि गृहमसि । ऋतवादी ऋत्विक् यजमानो यज्ञो वा सीदत्यस्मिन्नित्यधिकरणे ल्युट्, कृदुत्तरपदप्रकृतिस्वरत्वम् । ऋतं श्रयति साधनत्वेनेति ऋतश्रीः । 'क्विब्वचि' इत्यादिना क्विप्, दीर्घश्च, स एव स्वरः । दक्षिणतः पश्चादुत्तरतश्च त्रय एवैते परिग्रहे मन्त्राः । 'एतावती वै पृथिवी' *इत्यादि ब्राह्मणम् ॥

[24]समीकरोति—धा इति यजुरादिकया पुराक्रूरस्येत्यादिकया त्रिष्टुभा चतुष्पदया ॥ दधातीति धाः । 'क्विप्च' इति क्विप् । हविषामाधारस्त्वमसि । स्वधा अन्नं, स्वं पुरुषं दधातीति । 'आतोऽनुपसर्गे कः', कृदुत्तरपदप्रकृतिस्वरत्वम् । स्वधैव त्वमसि, तत्साधनत्वात् । 'ईषाअक्षादिषु च्छन्दसि प्रकृतिभावमात्रं वक्तव्यम्' इति पदयोः सवर्णदीर्घत्वाभावः । उर्वी

*ब्रा. ३-२-९.

जी॒रदा॑नु॒र्यामैर॑यन् च॒न्द्रमा॑सि स्व॒धाभि॑स्तां धीरा॑सो अनु॒दृश्यं॑ यजन्ते ॥ १५ ॥

दे॒व॒यज॑न्यै व्र॒जं तमतो॒ मा विरप्शि॒न्नेका॑दश च ॥ ९ ॥

महती चासि । वस्वी वासहेतुश्चासि, पुरोडाशादिधनवत्त्वेन देवतानां धारकत्वात् । अत्र 'गुणवचनात् ङीबाद्युदात्तार्थम्' इति वसुशब्दात् ङीप् । उरुशब्दात् ङीप् ङीष् वा; न कश्चन विशेषः । ङीप्यपि 'उदात्तयणो हल्पूर्वात्' इति नद्या उदात्तत्वेन भाव्यम् । अत्र 'च वा योगे प्रथमा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । अथ* कुतोवगन्यते ईदृशी वेदिरिदानीमभूदिति तत्राह—पुरेति ॥ क्रूरस्याररुनाम्नोसुरस्य उत्करबद्धस्य विसृपः विसर्पणात् पुरा पूर्वमेव । 'सृपितृदोः कसुन्', व्यत्ययेन प्रथमा । पृथिवीं प्रथिताम् । जीरदानुः जीरोग्निः बुद्धिर्वा । 'जु' इति सौत्रो धातुः, तस्मात् 'जोरी च' इति रक्प्रत्ययः । जीरस्य दानुः दात्री जीरदानुः । 'दाभाभ्यां नुः' इति नुप्रत्ययः । 'अन्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसङ्ख्यानम्' इति पूर्वपदस्यान्तोदात्तत्वम् । यद्वा—जीवनशीलाः जीराः । 'स्फायितञ्चि' इति रक्प्रत्ययो बहुलवचनात् जीवेरपि भवति† । दानवः दातारः हविषां यजमानाः । जीरा दानवो यस्यामिति बहुव्रीहौ पूर्वपदप्रकृति-

*ग—अदः.

†अत्र जीवेः वकारलोपस्तु 'जीरदानुरिति छान्दसाद्वर्णलोपात्सिद्धम्' (६-१-६६) इति भाष्यवचनादवगन्तव्यः । नधातुलोपसूत्रभाष्ये तु 'नैतज्जीवे रूपं किन्तु रकिज्यस्संप्रसारणम्' इत्यन्यथा जीरदानुरिति साधितम्.

[1]प्रत्युष्ट॑ꣳ रक्षः प्रत्यु॑ष्टा अरा॑तयो॒ऽग्नेर्व॒स्ते-

स्वरत्वम् । ईदृशीं यां त्वां स्वधाभिरन्नैरोषधिविकारैस्सहितां उदादाय उत्क्षिप्य चन्द्रमसि ओषधीशे ऐरयन् स्थापितवन्तः यज्वानः । हे विरप्शिन्; वेद्यास्संबोधनम् । विविधं रपणं शब्दनं विरप्, उपांशुत्वादिभेदेन मन्त्राणामुच्चारणम् । तद्वन्तो विरप्शाः ऋत्विज उच्यन्ते । लोमादित्वाच्छः । तद्वति विरप्शिन् । छान्दसः स्त्रीप्रत्ययाभावः । तां तादृशीं त्वां चन्द्रमसि स्थापितां देवयजनीभूतामनुदृश्य अन्वीक्ष्य सैवेयमस्माभिस्संस्कृता वेदिरिति विज्ञाय, धीरासः प्रज्ञावन्तो यजमाना यजन्ते । 'आज्जसेरसुक्' । तस्माद्वयमपि तथैव विज्ञाय यजामः । यद्वा—हे विरप्शिन् वेदे, क्रूरस्याररुनाम्नोऽसुरस्य विसर्पणात्प्रागेव यां त्वामुदादाय चन्द्रमसि स्थिताभिस्स्वधाभिः अमृतैर्हेतुभिः जीरदानुभूतां* पृथिवीमैरयन् प्रापयन्, तां तथाविधां त्वां अनुदृश्य धीरा यजन्ते । तस्माद्वयमपि तादृशीं त्वामवगम्य यजामः इति । दासीभारादित्वाच्चन्द्रमसीति पदे पूर्वपदप्रकृतिस्वरत्वम्' । 'यदेवास्या अमेध्यम्'† इत्यादि ब्राह्मणम् ॥

इति प्रथमे नवमोनुवाकः.

---

[1]गार्हपत्ये स्रुवादीन् प्रतितपति—प्रत्युष्टमिति ॥ व्याख्यातम्‡ । तेजिष्ठेन तेजितृतमेन तीक्ष्णतमेनाग्नेस्तेजसा वो युष्मान् निष्टपामि निष्कृष्य दोषेभ्यस्तपामि । 'निसस्तपतावनासेवने' इति षत्वम् । तेजितृशब्दात् 'तुश्छन्दसि' इतीष्ठनि 'तुरिष्ठेमेयस्सु' इति तृशब्दलोपः ॥

---

*ग—दानुर्यां. †ब्रा. ३-२-९. ‡सं. १-१-२

जिंष्ठेन॒ तेज॑सा॒ निष्ट॑पामि ²गो॒ष्ठं मा नि॒र्मृ॑क्षं वा॒जिनं॑ त्वा सपत्नसा॒हꣳ सं मा॑र्ज्मि ³वाचं॑ प्रा॒णं ⁴चक्षुः॒श्रोत्रं॑ ⁵प्र॒जां योनिं॒ मा नि॒र्मृ॑क्षं वा॒जिनीं॑ त्वा सपत्नसा॒हीꣳ सं मा॑⁶र्ज्म्या॒शासा॑-

²स्रुवं सम्मार्ष्टि—गोष्ठमिति ॥ गावस्तिष्ठन्ति यत्र स गो देशः । 'घञर्थे कविधानम्' इति कः, थाथादिसूत्रेण अन्तोदात्तत्वम्, 'अम्बाम्ब' इत्यादिना षत्वम् । यस्मादहं गवां स्थानं मा निर्मृक्षम् मा विनीनशं इति प्रार्थयसे, तस्माद्वाजिनमन्नवन्तं अन्नसाधनभूतं सपत्नसाहं सपत्नानां शत्रूणां अभिभवितारं त्वां सम्मार्ज्मि शोधयामि* । स्रुवादिसम्मार्गाभावे यागाभावेन वृष्ट्यभावाद्गवादयो विनश्येयुरिति भावः । निर्मृक्षमिति मृशतेर्लुङि 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशः । सपत्नसाहमिति कर्मण्यणन्तोन्तोदात्तः ॥

³जुहूं सम्मार्ष्टि—वाचमिति ॥ अत्र मा निर्मृक्षमित्यादि वक्ष्यमाणमनुषज्यते । थाथादिस्वरेण प्राणशब्दोन्तोदात्तः ॥

⁴उपभृतं सम्मार्ष्टि—चक्षुरिति ॥ पूर्ववद्वक्ष्यमाणस्यानुषङ्गः ॥

⁵ध्रुवां सम्मार्ष्टि—प्रजामिति ॥ सपत्नसाहीमिति उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् ॥

⁶पत्नीं योक्त्रेण सन्नह्यति—आशासानेति चतुष्पदयानुष्टुभा ॥ सन्नह्ये इत्युत्तमपुरुषश्रवणात्पत्नी मन्त्रं ब्रवीति । आशासाना प्रार्थयमाना । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वम्, कृदुत्तरपदप्रकृति-

*ख. ग—शोधयानि.

नासौमनसं प्रजाः सौभाग्यं तनूम् । अग्ने-रनुव्रता भूत्वा सन्नह्ये सुकृताय कम् । सुप्र-जसस्त्वा वयः सुपत्नीरुप ॥ १६ ॥ सेदिम ।

स्वरत्वम् । किं ? सौमनसं शोभनं मनस्सौमनसम् । 'प्रज्ञादिभ्यश्च' इति मनश्शब्दात्स्वार्थे विधीयमानोण्प्रत्ययस्तदन्तादपि भवति, छन्दसि दृष्टानुविधानात् । प्रजामपत्यं । कृदुत्तरपदप्रकृतिस्वरत्वम् । सौभाग्यं भर्तुरिष्टत्वम् । 'सुभग मन्त्रे' इति विधीयमानस्यौद्गात्रादिलक्षणस्याञोऽभावे ष्यञेव क्रियते । ञित्वादाद्युदात्तत्वम्, 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः । तनूं शरीरं अविनाशां । 'कृषिचमितनि' इत्यादिना ऊप्रत्ययः । अग्नेः परिचरणलक्षणानि यानि व्रतानि तैरनुगता अनुव्रता । 'अवादयः क्रुष्टाद्यर्थे तृतीयया' इति तत्पुरुषः । 'तत्पुरुषे तुल्यार्थ' इत्यादिनाऽव्ययपूर्वपदप्रकृतिस्वरत्वम् । सुकृताय शोभनाय कर्मणे सन्नह्ये बध्ये । शोभनं कर्म सुकृतम् । भावे निष्ठा। 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् । कं सुखं यथा भवति तथा बध्ये । कर्मणि लकारः । यद्वा—कमात्मानं संनह्ये बध्नामि। नह्यतिः स्वरितेत् । 'एतद्वै पत्नियै व्रतोपनयनम्'* इत्यादि ब्राह्मणम् ॥

7पत्नी गार्हपत्यमुपसीदति—सुप्रजस इति चतुष्पदयानुष्टुभा ॥ सुप्रजसः शोभनापत्याः । 'नित्यमसिच्प्रजामेधयोः' इति समासान्तः । सुपत्नीः सुपत्न्यः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः, शोभनः पतिर्यासामिति बहुव्रीहौ 'विभाषा सपूर्वस्य' इति नका-

*ब्रा. ३-३-३.

अग्ने॑ सपत्न॒दम्भ॑नॖमद॑ब्धासो॒ अदा॑भ्यम् । [8]इ॒मं वि॒ष्यामि॒ वरु॑णस्य॒ पाश॒ं यमब॑ध्नीत सवि॒ता सुके॑तः । धा॒तुश्च॒ योनौ॑ सु॒कृत॑स्य॒ लो॒के

रोन्तादेशः, 'ऋन्नेभ्यो ङीप्', 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् पतिशब्दस्याद्युदात्तत्वात् । ईदृश्यो वयं हे अग्ने त्वामुपसेदिम उपसीदामः । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिङ् । कीदृशं?—सपत्नदम्भनं शत्रूणां विनाशसाधनम् । करणे ल्युटि, कृदुत्तरपदप्रकृतिस्वरत्वम् । यस्मादीदृशस्त्वं तस्मात् त्वामुपसीदामः । अदब्धासः त्वत्प्रसादेन केनाप्यहिंसिताः । 'आज्जसेरसुक्' । अदाभ्यं केन चिदप्यनभिभवनीयं त्वाम् । दभिः प्रकृत्यन्तरमस्तीति केचिदाहुः । 'दभेश्चेति वक्तव्यम्' इति ण्यत्, उभयत्राप्यव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

[8]योक्त्रं पत्नी विमुञ्चति—इममिति त्रिष्टुभा चतुष्पदया ॥ सन्नहनप्रसङ्गादिहाम्नातोप्ययं मन्त्रः सामर्थ्यादुत्कृष्यते । वृणोति छादयतीति वरुणं वस्त्रम् । 'कृवृतृदारिभ्य उनन्'* इत्युनन्प्रत्ययः । तस्य धारणहेतुर्यः पाशस्तमिमं योक्त्रं विष्यामि प्रमुञ्चामि । षोन्तकर्मणि, 'उपसर्गात्सुनोति' इत्यादिना षत्वम् । कीदृशं पाशं?—सविता सर्वस्य प्रेरकः यमबध्नीत बद्धवान् । बध्नातेरात्मनेपदम् । सुकेतः सुज्ञानः । कितज्ञाने, घञ्, 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—अनेन योक्त्रविमोकेन मम वरुणपाशं तमोरूपं ईश्वरेण बद्धं विमुञ्चामि । किञ्च—धातुः प्रजापतेरपि योनौ स्थाने सुकृतस्य लोके शोभनकर्मसम्बन्धिनि

*उज्ज्वलदत्तादिभिस्तु 'कृवृदारिभ्य उनन्' इति पठित्वा 'त्रोरश्च लोवा' इत्युत्तरसूत्रेणैव तरुणमिति साधितम्.

स्योनं मे सह पत्या करोमि । [9]समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याहं गच्छे समात्मा तनुवा मम । [10]महीनां पयोस्योषधीनाꣳ रसस्तस्य तेक्षीय-

लोके पत्या सह मे स्योनं सुखं करोमि, योक्त्रविमोकेन सम्यग्ज्ञाननिष्पत्तेः । सुकृतशब्दोन्तोदात्तस्वरः ॥

[9]सयोक्त्रेऽञ्जलौ उदपात्र आनीयमाने पत्नी गार्हपत्यमुपतिष्ठते*—समिति चतुष्पदयानुष्टुभा ॥ हे अग्ने गार्हपत्य, यदिदमुदपात्रेण योक्त्रं संगच्छते, तेनाहमायुषा तावत्संगच्छे संगता भूयासं । 'आशंसायां भूतवच्च' इति लट्, 'समोगमृच्छिभ्याम्' इत्यात्मनेपदम् । किञ्च—प्रजया अपत्येन वर्चसा बलेन च संगच्छे पुनः उपर्युपरि । किञ्च—अहं पत्नी भूत्वा पत्या सह संगच्छे न वियोक्ष्ये । किञ्च—ममात्मा क्षेत्रज्ञस्तनुवा अविकलेन्द्रियेण शरीरेण संगच्छताम् । अनेन कर्मणा एतत्सर्वं ममास्त्विति । तनुवेति 'तन्वादीनां छन्दसि बहुळम्' इत्युवङादेशः । ममेति 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् ॥

[10]आज्यं निर्वपति—महीनामिति ॥ महीनां गवां पयोसि । पयसो घृतात्मना परिणतत्वात् कारणरूपेण घृतं व्यपदिश्यते । भवंति हि विकारे प्रकृतिशब्दः, यथा शालीन् भुङ्क्ते इति ओदने शालिशब्दः । 'ङ्याश्छन्दसि बहुलम्' इति नामुदात्तः । किञ्च—ओषधीनां रसोसि रसभूतमसि, भक्षिततृणादिपरिणामत्वात्तस्य । दासीभारादित्वादोषधिशब्दस्य पूर्वपदप्रकृतिस्वरत्वम्,

*क—पतिं गार्हपत्यं वोपतिष्ठते. ग—पत्नी जपति गार्हपत्यं वोपतिष्ठते.

# माणस्य निः ॥ १७ ॥ वपामि [11]महीनां पयोस्योषधीनाᳫं रसोदब्धेन त्वा चक्षुषावेक्षे सुप्रजास्त्वाय [12]तेजोसि [13]तेजोनु प्रे[14]ह्यग्निस्ते

'नामन्यतरस्याम्' इति वचनादत्र नाम उदात्तत्वं न भवति। तस्यैतादृशस्य ते तव अक्षीयमाणस्य निर्वपामि आज्यराशेर्निष्कृष्य स्थाल्यां प्रक्षिपामि। यागार्थं हि निरुप्तमक्षय्यं सम्पद्यते, अत एवमुक्तम्। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अत्र 'क्रियाग्रहणं च कर्तव्यम्' इति घृतस्य संप्रदानत्वात्, 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी॥

[11]पत्नी आज्यमवेक्षते—महीनामिति॥ रसान्तं व्याख्यातम्*। अदब्धेन तिमिरादिभिरनुपहतेन चक्षुषा त्वामवेक्षे पश्यामि, सुप्रजास्त्वाय शोभनापत्यत्वाय। 'नित्यमसिच्प्रजामेधयोः' इति समासान्तः, 'अत्वसन्तस्य च' इति विधीयमानं दीर्घत्वं व्यत्ययेन त्वेपि भवति॥

[12]गार्हपत्येधिश्रयति—तेजोसीति॥ तेजः उज्ज्वलम्। असि एधि। पञ्चमलकारे रूपम्। 'अमेध्यं वा एतत्करोति'† इत्यादि ब्राह्मणम्॥

[13]आहरति—तेज इति॥ ते तव आहवनीयाख्यं तेजोनुप्रेहि अनुक्रमेण गच्छ॥

[14]आहवनीयेऽधिश्रयति—अग्निरिति॥ ते तव तेजः औज्ज्वल्यं अग्निः मा विनैत् मा विनैषीत्। माङि नयतेर्लुङि, 'बहुलं

*सं. १-१-१०[10]    †ब्रा. ३-३-४.

**तेजो॒ मा विनै॑[15]द॒ग्नेर्जि॒ह्वासि॑ सु॒भूर्दे॒वानां॒ धाम्ने॑धाम्ने दे॒वेभ्यो॑ यजु॑षेयजुषे भव [16]शु॒क्रम॑सि॒ ज्योति॑रसि॒ तेजो॑सि [17]दे॒वोव॑स्सवि॒तोत्पु॑नात्व-**

---

छन्दसि ' इतीडभावे, सिचिवृद्धौ, ' स्कोस्संयोगाद्योरन्ते च ' इति सलोपः ॥

[15]आज्यमवेक्षते—अग्नेरिति ॥ अग्नेस्त्वं जिह्वासि, जिह्वास्थानीयज्वालाहेतुत्वात् । सुभूः सुष्ठु भूतं जातं सर्वोत्कर्षेणोत्पन्नम् । देवानां स्वभूतं, देवार्थं वा जातम् । यस्मात्त्वमीदृशं, तस्माद्देवेभ्यः देवानाम् । षष्ठ्यर्थे चतुर्थी । देवार्थं वा । धाम्नेधाम्ने सर्वस्मै धारणाय । ' अनुदात्तं च ' इति द्वितीयस्याम्रेडितस्य अनुदात्तत्वम् । यथायथं स्वस्वपदास्थितये देवानां प्रभूतं भव । तदर्थं यजुषेयजुषे भव पर्याप्तं सम्भव । पूर्ववदाम्रेडितस्यानुदात्तत्वम् । ' शुक्रं त्वा शुक्रायाम् ' इत्यादिना येन येन यजुषा पुनर्गृहीष्यते, येन चावद्यते, तस्मै सर्वस्मै यजुषे प्रभूतं भव । यदि च यजुषेयजुषे प्रभवेत्, ततो धाम्नेधाम्ने प्रभवतीति भावः । ' ब्रह्मवादिनो वदन्ति । यदाज्येनान्यानि '* इत्यादि ब्राह्मणम् ॥

[16]उत्पुनाति—शुक्रमिति ॥ शुक्रं शुद्धं पूर्वमेवासि । यद्वा—शुक्रं भव । पञ्चमो लकारः । ज्योतिरसि दीप्तमसि । तेजोसि तेजनं दीपनं देवानामासि । ' तद्वा अतः पवित्राभ्याम् '† इत्यादि ब्राह्मणम् ॥

[17]प्रोक्षणीरुत्पुनाति—देव इति गायत्र्या त्रिपदया ॥ सा च व्याख्याता‡ । ' अथाज्यवतीभ्याम् '† इत्यादि ब्राह्मणम् । ' तत्रोभयोर्मीमांसा '† इत्यादि च ॥

---

*ब्रा. ३-३-५. †ब्रा. ३-३-४. ‡सं. १-१-५[1]

च्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिः[18] शुक्रन्त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि [19]ज्योतिस्त्वा ज्योतिष्[20]यर्चिस्त्वार्चिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि ॥ १८ ॥

उप नो रश्मिभिश्शुक्रः षोडश च ॥ १० ॥

---

[18]जुह्वामाज्यं गृह्णाति—शुक्रमिति ॥ शुक्रं शुद्धं त्वां शुक्रायां शुद्धायां जुह्वां गृह्णामि । शिष्टं व्याख्यातम्* । आघारार्थत्वात्, प्रयाजार्थत्वाच्च 'धाम्नेधाम्ने' इत्याद्युपपद्यते । एवमुपभृद्ध्रुवयोरपि वेदितव्यम् ॥

[19]उपभृति गृह्णाति—ज्योतिरिति ॥ ज्योतिः दीप्तं त्वां, ज्योतिषि दीप्तायामुपभृति गृह्णामि । 'धाम्नेधाम्ने' इत्यनुषज्यते ॥
[20]ध्रुवायां गृह्णाति—अर्चिरिति ॥ अर्चिषो हेतुत्वादर्चिश्शब्देनोच्यते । तादृशं त्वां अर्चिषि देवानामर्चनसाधने ध्रुवायां गृह्णामि । शिष्टं स्पष्टम्* ॥

इति दशमोनुवाकः.

---

*सं. १-१-१०.15

[1]कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा [2]वेदिरसि बर्हिषे त्वा स्वाहा [3]बर्हिरसि स्रुग्भ्यस्त्वा

[1]इध्मं प्रोक्षति—कृष्ण इति ॥ कृष्णः कृष्णमृगः । 'कृष्णस्य मृगाख्या चेत्' इति वचनान्मृगाख्यायामाद्युदात्तत्वम् । आखरेष्ठः आखनति समन्ताद्भुवं मूलैरवदारयतीत्याखरो वनस्पतिः । 'खनतेर्डेरो वक्तव्यः' इति खनतेर्डरप्रत्ययः । तत्र तिष्ठतीत्याखरेष्ठः । 'सुपि स्थः' इति कः, तत्पुरुषे कृति बहुळम्' इत्यलुक्, सुषामादित्वात् षत्वम्, थाथादिसूत्रेणोत्तरपदान्तोदात्तत्वम् । 'अग्निर्देवेभ्यो निलायत । कृष्णो रूपं कृत्वा । स वनस्पतीन्प्राविशत्'* इत्यादि ब्राह्मणोक्तो योऽग्निः स एव त्वमसीति तदाधारभूतेध्मस्तुतिः । एवंभूतं त्वामिध्ममग्नये अग्न्यर्थं प्रोक्षामीति शेषः । एवं कर्तव्यमिति स्वयमेव सरस्वत्याह । विभक्त्यन्तसमुदायात्मा निपातः स्वाहेति । संस्कारविशेषानवधारणात् नावगृह्यते ॥

[2]वेदिं प्रोक्षति—वेदिरिति ॥ वेदिः वेदयित्री हविषामाधारत्वेन प्रकाशयित्र्यसि । 'इन् सर्वधातुभ्यः' इति विदेरिन्प्रत्ययः । तां तादृशीं त्वां बर्हिषे बर्हिस्तरणार्थं प्रोक्षामि । एतच्च स्वयमेव वागाह । 'प्रजा वै बर्हिः'* इत्यादि ब्राह्मणम् ॥

[3]बर्हिः प्रोक्षति—बर्हिरिति ॥ बृहत् पर्याप्तमसि । 'बृंहेर्नलोपश्च' इतीसिप्रत्ययः । तादृशं त्वां स्रुग्भ्यः स्रुगर्थं स्रुचां धारणार्थं प्रोक्षामि । इत्याह स्वयं सरस्वती । 'सावेकाचः' इति भ्यस उदात्तत्वम् । 'प्रजा वै बर्हिः । यजमानस्स्रुचः'* इत्यादि ब्राह्मणम् ॥

*ब्रा. ३-३-६.

# स्वाहा [4]दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा [5]स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा

[4]अन्तर्वेद्यूर्ध्वाग्रं बर्हिस्स्थापयित्वा प्रोक्षति—दिव इति ॥ अग्रमध्यमूलेषु क्रमेण प्रोक्षणम् । सर्वत्र प्रोक्षामीति शेषः । यागनिर्वृत्तिद्वारेण द्युप्रभृतीनां लोकानां धारणार्थं प्रोक्षणं भवति । 'ऊडिदम्' इत्यादिना दिव इति विभक्तेरुदात्तत्वम् । पृथिव्या इत्यादौ 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ॥

[5]दक्षिणस्याश्श्रोणेरुत्तरस्याः प्रोक्षणीशेषं निनयति—स्वधेति ॥ 'मासा वै पितरो बर्हिषदः'* इत्यादिब्राह्मणप्रसिद्धा ये मासनामानः पितरो बर्हिष्यागत्य सीदन्ति, तेभ्यस्स्वधा अन्नम् । कीदृशं? ऊर्क् बलप्राणनयोरुद्दीपकं भवेति । समुदायापेक्षमेकवचनम्, अन्नापेक्षं वा । किञ्च—ऊर्जा रसेन सह पृथिवीं गच्छत प्रविशत । अवयवापेक्षं बहुवचनम् । बर्हिषद इति पृषोदरादित्वात्सलोपः । 'सत्सूद्विष' इत्यादिना क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । ऊर्जेति 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । 'आतोऽनुपसर्गे कः' इति कप्रत्ययान्तः स्वधाशब्दः, थाथादिस्वरेणान्तोदात्तः ॥

[6]प्रस्तरं गृह्णाति—विष्णोरिति ॥ विष्णुः व्यापको यज्ञः । 'यज्ञो वै विष्णुः'* इति ब्राह्मणम् । तस्य स्तूपस्सङ्घातोसि । त्वदात्मना यज्ञस्संहत इति स्तुतिः । 'स्त्यस्सम्प्रसारणमुच्च' इति पप्रत्ययः, उकारश्चान्तादेशः, 'दीर्घश्च' इति तत्रानुवर्तते, वृषादित्वादाद्युदात्तत्वम् ॥

*ब्रा. ३-३-६.

पृथिवीं गच्छत [6]विष्णोस्तूपो [7]स्यूर्णाम्रदसन्त्वा स्तृणामि स्वासस्थं देवेभ्यो [8]गन्धर्वोसि विश्वा-

[7]बर्हिस्स्तृणाति—ऊर्णाम्रदसमिति ॥ ऊर्णा अविसूत्रं, तद्वन्मृदुः ऊर्णाम्रदाः । म्रद मर्दने, घटादिः । यस्मात् 'प्रथिम्रदि' इत्यादिना उर्विधीयते तस्मादसुन् । 'उपमानानि सामान्यवचनैः' इति तत्पुरुषः । 'तत्पुरुषे तुल्यार्थे' इत्यादिना उपमानपूर्वपदप्रकृतिस्वरत्वम् । 'ऊर्णोतेश्च' इति डप्रत्ययान्तः ऊर्णाशब्दः, वृषादित्वादाद्युदात्तत्वम् । तादृशं त्वां स्तृणामि । पुनश्च विशेष्यते—स्वासस्थं, शोभनास्सुखवन्त आसितारः स्थातारश्च यस्मिन् स स्वासस्थः; आसितारः आसाः । आस उपवेशने, पचाद्यच् । स्थातारः स्थाः । विच्* । समाहारद्वन्द्वः । सु आसस्थं शोभनमासस्थं यस्मिन्निति स्वासस्थम् । 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—आसनमासस्थम् । 'दृशसददमितमिभ्यश्च'† इति चकारस्यानुक्तसमुच्चयार्थत्वादासेरथप्रत्ययः । बहुलवचनात् सकारश्च मध्यम उपजायते । शोभनमासस्थं यस्मिन्निति बहुव्रीहिः । स एव स्वरः । देवेभ्य इति षष्ठ्यर्थे चतुर्थी । देवानां स्वासस्थम् । यद्वा—स्वासस्थं त्वां देवार्थं स्तृणामि । तादर्थ्ये चतुर्थी ॥

[8]मध्यमं परिधिं परिदधाति—गन्धर्व इति ॥ विश्वानि वसून्यस्मिन्निति बहुव्रीहौ 'विश्वस्य वसुराटोः' इति पूर्वपदस्य

*क. ग—क्विप्.

†अयं ख. पुस्तकपाठः. ग. पुस्तके तु "दृशसदमिवमिभ्यश्च" इति. इदं सूत्रं उणादिषु अन्यत्र वा नोपलभ्यते. उज्ज्वलदत्तीयायां उणादिसूत्रवृत्तौ तु अथप्रत्ययप्रकरणे (उ. ३-११४) बाहुलकात् दृशमिदमिभ्यश्च इत्युक्त्वा 'दरथः' इत्यादिकमुदाहृतम्.

वसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ई-डित [9]इन्द्रस्य बाहुरसि ॥ ११ ॥ दक्षिणो यज-मानस्य परिधिरिड ईडितो [10]मित्रावरुणौ त्वो-त्तरतः परि धत्तां ध्रुवेण धर्मणा यजमानस्य

दीर्घत्वम् । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्। विश्वावसुर्नाम गन्धर्वः, स शत्रु*निग्रहसमर्थः, स एव त्वमसीति परिधेः स्तुतिः । यस्मादेवं तस्माद्विश्वस्मादीषतः हिंसकात् राक्षसा-देर्जनात् । ईषगतिहिंसादानेषु, अनुदात्तेत्, भौवादिकः, व्यत्ययेन शतृप्रत्ययः, 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वेन धातोरेव स्वरः । यजमानस्य परिधिः परितस्सर्वतो धाता रक्षकस्त्वमसि । 'उपसर्गे घोः किः' इति किप्रत्यये कृदुत्तरपदप्रकृतिस्वरत्वम् । किञ्च—इडन्नं पशवश्च तद्वान् इडः, तत्साधनत्वात् । अर्श आदि-त्वादच् । अत एव सर्वैरीडितस्स्तुतः ॥

[9]दक्षिणं परिदधाति—इन्द्रस्येति ॥ इन्द्रस्य यो दक्षिणो बाहुः महावीर्यः, स एव त्वमसीति दक्षिणस्य परिधेस्स्तुतिः । 'स्वाङ्गा-ख्यायामादिर्वा' इति दक्षिणशब्द आद्युदात्तः । गतमन्यत्† ॥

[10]उत्तरं परिदधाति—मित्रावरुणाविति ॥ ध्रुवेण अचलेन नित्येन धर्मणा कर्मणा मित्रावरुणाविव च त्वामुत्तरतः परिधत्ताम् । समा-नमन्यत्† । 'देवताद्वन्द्वे च' इति मित्रावरुणशब्दे पूर्वोत्तरपदयोः प्रकृतिस्वरत्वम् ॥

*ग—सर्वशत्रु. †सं. १-१-११⁸

**परि॒धिरि॒ड इ॑ड॒ित[11]स्सूर्य॑स्त्वा पु॒रस्ता॑त्पातु॒ कस्या॑श्चिद॒भिश॑स्त्या [12]वी॒तिहो॑त्रं त्वा कवे द्यु॒मन्त॒ꣳ**

[11]सूर्येण पुरस्तात् परिधानकार्यं करोति—सूर्य इति ॥ सूर्य एव त्वां पुरस्तात् पातु रक्षतु । कस्मात्?—कस्याश्चित् यतः कुतश्चित् अभिशस्त्याः अपरिमितायाः अभिशापाद्रक्षःप्रभृतिप्रयुक्तात् । शसु हिंसायाम्, 'तितुत्रतथसि' इतीट्प्रतिषेधः, 'तादौ चनितिकृत्यतौ' इति गतेः प्रकृतिस्वरत्वम्, 'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जम्' इत्यभिशब्दोन्तोदात्तः । एवं कस्याश्चिदित्यत्र 'सावेकाचः' इति प्राप्तं विभक्त्युदात्तत्वं 'न गोश्वन्' इति प्रतिषिध्यते ॥

[12]ऊर्ध्वे समिधावादधाति—वीतिहोत्रमिति त्रिपदया गायत्र्या । वीतिहोत्रं इष्टस्तोत्रम् । वीतेः कान्तिकर्मणो 'मन्त्रे वृष' इत्यादिना कर्मणि क्तिन्प्रत्यय उदात्तः । वेतव्या कमितव्या होत्रा वाक् स्तोत्ररूपा होतृव्यापारो वा यस्य तं त्वा । हे कवे मेधाविन् । अग्ने द्युमन्तं दीप्तिमन्तम् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । बृहन्तं महान्तं समिधीमहि प्रागेव दीप्तिमन्तं सन्तं अनया समिधा सम्यग्दीपयामः । इन्धेर्लिङि, 'बहुलं छन्दसि' इति विकरणस्य लुक् । यद्वा—'छन्दस्युभयथा' इत्यार्धधातुकत्वात् विकरणाप्रसङ्गः । सार्वधातुकत्वेन ङित्त्वादनुनासिकलोपः । अध्वरे अध्वरार्थम् । निमित्तात्सप्तमी । ध्वृ हूर्छने, हूर्छनं कौटिल्यम् । ध्वरन्तीति ध्वराः रक्षःप्रभृतयः । पचाद्यच् । ते यत्र न सन्ति सः अध्वरः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । तादृशाय यज्ञाय त्वां समिधीमहि ॥

# समिधीमह्यग्ने बृहन्तमध्वरे [13]विशो यन्त्रे स्थो [14]वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीद [15]जुहू

[13]विधृती सादयति—विश इति ॥ विशः प्रजायाः यन्त्रे यमने धारिके स्थः । 'गुधृविपचि' इत्यादिना यमेस्त्रप्रत्ययः । 'सावेकाचः' इति विशः परस्याः षष्ठ्या उदात्तत्वम् ॥

[14]तयोः प्रस्तरं सादयति—वसूनामिति ॥ वस्वादयः प्रसिद्धा देवताः यज्ञभागिन्यः । तासां सदस्त्वेन विधृत्योः स्तुतिः ॥

[15]तत्र जुहूं सादयति—जुहूरिति ॥ असि घृताचीत्यादिकं वक्ष्यमाणं जुह्वादिभिः प्रत्येकमभिसम्बध्यते । हूयतेऽनयेति जुहूः । 'द्युतिगमिजुहोतीनां द्वे च' इति क्विप्, 'जुहोतेर्दीर्घश्च' इति दीर्घोनुवर्तते* । जुहूस्त्वमसि । त्वया खलु हूयते । पुनश्च विशेष्यते—घृताची त्वम्, घृतमञ्चति गच्छति धारकत्वेनेति घृताची । ऋत्विगादिना क्विप् । अनुनासिकलोपे 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः । सा त्वं प्रियेण नाम्ना घृतसम्बन्धेन सर्वस्य प्रीतिहेतुना घृताचीति नाम्ना उपलक्षितासि । 'तासामेतदेव प्रियं नाम । यद्घृताची '† इत्यादि ब्राह्मणम् । ईदृशेन नाम्ना प्रिये सदसि प्रस्तराख्येस्मिन् सदने सीद । 'यजमानो वै प्रस्तरः '† इति यजमानत्वसंस्तवान्नाममात्रेण प्रस्तरस्य प्रियत्वम् ॥

*'द्युतिगमि' प्रभृति 'अनुवर्तते' इत्यन्तस्य वाक्यस्य स्थाने, क. ग. पुस्तकयोः एवं पाठः—'जुहोतेर्दीर्घश्च इति क्विप्रत्ययः; द्वेच इति तत्रानुवर्तते'

†ब्रा. ३-३-६.

[16]उपभृ[17]द्ध्रुवासि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सी[18]दैता असदन्थ्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियम् ॥ २० ॥

बाहुरसि प्रिये सदसि पञ्चदश च ॥ ११ ॥

---

[16]उपभृतं सादयति—उपभृदिति ॥ उपेत्य जुहूं बिभर्तीति उपभृत्। 'अन्येभ्योपि दृश्यते' इति क्विप्। ईदृशी त्वमसि । समानमन्यत् ॥

[17]ध्रुवां सादयति—ध्रुवेति ॥ ध्रुवा निश्चला । यत्रैव साद्यते तत्रैव धार्यते न चाल्यते प्राक्समिष्टयजुष इति ध्रुवा । तादृशी त्वमसि । शिष्टं स्पष्टम् ॥

[18]स्रुचोभिमन्त्रयते—एता इति यजुरन्तया त्रिष्टुभैकपदया ॥ सुकृतस्य शोभनस्य कर्मणः यागलक्षणस्य लोके स्थाने । 'सूपमानात् क्तः' इति क्तान्तमन्तोदात्तम् । एतास्स्रुचः असदन्, सदासि मया सादितत्वात् । छान्दसो लुङ्, पुषादि*त्वादङ् । तास्स्रुचः हे विष्णो सर्वस्य पालक पाहि, यज्ञं पाहि, यज्ञपतिं यजमानं च पाहि । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । यज्ञनियं यज्ञस्य नेतारं मां च पाहि । यज्ञं नयतीति 'सत्सूद्विष' इत्यादिना क्विप्, 'तन्वादीनां छन्दसि बहुलम्' इति इयङादेशेन 'एरनेकाचः' इति यणादेशो बाध्यते, कृदुत्तरपदप्रकृतिस्वरत्वम् । समानपादत्वाभावात् प्रथमवर्जं तिङन्तानां निघाताभावः ॥

इति एकादशोनुवाकः.

---

*क—लृदित्त्वा.

[1]भुव॑नमसि॒ वि प्र॑थस्वाग्ने॒ यष्ट॑रि॒दं नमः॑ । [2]जुह्वेह्य॒ग्निस्त्वा॑ ह्वयति देवय॒ज्याया॒ [3]उप॑भृ॒देहि॑ दे॒वस्त्वा॑ सवि॒ता ह्व॑यति देवय॒ज्याया॒ [4]अग्ना॑विष्णू

[1]अग्रेण जुहूप्रभृतौ* प्राञ्चमञ्जलिं करोति—भुवनमिति यजु-रादिकयैकपदया गायत्र्या ॥ हे अग्ने यष्टः यागस्य निर्वर्तक। 'अग्निर्वै देवानां यष्टा '† इति ब्राह्मणम् । पादादित्वादग्ने इति न निहन्यते । 'आमन्त्रितं पूर्वमविद्यमानवत् ' इति तस्या-विद्यमानत्वात् यष्टरित्यपि न निहन्यते । द्वयोरपि षाष्ठिक-माद्युदात्तत्वम् । त्वं भुवनमसि, त्वदायत्तत्वात्समस्तभूतजातस्य। तस्मात् विप्रथस्व विस्तीर्णो भव । तुभ्यमिदं नमः, अयमञ्जलि-स्त्वां प्रीणयितुं क्रियते ॥

[2]दक्षिणेन जुहूमादत्ते—जुह्विति ॥ हे जुहु एहि अस्मद्धस्त-मागच्छ । यतोग्निस्त्वां देवयज्यायै देवयागार्थमाह्वयति । 'छन्दसि निष्टर्क्य ' इत्यत्र देवयज्याशब्दो यप्रत्ययान्तो निपातितः । 'आग्नेयी वै जुहूः '† इत्यादि ब्राह्मणम् ॥

[3]सव्येनोपभृतमादत्ते—उपभृदिति ॥ हे उपभृत् एहि । यत-स्सर्वस्य प्रेरकस्सविता देवयज्यायै आह्वयति । 'सावित्र्युपभृत् '† इत्यादि ब्राह्मणम् ॥

[4]अत्याक्रामं जपति—अग्नाविष्णू इति ॥ अग्निराहवनीयः, विष्णुर्यज्ञः, यज्ञश्चान्तर्वेदि स्रुचामग्रत आस्ते ; तावाह हे अग्नाविष्णू युवामहं मावक्रमिषम् अवक्रम्य मा गाम् । 'नेटि ' इत्यादिना

*ख. ग—जुहूमुपभृतं वा. †ब्रा. ३-३-७.

**मा वा॒मवं॑ क्रमिषं॒ वि जि॑हाथां॒ मा मा॒ सन्ता॑सं लो॒कं मे॑ लोककृतौ कृणुतं॒ [5]विष्णो॒स्स्थान॑म-[6]सी॒त इन्द्रो॑ अकृणोद्वी॒र्या॑णि सम॒ारभ्यो॒र्ध्वो**

---

वृद्धिप्रतिषेधः । तदर्थं युवां विजिहाथां मम मार्गप्रदानार्थं विगच्छतम् । मा मां च मा सन्तासं सन्तप्तं मा कार्ष्टम् । 'झलो झलि' इति सिचो लोपः, 'वदव्रज' इति वृद्धिः । वां लोककृतौ स्थानप्रदौ मम च लोकं स्थानं कृणुतं कुरुतम् । 'धिन्विकृण्व्योरच' इत्युप्रत्ययः । 'अतो लोपः' ॥

[5]स्थानं कल्पयति—विष्णोरिति ॥ विष्णोर्यज्ञात्मनः स्थानमसि, अतः प्रशस्तेस्मिन् स्थाने स्थित्वा यागं निर्वर्तयामीति भावः ॥

[6]आघारमाघारयति—इत इति ॥ इतः अस्मादाघारात् समारभ्य इन्द्रो वीर्याणि वृत्रवधादीनि अकृणोत् करोति स्म । 'अनुदात्ते च कुधपरे' इति प्रकृतिभावः । पूर्ववदुप्रत्ययः । किञ्च—अयमाघार ऊर्ध्वः ऊर्ध्वलोकगामी भूत्वा अध्वरः अध्वर्यः* । 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । पूर्ववत्प्रकृतिभावः । हिंसकरहितः केनचिदप्यहिंसितश्च भूत्वा तमिन्द्रं दिविस्पृशमकरोत् । 'स्पृशोनुदके क्विन्' 'तत्पुरुषे कृति बहुलम्' इत्यलुक्, कृदुत्तरपदप्रकृतिस्वरः । 'आघारमाघार्यमाणमनु समारभ्य '† इत्यादि ब्राह्मणम् । कोस्य विशेषः यत एवमकरोत्? इत्याह—इन्द्रावान् इन्द्रेण देवतया तद्वान् । 'अन्येषामपि दृश्यते' इति दीर्घः । यतोयमाघार इन्द्रावान् तस्मादयमेव खलु यज्ञपतेर्यजमानस्य । 'पत्यावैश्वर्ये' इति पूर्वपद-

---

*ग—अध्वकर्तृकः. [अध्वर्तृकः?] †ब्रा. ३-३-७.

अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्थ्स्वाहा [7]बृहद्भाः [8]पाहि माग्ने दुश्चरितादा मा

प्रकृतिस्वरत्वम् । अह्रुतः अकुटिलः निश्चितफलो यज्ञः । स्वाहा स्वयमेवेत्थं सरस्वत्याह । अह्रुत इति 'ह्रु ह्वरेश्छन्दसि' इति ह्रुभावः । होमपक्षे स्वाहेति प्रक्षेपार्थो निपातः ॥

[7]स्रुचमुद्गृह्णाति—बृहदिति ॥ क्रियाविशेषणम् । भासत इति भाः । 'भ्राजभास' इत्यादिना क्विप् । यस्मादयमग्निरनेनाघारेण भृशं भासते ज्वलति तस्मात्स्रुचमुद्गृह्णामीति भावः ॥

[8]उदङ्ङत्याक्रामं जपति—पाहीति द्विपदया गायत्र्या ॥ हे अग्ने नः दुश्चरितात् प्रमादकृतनिन्दिताच्चरितात् कर्मापराधान्मां पाहि यथा कर्मापराधो न भवति तथा कुरु । 'दुर्निन्दायां' इति प्रादिसमासः । दुश्शब्देन चरितं विशेष्यते, न तु चरणम्; तेन गतित्वाभावादव्ययपूर्वपदप्रकृतिस्वरत्वम् । किञ्च—सुचरिते शोभनचरिते कर्मणि मा मां भज स्थापय । विद्यमानोप्यपराधो गुणत्वेन ग्रहीतव्य इति भावः । 'सुः पूजायाम्' इति कर्मप्रवचनीयत्वात् यद्यपि 'प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधः' इत्यस्ति, तथापि 'स्वती पूजायाम्' इति प्रादिसमासः, तेन गतित्वाभावात् 'गतिरनन्तरः' इत्यस्यापवादः, 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् न प्रवर्तते, तेन पूर्ववदव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'अग्निर्वाव पवित्रं । वृजिनमनृतं दुश्चरितम्'* इत्यादि ब्राह्मणम् ॥

*ब्रा. ३-३-७.

सुचरिते भज [9]मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्ताम् ॥ २१ ॥

अङ्क्त एकविꣳशतिश्च ॥ १२ ॥

[1]वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । [2]अथा

---

[9]जुह्वा ध्रुवां समनक्ति—मखस्येति ॥ निर्वर्तिताघारा जुहूरभिमन्त्र्यते । हे जुहु मखस्य यज्ञस्य शिरः शिर इव उत्तमाङ्गमसि । तस्मात्तव ज्योतिषा घृतेन इदं ध्रौवं ज्योतिर्घृतं समक्तं संगच्छताम् । व्यत्ययेनात्मनेपदम् । 'शिरो वा एतद्यज्ञस्य । यदाघारः'* इति ब्राह्मणम् ॥

इति द्वादशोनुवाकः.

---

[1]स्रुचौ व्यूहति—वाजस्येत्यनुष्टुब्भ्यां चतुष्पदाभ्याम् ॥ वाजस्य अन्नस्य प्रसवेन उत्पत्तिहेतुना । थाथादिस्वरेणान्तोदात्तत्वम् । उद्ग्राभेणानेन जुह्वा ऊर्ध्वग्रहेण मामुदग्रभीत् । 'छन्दसि लुङ्लङ्लिटः' इति लुङ् । उद्गृह्णातु उपरि स्थापयतु । कः ?—इन्द्रः, अर्धर्चान्तरे श्रुतत्वात् । 'छन्दस्युत्पूर्वादपीष्यते स्रुगुद्यमननिपतनयोः' इति ग्रहेः घञ्प्रत्ययः, 'हृग्रहोर्भश्छन्दसि' इति भत्वम्, स एव स्वरः ॥

[2]एवमनेनार्धर्चेन दक्षिणेन जुहूमुद्गृह्य अर्धर्चान्तरेण सव्येनोपभृतं निगृह्णाति—अथानन्तरं निग्राभेण सव्येनोपभृतो नीचैर्ग्रहणेन

---

*ब्रा. ३-३-७.

सपत्नाꣳ᳚ इन्द्रो॑ मे निग्राभेणाध॑राꣳ᳚ अकः । [3]उद्ग्राभं॑ च॑ निग्राभं॑ च॒ ब्रह्म॑ दे॒वा अ॑वी- वृधन् । [4]अथा॑ सपत्ना॑निन्द्राग्नी मे॑ विषूची-

मे मम सपत्नान् शत्रून् इन्द्रः अधरान्निकृष्टान्, अकः करोतु । तेनैव लुङ्, 'मन्त्रे घसह्वर' इत्यादिना च्लेर्लुक्, गुणहल्ङ्यादि-लोपौ । संहितायां 'निपातस्य च' इत्यथशब्दस्य दीर्घः । 'व्यन् सपत्ने' इति सपत्नीव सपत्न इत्युपमायामकारो निपात-नात्, 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । द्वितीयाबहुवचनसम्बन्धिनो नकारस्य 'दीर्घादटि समानपादे' इति रुत्वम्, 'आतोटि नित्यम्' इति पूर्वस्यानुनासिकत्वं, 'भो भगो अघो' इति यत्वम् । 'अनुनासिकात्परोनुस्वारः' इति केचित् ॥

[3]एवं जुहूपभृतोः उद्ग्रहणनिग्रहणे कृत्वा प्राचीं जुहूं व्यूहति— उद्ग्राभं च निग्राभं च देवा इहागताः अवीवृधन्वर्धयन्तु । 'नित्यं छन्दसि' इति णौ चङ्युपधाया ह्रस्वः ऋकारः । ब्रह्म परिबृंढं इष्टसाधनसमर्थं उद्ग्राभं च निग्राभं च । यद्वा—परं* वस्तु देवाश्चान्ये वर्धयन्तु इदमुभयमिति ॥

[4]एवं च प्रतीचीमुपभृतं प्रत्यूहति—अथेति ॥ अथ अनन्तरं इन्द्राग्नी मे मम सपत्नान् विषूचीनान् विष्वग्गतान् व्यस्यतां स्वस्थानादितश्चेतश्च विगमयताम् । विषु नाना अञ्चतीति ऋत्विगादिना क्विन्प्रत्ययः, 'विभाषाञ्चेरदिक्स्त्रियाम्' इति

*ख–वशं.

नान्व्येस्यताम् । [5]वसुभ्यस्त्वा [6]रुद्रेभ्यस्त्वा-[7]दित्येभ्यस्त्वा [8]क्तꣳ रिहाणा [9]वियन्तु वयः ।

खप्रत्ययस्स्वार्थिकः, अनुनासिकलोपः, 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घत्वम् । इन्द्रश्चाग्निश्च । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदप्रकृतिस्वरत्वे 'नोत्तरपदेनुदात्तादौ' इति विप्रतिषिद्धे समासान्तोदात्तत्वम् । 'अथ स्रुचावनुष्टुग्भ्यां वाजवतीभ्याम्*' इत्यादि ब्राह्मणम् ॥

[5-7]जुह्वा परिधीननक्ति—वसुभ्य इति ॥ अनज्मीति शेषः । वस्वादितृप्तये त्वामनज्मीति मध्यमदक्षिणोत्तराणां क्रमेण मन्त्राः, वस्वादयश्च वेदिपरिग्रहार्थमागताः एतेन परिध्यञ्जनेन प्रीयन्त इति ॥

[8]स्रुक्षु प्रस्तरमनक्ति ; तत्र जुह्वामग्राण्यनक्ति—अक्तमिति परोष्णिहा त्रिपदया भूतेन्द्रियवस्वक्षरया ॥ अक्तं कृताञ्जनमिमं प्रस्तरं रिहाणाः लिहानाः आस्वादयन्तस्ते वक्ष्यमाणाः रश्मयः । लिह आस्वादने, स्वरितेत्, वर्णव्यत्ययेन लकारस्य रेफः, व्यत्ययेनानुदात्तेत्त्वमाश्रित्यात्मनेपदम्, लसार्वधातुकानुदात्तत्वं च कृतमिति मन्यामहे । वृषादिषु वायं द्रष्टव्यः ॥

[9]उपभृति मध्यान्यनक्ति—वियन्त्विति ॥ वय इति वेर्बहुवचनमिति यास्कः† । 'वेञो डित्' इति विधीयमान इण्प्रत्ययो वेतेरपि भवति, डित्त्वाट्टिलोपः । वयः प्रजनिष्णवः आदित्यरश्मयः एतल्लेहनेन वियन्तु वृद्ध्य‡र्थं गर्भं धारयन्तु । पादादित्वान्न निहन्यते । वी गतिप्रजननकान्त्यसनखादनेषु ॥

*ब्रा. ३-३-९. †[ख. पुस्तके 'इति यास्कः' इति न.] ‡क. ग—वृद्ध्यर्थम्.

[10]प्रजां योनिं मा निर्मृंक्ष[11]मा प्यांयन्तामाप ओषंधयो मरुतां पृषंतयस्स्थ दिवंम् ॥ २२ ॥

[10]ध्रुवायां मूलमनक्ति—प्रजामिति ॥ अहं प्रजां, योनिं च तत्कारणभूतं अन्नादिकं, मा निर्मृक्षं मा विनीनशं, अपितु वर्धयितुमिच्छामि ; तस्मात्तद्वृद्ध्यर्थं वियन्तु वय इति । मृशेः 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशः । कृदुत्तरपदप्रकृतिस्वरेण प्रजाशब्दोन्तोदात्तः ॥

अत्र, प्रथमद्वितीयपादावष्टाक्षरौ तृतीयो द्वादशाक्षरो यस्यास्तां परोष्णिहमाचक्षते* । इह तु तृतीयोष्टाक्षरः पादः, 'द्वादशाक्षरः आष्टाक्षरतायाः ; प्रतिक्रामति' इति ; प्रथमद्वितीयौ पञ्चाक्षरौ, 'अष्टाक्षर आ चतुरक्षरतायाः प्रतिक्रामति' इति† ॥

[11]आहवनीये प्रस्तरं प्रहरति—आप्यायन्तामिति यजुरादिकया‡ 'दिवं गच्छ' इत्येकपदया जगत्या, 'ततो नः' इत्येकपदया च गायत्र्या ॥ हे प्रस्तर अनेन त्वत्प्रहरणेन आप ओषधयश्च आप्यायन्तां वर्धन्ताम्, वर्षेण ह्यपामोषधीनां च वृद्धौ प्रजा योनयश्च वर्धयितुं शक्यन्त इति । ओषधिशब्दस्य दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । ओषशब्दो घञन्तः । कथमेतत्प्रहरणेन तासामाप्यायनमित्यत आह—मरुतां पृषतयः अश्वाः

*पिं—३-२१.

†क—इह तु 'अष्टाक्षराः आ चतुरक्षरतायाः प्रतिक्रामन्ति' इति प्रथमद्वितीयौ पञ्चाक्षरावभूताम् । 'द्वादशाक्षराः आऽष्टाक्षरतायाः प्रतिक्रामन्ति' इति तृतीयोष्टाक्षरोभूत.

‡क. ग—यजुषा.

गृच्छ ततो नो वृष्टिमेरय । [12]आयुष्पा अंग्ने-स्यायुर्मे पाहि चक्षुष्पा अंग्नेसि चक्षुर्मे पाहि

स्थ, मरुतामश्वा इव शीघ्रगतिस्त्वमसीति यावत् । अश्वापेक्षया बहुवचनम् । पृषु वृषु सेचने, 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवत्' इत्यतिप्रत्ययान्तो निपातितः, व्यत्ययेन शः, 'उगितश्च' इति ङीप्, वर्णव्यत्ययेन ह्रस्वत्वम्, लसार्वधातुकानुदात्तत्वे धातुस्वरः, 'शतुरनुमः' इत्याद्युदात्तत्वं बहुलवचनादेव न क्रियते शस्वरश्च । वृषादिर्वायं द्रष्टव्यः । भवत्वेवं शीघ्रगतित्वं, किमेतावता तासां वृद्धिरित्यत आह—दिवमादित्यं शीघ्रं गच्छ । ततः किमित्यत आह—ततः आदित्यमण्डलादस्माकं वृष्टिमेरय आगमय । एवं च कृते अपामोषधीनां चाप्यायनं भविष्यति । ततश्च प्रजायो-न्योर्वृद्धिश्च भविष्यति । 'मन्त्रे वृष' इति वृषेः क्तिनः उदा-त्तत्वं विधीयमानं बहुलवचनान्न क्रियते । यद्वा—वृष्टिहेतुरादि-त्यरश्मिः वृष्टिः । करणे क्तिन् । तामेरय अस्मदभिमुखं प्रेरय । उदात्तविधौ भावाधिकारादत्र न भवति ॥

[12]आहवनीयमुपतिष्ठते—आयुष्पा इति ॥ हे अग्ने आयुष्पाः सर्वेषामायुषो रक्षकोसि । पातेर्विच्, 'नित्यं समासेऽनुत्तरपद-स्थस्य' इति विसर्जनीयस्य सः, 'आदेशप्रत्यययोः' इति षत्वम्, कृदुत्तरपदप्रकृतिस्वरत्वम् । तस्मादायुर्मे पाहि । चक्षुषश्च त्वं रक्षितासि, तस्मान्मे चक्षुः पाहि अविनष्टं कुरु । 'यावद्वा अध्वर्युः प्रस्तरं प्रहरति । तावदस्यायुर्मीयते'* इत्यादि ब्राह्मणम् ॥

*ब्रा. ३-३-९.

[13]ध्रुवासि [14]यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमानः । तं तं एतमनु जोषं भरामि

[13]भूमिमभिमृशति—ध्रुवासीति ॥ ध्रुवा नित्या त्वमसि, तस्मान्मामपि ध्रुवं कुर्विति भावः ॥

[14]मध्यमं परिधिमनुप्रहरति—यमिति त्रिष्टुभा पुरस्ताज्ज्योतिषा वसुरुद्रैराभवाक्षरपदया ॥ हे अग्ने । पादादित्वान्न निहन्यते । देव देवनादिगुणयुक्त । 'नामन्त्रिते समानाधिकरणे' इति पूर्वस्य विद्यमानवत्त्वात् निहन्यत एव । यं परिधिं पर्यधत्थाः परिहितवानसि । 'यद्वृत्तान्नित्यम्' इति निघाते निषिद्धे अट उदात्तत्वम्, 'तिङि चोदात्तवति' इति गतेर्निघातः, उदात्तवता तिङा गतिसमासः । परिधिशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । सः पणिभिः पणिनामभिः असुरैः वीयमाणः वेष्ट्यमानः तेषां निवारणार्थं पर्यधत्थाः । व्येञः कर्मणि लकारः, व्यत्ययेन णकारः । वच्यादिसूत्रेण सम्प्रसारणम् । तमेतं मध्यमं परिधिं तव जोषमिष्टम् । कर्मणि घञ् । अनुभरामि त्वामेवानुगतं हरामि प्रहरामि । 'हृग्रहोर्भश्छन्दसि' इति भत्वम् । युक्तमेव खल्वेवं कर्तुमित्याह—एषः अयं परिधिः एवं नाम तवाभिमतः त्वत्तो हेतोः नेदपचेतयातै नैवापरक्तचित्तो भवेत्; यद्ययं न प्रह्रियेत, उपेक्षितोहमनेनाग्निनेति त्वत्तोऽपचेतयेत । तस्मात्त्वय्येवैनमनुप्रहरामि । चित संचेतने, चुरादिः, अनुदात्तेत्, तस्माल्लेटि 'लेटो डाटौ' इत्याडागमः, 'वैतोन्यत्र' इत्यैत्वम्, 'निपातैर्यत्' इत्यादिना निघातप्रतिषेधः, पूर्ववद्गतिनिघातसमासौ, णिचश्चित्त्वादुदात्तत्वम् ॥

नेदेष त्वदप चेतयातै [15]यज्ञस्य पाथ उप समितम् [16]सꣳस्रावभागास्स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च ॥२३॥ देवा इमां वाचमभि विश्वे

[15]इतरावुपसमस्यति—यज्ञस्येति ॥ यज्ञस्य साध्यतया सम्बन्धि यत्पाथः अन्नं तद्युवामप्युपसमितं उपसंप्राप्तुतम् । अचेतनानामपि यज्ञोपयुक्तानां फलसम्बन्धः प्रतिपादितो भवति । 'उदके थुट्च' इत्यधिकृत्य 'अन्ने च' इति पातेरसुन् प्रत्ययः ॥

[16]एतान्संस्राविणाभिघारयति—संस्रावभागा इति त्रिष्टुभा चतुष्पदया ॥ संस्राव्यत इति संस्रावः । कर्मणि घञ्, थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । संस्रावो जुहूपभृद्भ्यां सिच्यमान आज्यशेषो भागो येषां तादृशाः स्थ भवत । लिङर्थे लेट् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'वसवो वै रुद्रा आदित्यास्सँस्रावभागाः'* इत्यादि ब्राह्मणम् । कीदृशाः पुनस्त इत्याह—इषा इच्छावन्तः भागान् लब्धुम् । इषेः क्विबन्तादर्शआदित्वादच्प्रत्ययः । बृहन्तः महान्तः सर्वैराराधनीयाः । 'प्रस्तरेष्ठा बर्हिषदश्च देवाः' इति द्वितीयः पादः । ये प्रस्तरेष्ठाः । प्रस्तरे तिष्ठन्तीति 'स्थः क च' इति क्विप्प्रत्ययः, 'तत्पुरुषे कृति बहुलम्' इत्यलुक्, सुषामादित्वात् षत्वम्, कृदुत्तरपदप्रकृतिस्वरत्वम् । ये च बर्हिषदः । बर्हिषि सीदन्तीति 'सत्सूद्विष' इत्यादिना क्विप्, पृषोदरादित्वात्सकारलोपः, पूर्ववत् षत्वस्वरौ । ते विश्वेपि देवा देवनादिगुणयुक्ता यूयं, इमामस्मदीयां त्वद्विषयां स्तोत्ररूपां वाचं अभिगृणन्तः आभिमुख्येन

*ब्रा. ३-३-९.

गृ॒णन्त॑ आ॒सद्या॒स्मिन्ब॒र्हिषि॑ मादयध्व॒ [17] म॒ग्ने-र्वा॒मप॑न्नगृहस्य॒ सद॑सि सादयामि सु॒म्नाय॑ सुम्निनी सु॒म्ने मा॑ धत्तं धु॒रि धु॒र्यौ॑ पात॒ [18] मग्ने॑

शब्दयन्तः अहो सम्यगियं स्तुतिः कृतेत्येवं प्रशंसन्तः । 'अभिरभागे' इति लक्षणादिषु कर्मप्रवचनीयत्वम् । अस्मिन् बर्हिषि स्तीर्णे यज्ञे आसद्य उपविश्य मादयध्वं तृप्यत । मद तृप्तियोगे, चौरादिकः, आकुस्मीय आत्मनेपदी । आसद्येति कृदुत्तरपदप्रकृतिस्वरत्वम् । 'ऊडिदम्' इत्यादिना इदमस्सप्तम्या उदात्तत्वम् । 'स्रुचौ संप्रस्नावयति'* इत्यादि ब्राह्मणम् । 'वैश्वदेव्यर्चा'* इत्यादि च ॥

[17]धुरि स्फ्ये वा स्रुचौ विमुञ्चति—अग्नेरिति ॥ हे जुहूपभृतौ वां युवां अग्नेः अपन्नगृहस्य अपन्नस्थानस्य† सदसि सदने निश्चलभूते धुरादौ सादयामि स्थापयामि । किमर्थं ?—सुम्नाय सुम्नार्थं यजमानस्य सुखं यथा स्यादिति । हे सुम्निनी सुम्नवत्यौ‡ । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । मामध्वर्युं सुम्ने धत्तं स्थापयतम् । किञ्च—धुरि यागलक्षणायामस्यां वर्तमानौ धुर्यौ अस्या धुरो वोढारौ पत्नीयजमानौ पातं रक्षतम् । 'धुरो यड्ढकौ' इति यत्प्रत्ययः, 'तित्स्वरितम्' इति स्वरितत्वम्, 'यतो नावः' इत्याद्युदात्तत्वं बहुलवचनान्न भवति । 'धुरि धुर्यौ पातमित्याह । जायापत्योर्गोपीथाय'* इति ब्राह्मणम् ॥

[18]अन्वाहार्यपचने फलीकरणहोमं जुहोति—अग्न इति यजुरा-

*ब्रा. ३-३-९. †[अपन्नं अविनश्वरमित्यर्थः. माधवीये.] ‡क—सुखयन्त्यौ.

ऽदब्धायोऽशीततनो पाहि माद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिᳪ᳭

दिकया 'अविषंनः पितुं कृणु' इति गायत्र्यैकपदया 'सुषदा' इति यजुरन्तया ॥ हे अग्ने अदब्धायो अहिंसितजीवित। 'छन्दसीणः' इत्युण्प्रत्ययः। हे अशीततनो उष्णशरीर। 'नामन्त्रिते समानाधिकरणे' इति पूर्वस्याविद्यमानत्वनिषेधात् उभयत्राप्याष्टमिको निघातः। अद्य अस्मिन् कर्मणि क्रियमाणे मां पाहि। आमन्त्रितत्रयस्याविद्यमानत्वात् 'तिङतिङः' इति निघाताभावः। दिवः द्युलोकात् द्युलोकवासिभ्यो देवेभ्यः; यथा ते कर्मापराधेन क्रुद्धा न हिंसन्ति तथा कुरु। 'ऊडिदम्' इति विभक्तेरुदात्तत्वम्। किञ्च—पाहि प्रसित्यै। प्रसितिः प्रकर्षेण नाशः कर्मणोत्यन्तलोपः। स्यतेः क्तिनि, 'द्यतिस्यति' इत्यादिना इत्वम्, 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' इति चतुर्थी। प्रसितिं निवारयितुं* मां पाहीति। व्यत्ययेन वाऽपादाने चतुर्थी। अपदात्परत्वात् पाहीति न निहन्यते। 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम्। एवं दुरिष्ट्या इत्यत्रापि स्वरचतुर्थ्यौ। दुरिष्टिरेकाङ्गविकलं कर्म। यद्वा—'दुर्निन्दायाम्' इति प्रादिसमासे अत्राव्ययपूर्वपदप्रकृतिस्वरत्वम्। दुरद्मनी दुष्टा भुक्तिः अभोज्यभोजनम्। 'अदेर्मुट् च' इत्यनिप्रत्ययः, गतिसमासः प्रादिसमासापवादः, 'कृदिकारादक्तिनः' इति ङीष्, 'षितः' इत्युदात्तो दीर्घः, पूर्ववच्चतुर्थी, 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम्। दुश्चरितं अयथा-

*ख. ग—प्रसितिमविचारायितुम्.

स्वाहा [19]देवा गातुविदो गातुं वित्वा गातु-
मित मनसस्पत इमं नो देव देवेषु यज्ञꣳ
स्वाहा वाचि स्वाहा वाते धाः ॥ २४ ॥
दिवं च वित्वा गातुं त्रयोदश च ॥१३॥

नुष्ठितम् । 'दुर्निन्दायां' इति प्रादिसमासः, अव्ययपूर्वपदप्रकृतिस्वरत्वम्' ततो मां पाहि । 'भीत्रार्थानां' इत्यपादानत्वम् । अनुष्ठितस्य निवारयितुमशक्यत्वात्, तन्निमित्तानर्थपरिहार एव ततो रक्षणम् । गतिसमासपक्षे 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । किञ्च—अविषं विषवद्विषं बाधकं, अतोन्यदविषम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । पितुं अन्नं कृणु देहि । पितुरित्यन्ननाम । पुनश्च विशेष्यते—सुषदा योनिं—सुखेन सदनमवस्थानं सुषत् । 'सत्सूद्विष' इत्यादिना क्विप्, 'सदिरप्रतेः' इति षत्वम्, कृदुत्तरपदप्रकृतिस्वरत्वम् । तेन हेतुना योनिं समस्तस्योत्पत्तिस्थानम् । अन्नेन हि सर्वं सुखेन सीदति, यथा 'अन्नाद्भूतानि जायन्ते'* इत्यादि ब्राह्मणम् । तुभ्यमिदं स्वाहा सुखेन हुतमस्तु । यद्वा—इत्थमिदं कर्तव्यमिति सरस्वत्यापि स्वयमेवाह ॥

[19]समिष्टयजूंषि जुहोति—देवा इति ॥ हे देवाः गातुविदः गतिज्ञाः । गाङ् गतौ, 'कमिमनिजनि' इत्यादिना तुप्रत्ययः, 'विभाषितं विशेषवचने बहुवचनम्' इति पूर्वस्याविद्यमानत्वनिषेधात् निहन्यते । गातुं वित्वा मार्गं लब्ध्वा आगमनकाले

*तै. उ. २-२.

'उभा वामिन्द्राग्नी आहुवध्या उभा राधः सहस्सह मादयध्यै । उभा दातारविषां रयी-

यत्र स्थिताः ते यूयं गातुमित येन मार्गेणागताः तमेव मार्गं भजत समाप्ते कर्मणि तेनैव प्रतिनिवर्तध्वम् । किञ्च, हे मनसस्पते सर्वभूतानामन्तरात्मन्* । 'सुबामन्त्रिते पराङ्गवत्' इति षष्ठ्यन्तस्य परामन्त्रितानुप्रवेशात् षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम्, पदात्परत्वाभावान्निघाताभावः, 'षष्ठ्याः पति' इत्यादिना विसर्जनीयस्य सकारः । हे देव इममस्माकं यज्ञं देवेषु अग्न्यादिषु धाः धेहि स्थापय । एवं हि सरस्वत्याह । तदनन्तरं वाचि वाग्देवतायां शब्दब्रह्मणि च धाः । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । वाचि धा इति सरस्वत्याह । ततः पश्चादिमं यज्ञं वाते सर्वक्रियाधारे धाः स्थापय । यस्मादयं यज्ञः प्रयुक्तः तत्रैव वाते स्थापय । 'वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते'† इत्यादि ब्राह्मणम् । दधातेः लेटि 'बहुलं छन्दसि' इति शपो लुक्, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः ॥

इति त्रयोदशोनुवाकः.

---

"प्रजापतिः प्रजा असृजत तास्सृष्टा इन्द्राग्नी अपागूहताम्"‡ इति प्रश्ने काम्या इष्टय आम्नाताः । तत्र 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः'‡ इति प्रथमा । तस्या-

*ग—सर्वभूतानामन्तरात्मतया मनसोपि पते. क—......रात्मनो मन.......

†ब्रा. ३-३-९. ‡सं. २-२-१.

णामुभा वाजस्य सातये हुवे वाम् । [2]अश्वं-

मियं पुरोनुवाक्या—उभा वामिन्द्राग्नी इति त्रिष्टुप्चतुष्पदा ॥ अयं च सर्वोनुवाको वैश्वदेवकाण्डम् । हे इन्द्राग्नी वां उभा उभौ । द्वितीयाद्विवचनस्य 'सुपां सुलुक्' इत्याकारः, 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वमेकादेशस्य । हुव इति वक्ष्यमाणेन सम्बन्धः, युवां आह्वयामि । किमर्थं?—आहुवध्यै आभिमुख्येन होतुं आहुतिप्रदानेनाराधयितुम् । जुहोतेः 'तुमर्थे सेसेनसेऽसेनक्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः' इति कध्यैप्रत्ययः । किञ्च—राधः ओदनं हविर्लक्षणम् । 'सुपां सुपो भवन्ति' इति तृतीयार्थे षष्ठी, हेतौ वा पञ्चमी । उभा युवां सहैव यौगपद्येनैव नैकैकश्येन राधसा मादयध्यै मादयितुं सहैव तर्पयितुं वा आह्वयामि । मदेर्ण्यन्तात्तेनैव सूत्रेण शध्यै*प्रत्ययः, सार्वधातुकत्वाण्णिलोपो न क्रियते । अनयोरेवाह्वाने कारणमाह—युवामेव ह्युभौ इषां अन्नानां रयीणां धनानां क्षेत्रपुत्रपश्वादीनां दातारौ । 'साविकाचः' इति 'नामन्यतरस्याम्' इति च षष्ठीबहुवचनस्योदात्तत्वम् । तस्माद्वाजस्यान्नस्य सातये लाभाय । 'ऊतियूति' इत्यादिना उदात्तः क्तिन्निपातितः, 'जनसनखनां सञ्झलोः' इत्यात्वम् । तौ तादृशौ उभौ युवां हुवे आह्वयामि । ह्वयतेः 'बहुळं छन्दसि' इति शपो लुक्, 'ह्वस्सम्प्रसारणम्' 'अभ्यस्तस्य च' 'बहुळं छन्दसि' इति सम्प्रसारणम् ॥

[2]तत्रैव याज्या—अश्वमिति चतुष्पदा त्रिष्टुप् ॥ इतश्च युवामेवाह्वयामीति हेत्वन्तरमाह—भूरि ददातीति भूरिदावा ।

*ख-कध्यै.

**व्रं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् । अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ।**

'आतो मनिन्' इत्यादिना वनिप्प्रत्ययः, ततः प्रकर्षविवक्षायां तरप्प्रत्ययः, 'भूरिदाव्नस्तुट्' इति तुडागमः, द्वितीयाद्विवचनस्य 'सुपां सुलुक्' इत्याकारः, कृदुत्तरपदप्रकृतिस्वरत्वम् । यस्मादहं युवां भूरिदावत्तरौ अश्रवं युवां दातृतमावशृणवम् । शृणोतेर्लङि शपो लुक् । कस्मात्पुनरतिशयिनावित्यत आह—विजामातुः, विद्यावयोरूपादिभिर्विहीनो जामाता विजामाता । अव्ययपूर्वपद-प्रकृतिस्वरत्वम् । विजामाता हि कन्यालोभात्कन्यावते भूरि धनं ददाति; तस्मै* यथा वैगुण्यमनादृत्य कन्यां प्रयच्छति । तस्मादपि युवां दातृतमावशृणवम् । उत वा अपि वा स्याला-द्युवां दातृतमावशृणवम् । स्यालो भार्याभ्राता । सोपि भगिनी-स्नेहेन तद्भर्त्रे भूरि धनं ददाति । यस्मादेवमाभ्यामपि युवां दातृतमावशृणवं, तस्माद्युवामेवाह्वयामि । घशब्दः पादपूरणे प्रसिद्धौ वा । 'ऋचि तुनुघ' इत्यादिना तस्य संहितायां दीर्घः । 'अथादावुत्तरे विभागे ह्रस्वं व्यञ्जनपरः । देवाशिकासु-म्नाश्वर्तावयुनाहृदयाघोक्थाशुद्धा '† इति पदकाले ह्रस्वत्वम् । अथ एतस्मात्कारणात् । 'निपातस्य च' इति संहितायां दीर्घत्वम् । सोमस्य सोमसदृशस्यास्य हविषः प्रयती प्रयत्या प्रदानेन । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृति-स्वरत्वम् । तृतीयैकवचनस्य 'सुपां सुलुक्' इति पूर्वसवर्ण-दीर्घत्वम् । हे इन्द्राग्नी । पादादित्वात् षाष्ठिकमामन्त्रिताद्युदा-

*क—सः. [अनेन कन्यावान् परामृश्यते.] †तै, प्रा. ३-१-१२२.

[3]इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा । [4]शुचिं नु स्तोमं नव-

त्तत्वम् । युवभ्यां युवाभ्याम् । आत्वाभावश्छान्दसः । स्तोमं स्तोत्रं जनयामि करोमि । नव्यं अभिनवम् । 'वस्वपसोकक-विक्षेमवचोनिष्केवलोक्थजनपूर्वनवसूरमर्तयविष्ठेभ्यश्छन्दसि स्वार्थे यद्ध-रूव्यः' इति यत्प्रत्ययः । 'यतो नावः' इत्याद्युदात्तत्वम् । एवमनेन स्तोत्रेण तृप्तौ युवां दातृतमौ प्रजां मे दत्तमिति । 'इन्द्राग्नी वा एतस्य प्रजामुपगूहतः'* इत्यादि ब्राह्मणम् ॥

[3]अथ 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्सङ्ग्रामं जित्वा'* इत्यस्य पुरोनुवाक्या—इन्द्राग्नी नवतिमिति गायत्री त्रिपदा ॥ हे इन्द्रा-ग्नी । पाष्ठिकमाद्युदात्तत्वम् । नवतिं नवतिसङ्ख्याकाः पुरः असुराणां पुरीः शत्रूणां वा । दासपत्नीः दासाः उपक्षपयितारः प्रजानां, तादृशाः पतयस्स्वामिनो यासां पुराम् । दंसिः सौत्रो धातुरुपक्षयवृत्तिः, 'दंसेष्टटनौ न आच' इति टप्रत्ययः, बहु-व्रीहौ 'विभाषा सपूर्वस्य' इति नकारः । साकं सहैव एकेन कर्मणा प्रहरणलक्षणेन तादृशीः पुरः अधूनुतं अकम्पयतं नाशितवन्तौ । धूञ् कम्पने स्वादिः, वर्णव्यत्ययेन दीर्घः, क्रैयादिकाद्वा धूञो विकरणव्यत्ययेन श्नुप्रत्ययः । तस्मादेवं महानुभावौ युवां इमं यजमानं सङ्ग्रामे जितवन्तमनुगृह्णीतं अस्मि-न्निन्द्रियादिकं धत्तम् । 'विवा एष इन्द्रियेण वीर्येणर्ध्यते'* इत्यादि ब्राह्मणम् ॥

[4]तत्रैव याज्या—शुचिमिति चतुष्पदा त्रिष्टुप् ॥ शुचिं

*सं. २-२-१.

**जातमृग्मियेन्द्राग्नी वृत्रहणा जुषेथाम् ॥ २५ ॥**
**उभा हि वाꣳ सुहवा जोहवीमि ता वाजꣳ**

निर्दोषं स्तोमं स्तोत्रं नवजातं नवं अभूतपूर्वं जातं जननं अस्येति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अद्यास्मिन्नहनि । हे इन्द्राग्नी । पादादित्वान्न निहन्यते, षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । वृत्रहणा वृत्रस्य पापस्य हन्तारौ युवाम् । 'सुपां सुलुक्' इत्यादिना आकारः, 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति पूर्वस्याविद्यमानवत्त्वनिषेधात् निहन्यते । जुषेथां सेवेथां नु क्षिप्रम् । 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्य*विद्यमानवत्त्वान्न निहन्यते, लसार्वधातुकानुदात्तत्वे विकरणस्वरः । हि यस्मात् उभा उभौ वां युवां सुहवा स्वाह्वानौ आहूयमानावप्यरोषौ । 'बहुलं छन्दसि' इति प्रागेव प्रत्ययोत्पत्तेः अनैमित्तिके सम्प्रसारणे कृते, आतोयुजोऽप्रसङ्गात् 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम्, उभासुहवेति 'सुपां सुलुक्' इत्याकारः । ईदृशौ वां युवां जोहवीमि भृशमाह्वयामि । ह्वयतेर्यङ्लुक्, 'अभ्यस्तस्य च' इति सम्प्रसारणम्, 'यङो वा' इति ईडागमः, 'हि च' इति निघाते निषिद्धे 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । ता तौ युवां वाजं अन्नं उशते कामयमानाय यजमानाय । 'शतुरनुमो नद्यजादी' इति विभक्तेरुदात्तत्वम् । सद्यः तदानीमेव धेष्ठा धातृतमौ । धानकर्मणो दधातेस्तृचि 'तुश्छन्दसि' इतीष्ठन्प्रत्ययः, 'तुरिष्ठेमेयस्सु' इति तृशब्दस्य लोपः, पूर्ववद्वि-

*क. ग—द्वयोरप्यामन्त्रितयोर......

स्नव उद्गाते घेष्ठां । [5]वयमु त्वा पथस्पते रथं न वाजसातये । धिये पूषन्नयुज्महि । [6]पथस्पथः परिपतिं वचस्या कामेन कृतो

भक्तेराकारः । तौ तादृग्गुणौ युवां यस्माज्जोहवीमि, तस्मादिमं स्तोमं जुषेथाम्, अस्मिन्निन्द्रियादिकं च धत्तमिति ॥

[5]अथ सङ्ग्रामं जित्वा जनतामेष्यतः 'पौष्णं चरुमनु निर्वपेत्'* इति पौष्णश्चरुः अनुनिर्वाप्यत्वेनाम्नातः । तत्र पुरोनुवाक्या—वयमिति गायत्री त्रिपदा ॥ हे पथस्पते मार्गस्य पालयितः† । 'षष्ठ्याः पतिपुत्र' इत्यादिना विसर्जनीयस्य सकारः, 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यन्तामन्त्रितसमुदायो निहन्यते । हे पूषन् वयमु वयमेव त्वामयुज्महि योजयामः । 'छन्दसि लुङ्लङ्लिटः' इति लङ्, 'बहुळं छन्दसि' इति शपो लुक् । कमिव ?—रथं न रथमिव । उपरिष्टादुपचारत्वात्‡ उपमानार्थो नशब्दः । किमर्थं ?—धिये कर्मणे, कर्मसिध्यर्थम् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । धीर्विशेष्यते—वाजसातये, वाजोऽन्नं स सन्यते लभ्यते अस्यामिति । अधिकरणार्थे क्तिनि, 'जनसनखनाम्' इत्यात्वम् । 'मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः' इत्युत्तरपदान्तोदात्तत्वं बाधित्वा दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । ईदृशकर्मसिद्ध्यर्थं त्वां योजयामः इति ॥

[6]तत्रैव याज्या—पथस्पथ इति चतुष्पदा त्रिष्टुप् ॥ पथस्पथः सर्वस्य मार्गस्य । 'कस्कादिषु च' इति विसर्जनीयस्य

*सं. २-२-१. †क—दर्शयितः. ‡ख—चारात्.

अभ्यानडर्कम् । स नो रासच्छुरुधश्चन्द्राग्राः

सकारः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इति विभक्तेरुदात्तत्वम्, 'अनुदात्तं च' इत्याम्रेडितस्यानुदात्तत्वम् । परिपतिं परिपालयितारम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अर्कं स्तोतव्यम् । अर्कस्तवने, कर्मणि घञ्; अर्चतेर्वा घञ्, 'चजोः कुघिण्यतोः' इति कुत्वम्, उभयत्राप्युञ्छादित्वादन्तोदात्तत्वम् । ईदृशं हि पूषणं कामेन वशीकृतो जनः वचस्या वचसा स्तोत्ररूपेण । तृतीयैकवचनस्य याजादेशः । अभ्यानट् अभिप्राप्नोति । तस्मादहमप्यद्य त्वामुपागतोस्मीति भावः । अशू व्याप्तौ, 'छन्दसि लुङ्लङ्लिटः' इति लङ्, श्नम्परस्मैपदे व्यत्ययेन, हल्ङ्यादिलोपे व्रश्चादिना षत्वम् । यद्वा—नशेर्गतिकर्मणः लुङि 'मन्त्रे घस' इति च्लेर्लुक्, 'छन्दस्यपि दृश्यते' इत्याडागमः । स पूषा नोऽस्मभ्यं रासत् ददातु । रातेर्लेटि 'सिब्बहुलं लेटि' इति सिप्, 'लेटोडाटौ' इत्यडागमः । किं ददातु?—शुरुधः शोकस्य रुधः निवारयित्रीः । क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम्, पृषोदरादित्वाद्व्यञ्जनस्य लोपः । काः पुनस्ताः?—चन्द्राग्राः ओषधीः; चन्द्रः हिरण्यं, असितजातिर्वा चन्द्रः, सः अग्रं प्रधानमीश्वरो वा यासां ताः अस्मभ्यं ददातु* । इदानीं प्रज्ञावतामेव धनवत्तया प्रयोजनमिति तां प्रार्थ-

*क.—किं ददातु?—शुरुधः शुश्रुवो [शुचो] निरोध्रीरेव चन्द्राग्राः निर्मलाः । यद्वा—शुं क्षुधं दारिद्र्यं वा निरुणद्धीति शुरुधः ॥

ग.—ओषधीः रजतजातिः धौतचन्द्रः [रजतजातिर्वाऽत्र चन्द्रः] धनानि । शुक् शोकः तां रुणद्धि निवारयतीति शुरुध् । शुक्छब्दस्य ककारलोपश्छान्दसः । वर्णागमो वर्णविपर्ययश्च । यौरा......रण्यमग्रं मुखं यासां ताः चन्द्राग्राः । अग्रः प्रधानमीश्वरो यासां ताः नः अस्मभ्यं ददातु.

धियंधियः सीषधाति प्र पूषा । [7]क्षेत्रस्य पतिना वयः हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नः ॥ २६ ॥ मृडातीदृशे ।

यते—धियंधियमित्यादिना चतुर्थेन पादेन ॥ सर्वां धियं प्रज्ञाम् । स पूषा प्रकर्षेण सीषधाति साधयत्वस्माकम् । सिद्ध्यतेर्ण्यन्ताद्धातुत्वे कृते लेटि 'बहुळं छन्दसि' इति शपूश्लुद्विर्वचनानि, 'बहुळं छन्दसि' इत्यभ्यासस्येत्वम्, तुजादित्वादभ्यासस्य दीर्घः, वर्णव्यत्ययेन धातोर्ह्रस्वत्वम्, 'लेटोडाटौ' इत्यात्वम्, 'छन्दस्युभयथा' इति लेट आर्धधातुकत्वाण्णिलोपः, 'इण्कोः' इति षत्वम् । यद्वा—विकरणव्यत्ययेन च्लेः 'णिश्रि' इत्यादिना चङ्द्विर्वचनादिः, णौ चङ्युपधाया ह्रस्वत्वम् ॥

[7]'क्षैत्रपत्यं चरुं निर्वपेज्जनतामागत्य'* इत्यस्य पुरोनुवाक्या—चतुष्पदानुष्टुप् ॥ क्षेत्रस्य निष्पत्त्याधारस्य, पतिना पत्याऽधिष्ठात्रा । 'षष्ठीयुक्तश्छन्दसि वा' इति घिसंज्ञा । तेनानुगृह्यमाणा वयं जयामसि जयामः । 'इदन्तो मसि' इति इकारः । केनेव?—हितेनेव; यथा हितेन मित्रेण जनेन अमित्रं जयति, एवं क्षेत्रपतिना जयेम । किं जयेम?—गामश्वं पोषयित्नु पोषकमन्नादिकं प्रजाम् । आकारस्समुच्चये । गां चाश्वं च पोषयित्नु च । पुषेर्ण्यन्तात् 'स्तनिहृषिपुषि' इत्यादिना इत्नुच्प्रत्ययः, 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति णेरयादेशः । स च क्षेत्रपतिः नोस्मान् मृडाति मृडयतु सुखयतु । मृड सुखने, तौदा-

*सं. २-२-१.

[8]क्षेत्र॑स्य पते॒ मधु॑मन्तमू॒र्मिं धे॒नुरि॑व॒ पयो॑ अ॒स्मासु॑ धुक्ष्व । म॒धु॒श्चुतं॑ घृ॒तमि॑व॒ सुपू॑त-

दिकः, 'लेटोडाटौ' इत्याडागमः । ईदृशो यथोक्ते गवादावर्थे अस्मान् स्वामित्वेन स्थापयित्वा सुखयतु । 'त्यदादिषु दृशः' इति कञ्, इदम ईशादेशः, कृदुत्तरपदप्रकृतिस्वरत्वम् । अत्र यणादेशसवर्णदीर्घयोरकरणेन तृतीयचतुर्थपादौ पूरयितव्यौ ॥

[8]तत्रैव याज्या—क्षेत्रस्य पत इति चतुष्पदा त्रिष्टुप् ॥ हे क्षेत्रस्य पते । पराङ्गवद्भावेन षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । मधुमन्तमूर्मिं मधुरेण क्षीरादिना तद्वन्तमूर्मिं अरणशीलं गवादिसमुदायम् । 'अर्तेरूच्च' इति ऋगतावित्यस्मात् मिप्रत्ययः ऊकारश्चान्तादेशः । मधुश्चुतं मधुरं क्षीरादिकमासिञ्चन्तं, न केवलं मधुमन्तं, अपि तु सर्वदा प्राणिभ्य*-स्स्रवन्तम् । श्चुतिर् आसेचने, कृदुत्तरपदप्रकृतिस्वरत्वम् । घृतमिव सुपूतम् । 'सुः पूजायाम्' इति कर्मप्रवचनीयत्वम्, 'स्वती पूजायाम्' इति प्रादिसमासः, तेनाव्ययपूर्वपदप्रकृतिस्वरत्वम्, गतित्वाभावात् 'सूपमानात् क्तः' इत्येवं न भवति । ईदृशं गवादिसमुदायमस्मासु धुक्ष्व । स्वयमेव धुक्ष्व अस्मद्वात्सल्येन, यथा धेनुः पयस्स्वयमेव दुग्धे दोग्धृवात्सल्येन । कर्मकर्तरि लकारः, 'न दुहस्नुनमां' इति यक्प्रतिषेधः । यद्वा—क्षेत्रमित्यध्याह्रियते, गवादिसमुदायं क्षेत्राणि, दुहिः स्वरितेत् । किञ्च—ऋतस्य यज्ञस्य पतयोऽग्न्यादयो देवाः नोऽस्मानस्मदीयं वा त्वया दीयमानं गवादिसमुदायं मृडयन्तु सुखयन्तु । 'छन्दस्युभयथा' इति णिचस्सार्वधातुकत्वेन ङित्त्वाल्लघूपधगुणाभावः ॥

*क. ग—वत्सकादिप्राणिभ्यः.

मृतस्यं नः पतयो मृडयन्तु । [9]अग्ने नयं सुपथां राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते

[9]'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेत्'* इत्यस्य पुरोनुवाक्या—अग्ने नयेति त्रिष्टुप्चतुष्पदा ॥ हे अग्ने देव सुपथा शोभनेन मार्गेण शास्त्राविरुद्धेन । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वं, 'आद्युदात्तं द्व्यच्छन्दसि' इति तु न भवति अन्तोदात्तत्वात्पथिन्शब्दस्य, क्रत्वादिर्वा द्रष्टव्यः, 'न पूजनात्' इति समासान्तप्रतिषेधः । ईदृशेन मार्गेणास्मान्नय । किमर्थं?—राये धनाय हविर्लक्षणाय ; त्वदीयहविस्सम्पादनयोग्या वयं यथा भवामस्तथा कुर्वित्यर्थः । त्वं हि विश्वानि वयुनानि ज्ञानान्यभिप्रायान्विद्वान् । 'अजियमिशीङ्भ्यश्च' इत्यजेरुनन्प्रत्ययः, 'अजेर्व्यघञपोः' इति वीभावश्च । किञ्च—एनः पापं दर्शपूर्णमासातिपत्तिलक्षणमस्मदस्मत्तः युयोधि अपनय । यौतिः पृथग्भावे लोटि 'बहुळं छन्दसि' इति शपः श्लुः, 'वा छन्दसि' इत्यपित्त्वाभावेन अङित्त्वात् 'अङितश्च' इति धिभावः । कीदृशमेनः?—जुहुराणं कुटिलस्वभावम् । हुर्च्छा कौटिल्ये इत्यस्मात् 'हुर्च्छेस्सनो लुक् छलोपश्च' इत्यानच्प्रत्ययः । हुर्छितुमिच्छति जुहुराणम् । यद्वा—हृ प्रसह्यकरणे, जुहोत्यादिकः, तस्मात्ताच्छीलिके चानशि शपः श्लुः, 'बहुळं छन्दसि' इत्युत्वम् । तदर्थं वयं ते तुभ्यं भूयिष्ठां बहुतमां नमउक्तिं

*सं. २-२-२.

नमउक्तिं विधेम । [10]आ देवानामपि पन्थाम॑गन्म यच्छक्नवा॑म॒ तदनु प्रवो॑ढुम् । अ॒ग्निर्वि॒द्वान्थ्स य॑जात् ॥ २७ ॥ सेदु होता सो

नमस्कारोक्तिं विधेम क्रियास्म । विधविधाने, आशिषि लिङ्, 'लिङ्याशिषि' इत्यङ्, यासुडादिः, 'छन्दस्युभयथा' इति सार्वधातुकत्वात्सलोपः, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । नमस आद्युदात्तत्वम् । 'पथो वा एषः'* इत्यादि ब्राह्मणम् ॥

[10]तत्रैव याज्या—आ देवानामिति चतुष्पदा त्रिष्टुप् ॥ देवानां पन्थां पन्थानं कर्ममार्गं आगन्म आगता भूयास्म । 'मन्त्रे घसह्वर' इत्यादिना च्लेर्लुक् । यद्वा—'बहुलं छन्दसि' इति शपो लुक् । 'पथिमथोस्सर्वनामस्थाने' इति पथिन्शब्दस्याद्युदात्तत्वम्, द्वितीयैकवचनेपि व्यत्ययेन 'पथिमथ्यृभुक्षामात्' इत्यात्वम् । ये वयं कालातिपत्त्या कर्ममार्गात्प्रच्युतास्तेपि वयम् । यद्वा—यतः कर्ममार्गात्प्रच्युताः, तमपि पन्थानमागन्म । किं कात्स्न्र्येन सर्वं निर्वोढुं शक्यत इत्यत आह—यच्छक्नवाम यावत्किञ्चिदेव विषये अनुष्ठातुं शक्नुयाम । लोट्याडागमः, सातिशिष्टो विकरणस्वरः । तदनु प्रवोढुं तच्छक्यं कर्मजातं अनुक्रमेणाविच्छेदेन निर्वोढुं पन्थानमगन्म । अविच्छेदेनानुष्ठानं प्रवाहः । प्रवोढुमित्यत्र 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् । शक्त्या कर्मप्रवाहो† लक्ष्यत इति लक्षणे अनोः कर्मप्रवचनीयत्वम् । यद्वा—तदिति लिङ्गव्यत्ययेन नपुं-

*सं. २-२-२.

†ख—शक्यकर्मप्रवाहो.

सकत्वम्, तं पन्थानमनु प्रवोढुं यस्माद्वयं शक्नवाम । सम्भावने लोट् । तस्मात्तमागता वयमिति । ननु तदवस्थमेव कर्मणो वैकल्यं, कथं वा निर्वोढुं शक्यत इत्यत आह—स एव खल्वग्निः पथिकृन्नामा यजात् यजेत् अविगुणं यागं निर्वर्तयिष्यति अनतिपन्नतां कर्मणस्सम्पादयिष्यति । लेट आडागमः । कोस्य विशेष इत्यत आह—विद्वान् सम्यग्यागसम्पादनोपायज्ञः । ननु देवानां यागेतिपन्ने किमग्निना शक्यमित्यत आह—स एव खल्वग्निः होता देवानां साधु आह्वाता । ह्वयतेस्तृनि 'बहुळं छन्दसि' इति सम्प्रसारणम् । देवाः खल्वग्निना हूयमानाः कर्मणो वैगुण्यमनादृत्य आगमिष्यन्तीति । अधुना किमग्निना अशक्यं कर्तुमिति प्रतिपाद्यते—स खल्वग्निः अध्वरान् यागान् कल्पयाति कल्पयति अकालकृतानपि फलप्रदानसमर्थान् करोति । यद्वा—अध्वरान् ध्वरैः कर्मणो वारकैः कालातिपत्त्यादिदोषैः रहितानस्मान् अस्मद्यागान्वा करोतु । एवं हि 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं लभ्यते । ननु कालो बलवान्, तत्कथं तदतिपत्तिः अग्निना परिहर्तुं शक्यत इत्यत आह—स एव खल्वग्निः ऋतून् कालावयवान् कल्पयाति, आदित्यात्मनाप्यग्नेरेवावस्थितत्वात् । यः कालस्यैव स्रष्टा स कथं विपन्नकालं अविपन्नं कर्तुं न शक्नुयादिति भावः । अत्र स इति पदं चतुः प्रयुज्यते । तत्र संहितायां प्रथमस्य 'एतत्तदोः' इति प्रथमा लुप्यते । द्वितीयस्य तु 'सोचि लोपे चेत्' इति लुप्यते । तृतीयस्य तु 'अतो रोः' इति रोरुत्वे, गुणे च कृते, 'अनुदात्ते च कुधपरे' इति रोः प्रकृतिभावः । चतुर्थस्य तु 'भोभगोअघोअपूर्वस्य योशि' इति यत्वे कृते, 'लोपश्शाकल्यस्य' इति लुप्यते, लोपस्यासिद्धत्वाद्गुणो न क्रियते ॥

अ॒ध्व॒रान्थ्स॒ ऋ॒तून्क॑ल्पयाति । [11]यद्वाहि॑ष्ठं तद॒ग्नये॑ बृ॒हद॑र्च विभावसो । महि॑षीव॒ त्वद्र॒यि-

[11]तत्रैव स्विष्टकृतः पुरोनुवाक्या—यद्वाहिष्ठमिति चतुष्पदानुष्टुप् ॥ वाहिष्ठं वाहयितृतमं प्रीतिः प्रापयितृ । स्तोत्रमेव चेदृशं भवति । तस्मादीदृशं यत् स्तोत्रं तदग्नये अग्न्यर्थमेव । अग्निरेव रमणीयं स्तोत्रमर्हति, तस्मादीदृशेन स्तोत्रेण त्वामेव स्तौमीति भावः । वाहयितृशब्दात् 'तुश्छन्दसि' इतीष्ठन्प्रत्ययः, 'तुरिष्ठेमेयस्सु' इति तृशब्दलोपः, व्यत्ययेन तस्यासिद्धत्वमनादृत्य 'टेः' इति टिलोपः । यद्वा—वाहृ प्रयत्ने इत्यस्माद्धातोस्तृजन्तादिष्ठन्प्रत्ययः । अभीष्टनिर्वहणं प्रयत्नः । हे विभावसो तेजोधन त्वमपि बृहत् प्रशस्तं मदीयं स्तोत्रं अर्च बहुमन्यस्व अङ्गीकुरु । किमिति देवतान्तरं मुक्त्वा अग्निरेव स्तूयते इत्यत आह—त्वत् त्वत्तः रयिः धनं उत्पद्यते । उदीरत इति वक्ष्यमाणबहुवचनान्तमत्र एकवचनान्तविपरिणामेन सम्बध्यते । कस्मादिव?—महिषीव, महान् ऋषिर्महर्षिः महेश्वरः । पृषोदरादित्वादाकारस्येत्वम्, रेफलोपश्च । ततः पञ्चम्येकवचनस्य 'सुपां सुलुक्' इति लुक्* । महाराजादिव त्वत्तो धनमुत्पद्यते । वृषादित्वादाद्युदात्तत्वम् । यद्वा—महिष्येव गृह्यते, यथा राजभार्यायाः रत्नादिकं लभते एवं त्वत्तोपि । 'अविमह्योष्टिषच्' इति महेष्टिषचि कृते टित्त्वात् ङीप्, उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे प्राप्ते 'महिष्याषाढयोरिष्टकाख्यायाम्' इत्या-

*क-'सुपां सुलुक्' इति पूर्वसवर्ण ईकारः । 'आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानम्' । यद्वा—महिषी राजभार्या । सापि महिषी । मत्वर्थीय ईकारः । पञ्चम्येकवचनस्य 'सुपां सुलुक्' इति लुक्.

स्त्वद्वाजा उदीरते । [12]अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तन-

द्युदात्तत्वम् । किञ्च—वाजाः अन्नान्यपि त्वत्तः उदीरते उत्पद्यन्ते । ईर गतौ कम्पने च, इत्यदादिकोऽनुदात्तेत्, 'आत्मनेपदेष्वनतः' इत्यदादेशः ॥

[12]तत्रैव याज्या—अग्ने त्वमिति चतुष्पदा त्रिष्टुप् ॥ हे अग्ने त्वं नव्यः, नव एव नव्यः । 'वस्वपसोककविक्षेमवचोनिष्केवलोक्थजनपूर्वनवसूरमर्तयविष्ठेभ्यश्छन्दसि स्वार्थे यद्वक्तव्यः' इति स्वार्थे यत्प्रत्ययः, 'यतो नावः' इत्याद्युदात्तत्वम् । अस्मानतिपारय अतिक्रम्य पारय । पार तीर कर्मसमाप्तौ । अविकलकर्मणः कुरु । किमतिक्रम्य?—विश्वा विश्वानि । 'शेश्छन्दसि बहुलम्' इति लोपः । दुर्गाणि दुःखेन गच्छन्ति येषु तानि दुर्गाणि विघ्नपराधलक्षणानि पापानि । 'सुदुरोरधिकरणे' इति गमेर्डः, कृदुत्तरपदप्रकृतिस्वरत्वम् । तान्यतिक्रम्यास्मान्पारय । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । नव्यो अस्मानिति 'प्रकृत्यान्तःपादमव्यपरे' इति प्रकृतिभावः । स्वस्तिभिश्शोभनैर्मार्गैः दुर्गातिक्रमणोपायभूतैः । अस गतौ 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्, 'तितुत्र' इतीट्प्रतिषेधः, कृदुत्तरपदप्रकृतिस्वरत्वम् । किञ्च—नोऽस्माकं तत्र वसतां पूः नगरी निवासस्थानं, पृथ्वी विस्तीर्णा महावकाशा अविकलकर्मफलोपभोगयोग्या भवत्विति शेषः । पृथुशब्दः कुप्रत्ययान्तत्वादन्तोदात्तः, 'ओतो गुणवचनात्' इति ङीप्, 'उदात्तयणो हल्पूर्वात्' इति नद्या उदात्तत्वम् । किञ्च—अस्माकं तत्र वसतां

याय॒ शं योः । [13]त्वम॑ग्ने व्र॒तपा अ॑सि दे॒व

उर्वी मेदिनी । स एव स्वरः । सा बहुळा भवतु बहुभिर्धनधान्यपश्वादिभिस्तद्वती भवतु । सिध्मादिलक्षणो लच् । यद्वा—बहूनामर्थानां लात्री आदात्री उत्पादयित्री भवतु । लातेः 'आतोनुपसर्गे' इति कः । किञ्च—तोकाय अस्मदीयाय अपत्याय तनयाय तस्यापत्याय अस्मत्पौत्राय शं शमयिता रोगाणां भव । शमेर्ण्यन्तात्क्विप्, मितां ह्रस्वः, 'णेरनिटि' इति णिलोपः । किञ्च—योः यापयिता पृथक्कर्ता आगामिनां भयानां अस्मदीयजनसकाशादपनेता च भव । यौतेः 'अन्येभ्योपि दृश्यन्ते' इति विच्, 'ओतो णित्' इति बहुलवचनान्न भवति । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति वा 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति वा चतुर्थ्यौ । तोकं तनयं च रक्षितुं शं योश्च भव । 'द्व्यचोतस्तिङः' इति संहितायामस्य दीर्घत्वम् ॥

[13]'अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निस्सन्नव्रत्यमिव चरेत्'* इत्यस्य पुरोनुवाक्या—त्वमग्ने इति त्रिपदा गायत्री, अष्टकसप्तकषट्कपदा प्रतिष्ठानाम्नी, 'षट्सप्तकाष्टकैर्वर्धमाना । विपरीता प्रतिष्ठा'† इति वचनात् ॥ देव इति सप्तमीबहुवचनस्य 'सुपां सुलुक्' इत्यादिना स्वादेशः । आकारौ समुच्चयवाचिनौ । हे अग्ने देवेषु च मर्त्येषु च त्वमेव व्रतपाः व्रतानां पाता रक्षकः नान्यः कश्चित् । पातेः 'अन्येभ्योपि दृश्यन्ते' इति वचनाद्विच्,‡ कृदुत्तरपदप्रकृतिस्वरत्वम् । किञ्च—त्वमेव यज्ञेषु ईड्यः स्तुत्यः । 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम् । अतोस्मानखण्डितव्रतान् पाहि । त्वामेव वयं स्तुम इति भावः ॥

*सं. २-२-२. †पिं. ३-१४, १५. ‡ख. ग—क्विप्.

आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः । [14]यद्वो व॒यं

[14]तत्रैव याज्या—यद्व इति चतुष्पदा त्रिष्टुप् ॥ हे देवा वो युष्माकं विदुषामखण्डितज्ञानानां सम्बन्धीनि व्रतानि कर्माणि वयं अविदुष्टरासः अविद्वत्तराः क्षणेक्षणे सम्भाव्यमानप्रमादाः । अय-स्मयादित्वेन भत्वाद्वसोस्सम्प्रसारणम्, 'आज्जसेरसुक्', अव्ययपूर्व-पदप्रकृतिस्वरत्वम् । ईदृशा वयं यद्यस्मात् प्रमिनाम हिंसितवन्तः । मीङ् हिंसायां क्र्यादिः, तस्मात् 'उपसंवादाशङ्कयोश्च' इत्या-शङ्कायां लेट् । कारणतः कार्यानुमानमाशङ्का । अज्ञानातिशयेन कर्मलोप आशङ्क्यते । 'लेटोडाटौ' इत्याडागमः, 'स उत्तमस्य' इति सकारलोपः, 'मीनातेर्निगमे' इति धातोः ह्रस्वत्वम्, 'हिनु-मीना' इति णत्वं बहुलवचनान्न भवति । तत् तस्मात्कारणाद्विश्वं (अ) खण्डितं सर्वं कर्मजातं अग्निरेवायमिज्यमानः व्रतपतिनामा आपृणाति आभिमुख्येन पूरयतु अखण्डितमापादयतु । पॄ पालनपूरणयोः, लेट् 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम्, विकरणव्यत्ययो वा । तत्रैव हेतुः—विद्वान्, यस्मादयमग्निर्विद्वान् । 'विदेश्शतुर्वसुः' 'उगिदचाम्' इति नुम्, 'सान्तमहतस्संयोगस्य' इति दीर्घः, संयोगान्तलोपः । सर्वज्ञ इत्यर्थः । तस्मादापूरणोपायज्ञो यथा स्यात्तथा* कर्तुं समर्थ एवेति भावः । के पुनस्त उपाया इत्यत आह—येभिर्यैः । 'बहुलं छन्दसि' इति भिस ऐस् । ऋतुभिः कालावयवैः पौर्णमास्यादिभिः युष्मान् देवानग्न्या[ग्ना]दीन् कल्प-याति देवशब्दवाच्यहविर्लाजाद्यैः [दीन् यैः] कल्पयाति कल्पयितु-मर्हति । 'अर्हे कृत्यतृचश्च' इति लिङर्थे लेट्, पूर्ववदाडागमः । तत्कालादीन†वयवान् विदुषोऽग्नेः व्रतस्याखण्डितत्वापादनमात्रं किय-

*ग—सर्वज्ञ इत्यर्थः । आपूरणोपायज्ञ एवं. †ख—तत्कालाद्य.

प्रेमिनाम व्रतानि विदुषाँ देवा अविदुष्टरासः । अग्निष्टद्विश्वमा पृणाति विद्वान् येभिर्देवाः ऋतुभिः कल्पयाति ॥ २८ ॥

जुषेथामा स नो यज्ञादा त्रयोविंशतिश्च ॥१४॥

इषे त्वा यज्ञस्य शुन्धध्वं कर्मणे वां देवोवंधूतं धृष्टिरसि वेधासि श्रिया देवे प्रत्युष्टं कृष्णोसि भुवनमसि वाजस्योभा वां चतुर्दश ॥ १४ ॥

इषे हविह भुवनमष्टाविंशतिः ॥ २८ ॥

इति प्रथमकाण्डे प्रथमः प्रपाठकः.

दिति भावः । तस्मादूतमनेन खण्डितमिति भवद्भिरुद्वेगो न कार्यः । अत्र संहितायामग्निष्टदिति 'युष्मत्तत्ततक्षुष्वन्तःपादम्' इति षः । ऋतुभिरित्यत्र 'दीर्घादटि समानपादे' इति रुत्वम्, 'आतोटि नित्यम्' इत्यनुनासिकः । एतदुक्तं भवति—अयमग्निः यैः पर्वभिरस्माभिः अननुष्ठितैरसन्तुष्टस्तद्विद्वान्* वर्तते तैस्सर्वैरदुष्टै[नुष्ठितै]रिव अस्मदनुग्रहाय सन्तुष्टः स देवानपीष्टानिव इष्टानस्मद्विषये प्रसन्नान् करोतु ॥

इति प्रथमकाण्डे प्रथमप्रपाठके चतुर्दशोनुवाकः.

इति भट्टभास्करविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये प्रथमकाण्डे प्रथमः प्रपाठकः.

*ख—अननुष्ठितैर्दुष्टमिति विद्वान्.

# तैत्तिरीयसंहितायाः

## पदपाठः

### प्रथमकाण्डे प्रथमः प्रश्नः



इषे । त्वा । ऊर्जे । त्वा । वायवः । स्थ । उपायव इत्युप-आयवः । स्थ । देवः । वः । सविता । प्रेति । अर्पयतु । श्रेष्ठतमायेति श्रेष्ठ-तमाय । कर्मणे । एति । प्यायध्वम् । अघ्नियाः । देवभागमिति देव-भागम् । ऊर्जस्वतीः । पयस्वतीः । प्रजावतीरिति प्रजा-वतीः । अनमीवाः । अयक्ष्माः । मा । वः । स्तेनः । ईशत । मा । अघशꣳस इत्यघ-शꣳसः । रुद्रस्य । हेतिः । परीति । वः । वृणक्तु । ध्रुवाः । अस्मिन् । गोपताविति गो-पतौ । स्यात । बह्वीः । यजमानस्य । पशून् । पाहि ॥ १ ॥

इषे त्रिचत्वारिꣳशत् ॥ १ ॥

यज्ञस्य । घोषत् । असि । प्रत्युष्टमिति प्रति-उष्टम् । रक्षः । प्रत्युष्टा इति प्रति-उष्टाः । अरातयः- प्रेति । इयम् । अगात् । धिषणा । बर्हिः । अच्छ ।

मनुना । कृता । स्वधयेति स्व-धया । वितृष्टेति
वि-तृष्टा । ते । एति । वहन्ति । कवयः । पुरस्तात् ।
देवेभ्यः । जुष्टम् । इह । बर्हिः । आसद इत्या-
सदे । देवानाम् । परिषूतमिति परि-सूतम् । असि ।
वर्षवृद्धमिति वर्ष-वृद्धम् । असि । देवबर्हिरिति देव-
बर्हिः । मा । त्वा । अन्वक् । मा । तिर्यक् । पर्व ।
ते । राध्यासम् । आच्छेत्तेत्या-छेत्ता । ते । मा ।
रिषम् । देवबर्हिरिति देव-बर्हिः । शतवल्शमिति
शत-वल्शम् । वीति । रोह । सहस्रवल्शा इति
सहस्र-वल्शाः ॥ २ ॥ वीति । वयम् । रुहेम ।
पृथिव्याः । सम्पृच इति सं-पृचः । पाहि । सुसम्भृ-
तेति सु-सम्भृता । त्वा । सामिति । भरामि ।
अदित्यै । रास्ना । असि । इन्द्राण्यै । संनहनमिति
सं-नहनम् । पूषा । ते । ग्रन्थिम् । ग्रथ्नातु । सः ।
ते । मा । एति । स्थात् । इन्द्रस्य । त्वा । बाहु-
भ्यामिति बाहु-भ्याम् । उदिति । यच्छे । बृह-
स्पतेः । मूर्ध्ना । हरामि । उरु । अन्तरिक्षम् ।
अन्विति । इहि । देवङ्गममिति देवम्-गमम् ।
असि ॥ ३ ॥

सहस्रवल्शा अष्टात्रिंशच्च ॥ २ ॥

शुन्धध्वम् । दैव्याय । कर्मणे । देवयज्याया इति देव-यज्यायै । मातरिश्वनः । घर्मः । असि । द्यौः । असि । पृथिवी । असि । विश्वधाया इति विश्व-धायाः । असि । परमेण । धाम्ना । दृꣳहस्व । मा । ह्वाः । वसूनाम् । पवित्रम् । असि । शतधारमिति शत-धारम् । वसूनाम् । पवित्रम् । असि । सहस्रधारमिति सहस्र-धारम् । हुतः । स्तोकः । हुतः । द्रप्सः । अग्नये । बृहते । नाकाय । स्वाहा । द्यावापृथिवीभ्यामिति द्यावा-पृथिवीभ्याम् । सा । विश्वायुरिति विश्व-आयुः । सा । विश्वव्यचा इति विश्व-व्यचाः । सा । विश्वकर्मेति विश्व-कर्मा । समिति । पृच्यध्वम् । ऋतावरीरित्यृत-वरीः । ऊर्मिणीः । मधुमत्तमा इति मधुमत्-तमाः । मन्द्राः । धनस्य । सातये । सोमेन । त्वा । एति । तनच्मि । इन्द्राय । दधि । विष्णो इति । हव्यम् । रक्षस्व ॥ ४ ॥

सोमेनाष्टौ च ॥ ३ ॥

कर्मणे । वाम् । देवेभ्यः । शकेयम् । वेषाय । त्वा । प्रत्युष्टमिति प्रति-उष्टम् । रक्षः । प्रत्युष्टा

इति प्रति-उष्टाः । अरातयः । धूः । असि । धूर्व । धूर्वन्तम् । धूर्व । तम् । यः । अस्मान् । धूर्वति । तम् । धूर्व । यम् । वयम् । धूर्वामः । त्वम् । देवानाम् । असि । सस्नितममिति सस्नि-तमम् । पप्रितममिति पप्रि-तमम् । जुष्टतममिति जुष्ट-तमम् । वह्नितममिति वह्नि-तमम् । देवहूतममिति देव-हूतमम् । अह्रुतम् । असि । हविर्धानमिति हविः-धानम् । दृꣳहस्व । मा । ह्वाः । मित्रस्य । त्वा । चक्षुषा । प्रेति । ईक्षे । मा । भेः । मा । समिति । विक्थाः । मा । त्वा ॥ ५ ॥ हिꣳसिषम् । उरु । वाताय । देवस्य । त्वा । सवितुः । प्रसव इति प्र-सवे । अश्विनोः । बाहुभ्यामिति बाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । अग्नये । जुष्टम् । निरिति । वपामि । अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम् । इदम् । देवानाम् । इदम् । उ । नः । सह । स्फात्यै । त्वा । न । अरात्यै । सुवः । अभि । वीति । ख्येषम् । वैश्वानरम् । ज्योतिः । दृꣳहन्ताम् । दुर्याः । द्यावापृथिव्योरिति द्यावा-पृथिव्योः । उरु । अन्तरिक्षम् । अन्विति । इहि । अदित्याः ।

त्वा । उपस्थ इत्युप-स्थे । सादयामि । अग्ने । हव्यम् । रक्षस्व ॥ ६ ॥

मा त्वा षट्चत्वारिꣳशच्च ॥ ४ ॥

देवः । वः । सविता । उदिति । पुनातु । अच्छिद्रेण । पवित्रेण । वसोः । सूर्यस्य । रश्मिभिरिति रश्मि-भिः । आपः । देवीः । अग्रेपुव इत्यग्रे-पुवः । अग्रेगुव इत्यग्रे-गुवः । अग्रे । इमम् । यज्ञम् । नयत । अग्रे । यज्ञपतिमिति यज्ञ-पतिम् । धत्त । युष्मान् । इन्द्रः । अवृणीत । वृत्रतूर्य इति वृत्र-तूर्ये । यूयम् । इन्द्रम् । अवृणीध्वम् । वृत्रतूर्य इति वृत्र-तूर्ये । प्रोक्षिता इति प्र-उक्षिताः । स्थ । अग्नये । वः । जुष्टम् । प्रेति । उक्षामि । अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम् । शुन्धध्वम् । दैव्याय । कर्मणे । देवयज्याया इति देव-यज्यायै । अवधूतमित्यव-धूतम् । रक्षः । अवधूता इत्यव-धूताः । अरातयः । अदित्याः । त्वक् । असि । प्रतीति । त्वा ॥ ७ ॥ पृथिवी । वेत्तु । अधिषवणमित्यधि-सवनम् । असि । वानस्पत्यम् । प्रतीति ।

त्वा । अदित्याः । त्वक् । वेत्तु । अग्नेः । तनूः । असि । वाचः । विसर्जनमिति वि-सर्जनम् । देववीतय इति देव-वीतये । त्वा । गृह्णामि । अद्रिः । असि । वानस्पत्यः । सः । इदम् । देवेभ्यः । हव्यम् । सुशमीति सु-शमि । शमिष्व । इषम् । एति । वद । ऊर्जम् । एति । वद । द्युमदिति द्यु-मत् । वदत । वयम् । सङ्घातमिति सं-घातम् । जेष्म । वर्षवृद्धमिति वर्ष-वृद्धम् । असि । प्रतीति । त्वा । वर्षवृद्ध-मिति वर्ष-वृद्धम् । वेत्तु । परापूतमिति परा-पूतम् । रक्षः । परापूता इति परा-पूताः । अरातयः । रक्षसाम् । भागः । असि । वायुः । वः । वीति । विनक्तु । देवः । वः । सविता । हिरण्यपाणिरिति हिरण्य-पाणिः । प्रतीति । गृह्णातु ॥ ८ ॥

त्वा भाग एकादश च ॥ ५ ॥

अवधूतमित्यव-धूतम् । रक्षः । अवधूता इत्यव-धूताः । अरातयः । अदित्याः । त्वक् । असि । प्रतीति । त्वा । पृथिवी । वेत्तु । दिवः ।

स्कम्भनिः । असि । प्रतीति । त्वा । अदित्याः । त्वक् । वेत्तु । धिषणा । असि । पर्वत्या । प्रतीति । त्वा । दिवः । स्कम्भनिः । वेत्तु । धिषणा । असि । पार्वतेयी । प्रतीति । त्वा । पर्वतिः । वेत्तु । देवस्य । त्वा । सवितुः । प्रसव इति प्र-सवे । अश्विनोः । बाहुभ्यामिति बाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । अधीति । वपामि । धान्यम् । असि । धिनुहि । देवान् । प्राणायेति प्र-अनाय । त्वा । अपानायेत्यप-अनाय । त्वा । व्यानायेति वि-अनाय । त्वा । दीर्घाम् । अन्विति । प्रसितिमिति प्र-सितिम् । आयुषे । धाम् । देवः । वः । सविता । हिरण्यपाणिरिति हिरण्य-पाणिः । प्रतीति । गृभ्णातु ॥ १ ॥

प्राणाय त्वा पञ्चदश च ॥ ६ ॥

धृष्टिः । असि । ब्रह्म । यच्छ । अपेति । अग्ने । अग्निम् । आमादमित्याम-अदम् । जहि । निरिति । क्रव्यादमिति क्रव्य-अदम् । सेध । एति । देवयजमिति देव-यजम् । वह । निर्दग्धमिति निः-दग्धम् । रक्षः । निर्दग्धा

इति निः-दग्धाः । अरातयः । ध्रुवम् । असि । पृथिवीम् । दृꣳह । आयुः । दृꣳह । प्रजामिति प्र-जाम् । दृꣳह । सजातानिति स-जातान् । अस्मै । यजमानाय । परीति । ऊह । धर्त्रम् । असि । अन्तरिक्षम् । दृꣳह । प्राणमिति प्र-अनम् । दृꣳह । अपानमित्यप-अनम् । दृꣳह । सजातानिति स-जातान् । अस्मै । यजमानाय । परीति । ऊह । धरुणम् । असि । दिवम् । दृꣳह । चक्षुः ॥१०॥ दृꣳह । श्रोत्रम् । दृꣳह । सजातानिति स-जातान् । अस्मै । यजमानाय । परीति । ऊह । धर्म । असि । दिशः । दृꣳह । योनिम् । दृꣳह । प्रजामिति प्र-जाम् । दृꣳह । सजातानिति स-जातान् । अस्मै । यजमानाय । परीति । ऊह । चितः । स्थ । प्रजामिति प्र-जाम् । अस्मै । रयिम् । अस्मै । सजातानिति स-जातान् । अस्मै । यजमानाय । परीति । ऊह । भृगूणाम् । अङ्गिरसाम् । तपसा । तप्यध्वम् । यानि । घर्मे । कपालानि । उपचिन्वन्तीत्युप-चिन्वन्ति । वेधसः । पूष्णः ।

तानि । अपीति । व्रते । इन्द्रवायू इतीन्द्र-वायू । वीति । मुञ्चताम् ॥ ११ ॥

चक्षुरष्टाचत्वारिꣳशच्च ॥ ७ ॥

समिति । वपामि । समिति । आपः । अद्भिरित्यत्-भिः । अग्मत । समिति । ओषधयः । रसेन । समिति । रेवतीः । जगतीभिः । मधुमतीरिति मधु-मतीः । मधुमतीभिरिति मधु-मतीभिः । सृज्यध्वम् । अद्भ्य इत्यत्-भ्यः । परीति । प्रजाता इति प्र-जाताः । स्थ । समिति । अद्भिरित्यत्-भिः । पृच्यध्वम् । जनयत्यै । त्वा । समिति । यौमि । अग्नये । त्वा । अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम् । मखस्य । शिरः । असि । घर्मः । असि । विश्वायुरिति विश्व-आयुः । उरु । प्रथस्व । उरु । ते । यज्ञपतिरिति यज्ञ-पतिः । प्रथताम् । त्वचम् । गृह्णीष्व । अन्तरितमित्यन्तः-इतम् । रक्षः । अन्तरिता इत्यन्तः-इताः । अरातयः । देवः । त्वा । सविता । श्रपयतु । वर्षिष्ठे । अधीति । नाके । अग्निः । ते । तनुवम् । मा । अतीति ।

धाक् । अग्ने । हव्यम् । रक्षस्व । समिति । ब्रह्मणा । पृच्यस्व । एकताय । स्वाहा । द्वितायं । स्वाहा । त्रितायं । स्वाहा ॥ १२ ॥

सविता द्वाविꣳशतिश्च ॥ ८ ॥

एति । ददे । इन्द्रस्य । बाहुः । असि । दक्षिणः । सहस्रभृष्टिरिति सहस्र-भृष्टिः । शततेजा इति शत-तेजाः । वायुः । असि । तिग्मतेजा इति तिग्म-तेजाः । पृथिवि । देवयजनीति देव-यजनि । ओषध्याः । ते । मूलम् । मा । हिꣳसिषम् । अपहत इत्यप-हतः । अररुः । पृथिव्यै । व्रजम् । गच्छ । गोस्थानमिति गो-स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितः । परमस्याम् । परावतीति परा-वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः । मा । मौक् । अपहत इत्यप-हतः । अररुः । पृथिव्यै । देवयजन्या इति देव-यजन्यै । व्रजम् ॥ १३ ॥ गच्छ । गोस्थानमिति गो-स्थानम् । वर्षतु । ते । द्यौः ।

बधान । देव । सवितः । परमस्याम् । परावतीति परा-वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः । मा । मौक् । अपहत इत्यप-हतः । अररुः । पृथिव्याः । अदेवयजन इत्यदेव-यजनः । व्रजम् । गच्छ । गोस्थानमिति गो-स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितः । परमस्याम् । परावतीति परा-वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः । मा ॥ १४ ॥ मौक् । अररुः । ते । दिवम् । मा । स्कान् । वसवः । त्वा । परीति । गृह्णन्तु । गायत्रेण । छन्दसा । रुद्राः । त्वा । परीति । गृह्णन्तु । त्रैष्टुभेन । छन्दसा । आदित्याः । त्वा । परीति । गृह्णन्तु । जागतेन । छन्दसा । देवस्य । सवितुः । सवे । कर्म । कृण्वन्ति । वेधसः । ऋतम् । असि । ऋतसदनमित्यृत-सदनम् । असि । ऋतश्रीरित्यृत-श्रीः । असि । धाः । असि । स्वधेति स्व-धा । असि । उर्वी । च । असि । वस्वी । च । असि । पुरा । क्रूरस्य । विसृप इति वि-सृपः । विराप्शिन्निति

वि-र॒प्शिन्न् । उ॒द्दा॒दायेत्यु॑त्-आ॒दाय॑ । पृ॒थि॒वीम् । जी॒रदा॑नु॒रिति॑ जी॒र-दा॒नुः । याम् । ऐर॑यन्न् । च॒न्द्रम॑सि । स्व॒धाभि॒रिति॑ स्व-धाभि॑ः । ताम् । धीरा॑सः । अ॒नु॒दृश्येत्य॑नु-दृश्य॑ । य॒जन्ते॒ ॥ १५ ॥

दे॒व॒यज॑न्यै व्र॒जन्तम॒तो मा वि॑रप्शि॒न्नेका॑दश च ॥ ६ ॥

प्रत्यु॑ष्ट॒मिति॒ प्रति॑-उ॒ष्टम् । रक्ष॑ः । प्रत्यु॑ष्टा॒ इति॒ प्रति॑-उ॒ष्टाः । अरा॑तयः । अ॒ग्नेः । वः॒ । तेजि॑ष्ठेन । तेज॑सा । निरिति॑ । त॒पा॒मि॒ । गो॒ष्ठमिति॑ गो-स्थम् । मा । निरिति॑ । मृ॒क्ष॒म् । वा॒जिन॑म् । त्वा॒ । स॒प॒त्न॒सा॒हमिति॑ सपत्न-सा॒हम् । समिति॑ । मा॒र्ज्मि॒ । वाच॑म् । प्रा॒णमिति॑ प्र-अ॒नम् । चक्षु॑ः । श्रोत्र॑म् । प्र॒जामिति॑ प्र-जाम् । योनि॑म् । मा । निरिति॑ । मृ॒क्ष॒म् । वा॒जिनी॑म् । त्वा॒ । स॒प॒त्न॒सा॒हीमिति॑ सपत्न-सा॒हीम् । समिति॑ । मा॒र्ज्मि॒ । आ॒शा॒सा॒नेत्या॑-शासा॑ना । सौ॒म॒न॒सम् । प्र॒जामिति॑ प्र-जाम् । सौभा॑ग्यम् । त॒नूम् । अ॒ग्नेः । अनु॑व्र॒तेत्यनु॑-व्र॒ता । भू॒त्वा ।

समिति । नह्ये । सुकृतायेति सु—कृताय । कम् । सुप्रजस इति सु—प्रजसः । त्वा । वयम् । सुपत्नीरिति सु—पत्नीः । उपेति ॥ १६ ॥ सेदिम । अग्ने । सपत्नदम्भनमिति सपत्न—दम्भनम् । अदब्धासः । अदाभ्यम् । इमम् । वीति । स्यामि । वरुणस्य । पाशम् । यम् । अबध्नीत । सविता । सुकेत इति सु—केतः । धातुः । च । योनौ । सुकृतस्येति सु—कृतस्य । लोके । स्योनम् । मे । सह । पत्या । करोमि । समिति । आयुषा । समिति । प्रजयेति प्र—जया । समिति । अग्ने । वर्चसा । पुनः । समिति । पत्नी । पत्या । अहम् । गच्छे । समिति । आत्मा । तनुवा । मम । महीनाम् । पयः । असि । ओषधीनाम् । रसः । तस्य । ते । अक्षीयमाणस्य । निरिति ॥ १७ ॥ वपामि । महीनाम् । पयः । असि । ओषधीनाम् । रसः । अदब्धेन । त्वा । चक्षुषा । अवेति । ईक्षे । सुप्रजास्त्वायेति सुप्रजाः—त्वाय । तेजः । असि । तेजः । अनु । प्रेति । इहि । अग्निः । ते । तेजः । मा । वीति । नैत् । अग्नेः । जिह्वा । असि । सुभूरिति सु—भूः । देवानाम् । धाम्ने-

धाम्न इति धाम्ने-धाम्ने । देवेभ्यः । यजुषेयजुष इति यजुषे-यजुषे । भव । शुक्रम् । असि । ज्योतिः । असि । तेजः । असि । देवः । वः । सविता । उदिति । पुनातु । अच्छिद्रेण । पवित्रेण । वसोः । सूर्यस्य । रश्मिभिरिति रश्मि-भिः । शुक्रम् । त्वा । शुक्रायाम् । धाम्नेधाम्न इति धाम्ने-धाम्ने । देवेभ्यः । यजुषेयजुष इति यजुषे-यजुषे । गृह्णामि । ज्योतिः । त्वा । ज्योतिषि । अर्चिः । त्वा । अर्चिषि । धाम्नेधाम्न इति धाम्ने-धाम्ने । देवेभ्यः । यजुषेयजुष इति यजुषे-यजुषे । गृह्णामि ॥ १८ ॥

उप नी रश्मिभिश्शुक्रꣳ षोडश च ॥१०॥

कृष्णः । असि । आखरेष्ठ इत्याखरे-स्थः । अग्नये । त्वा । स्वाहा । वेदिः । असि । बर्हिषे । त्वा । स्वाहा । बर्हिः । असि । स्रुग्भ्य इति स्रुक्-भ्यः । त्वा । स्वाहा । दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । स्वधेति स्व-धा । पितृभ्य इति पितृ-भ्यः । ऊर्क् । भव । बर्हिषद्भ्य इति बर्हिषत्-भ्यः । ऊर्जा । पृथिवीम् ।

गच्छत । विष्णोः । स्तूपः । असि । ऊर्णाम्रदस-मित्यूर्णा—म्रदसम् । त्वा । स्तृणामि । स्वासस्थ-मिति सु—आसस्थम् । देवेभ्यः । गन्धर्वः । असि । विश्वावसुरिति विश्व—वसुः । विश्व-स्मात् । ईषतः । यजमानस्य । परिधिरिति परि—धिः । इडः । ईडितः । इन्द्रस्य । बाहुः । असि ॥ १९ ॥ दक्षिणः । यजमानस्य । परिधि-रिति परि-धिः । इडः । ईडितः । मित्रावरुणाविति मित्रा—वरुणौ । त्वा । उत्तरत इत्युत्—तरतः । परीति । धत्ताम् । ध्रुवेण । धर्मणा । यजमानस्य । परिधिरिति परि—धिः । इडः । ईडितः । सूर्यः । त्वा । पुरस्तात् । पातु । कस्याः । चित् । अभि-शस्त्या इत्यभि—शस्त्याः । वीतिहोत्रमिति वीति—होत्रम् । त्वा । कवे । द्युमन्तमिति द्यु-मन्तम् । समिति । इधीमहि । अग्ने । बृहन्तम् । अध्वरे । विशः । यन्त्रे इति । स्थः । वसूनाम् । रुद्रा-णाम् । आदित्यानाम् । सदसि । सीद । जुहूः । उपभृदित्युप—भृत् । ध्रुवा । असि । घृताची । नाम्ना । प्रियेण । नाम्ना । प्रिये । सदसि । सीद । एताः । असदन् । सुकृतस्येति सु—कृतस्य ।

लोके । ताः । विष्णो इति । पाहि । पाहि । यज्ञम् । पाहि । यज्ञपतिमिति यज्ञ-पतिम् । पाहि । माम् । यज्ञनियमिति यज्ञ-नियम् ॥२०॥

वाहुरसि प्रिये सदसि पञ्चदश च ॥ ११ ॥

भुवनम् । असि । वीति । प्रथस्व । अग्ने । यष्टः । इदम् । नमः । जुहु । एति । इहि । अग्निः । त्वा । ह्वयति । देवयज्याया इति देव-यज्यायै । उपभृदित्युप-भृत् । एति । इहि । देवः । त्वा । सविता । ह्वयति । देवयज्याया इति देव-यज्यायै । अग्नाविष्णू इत्यग्ना-विष्णू । मा । वाम् । अवेति । क्रमिषम् । वीति । जिहाथाम् । मा । मा । समिति । तापम् । लोकम् । मे । लोककृताविति लोक-कृतौ । कृणुतम् । विष्णोः । स्थानम् । असि । इतः । इन्द्रः । अकृणोत् । वीर्याणि । समारभ्येति सं-आरभ्य । ऊर्ध्वः । अध्वरः । दिविस्पृशमिति दिवि-स्पृशम् । अह्रुतः । यज्ञः । यज्ञपतेरिति यज्ञ-पतेः । इन्द्रावानितीन्द्र-वान् । स्वाहा । बृहत् । भाः । पाहि । मा । अग्ने । दुश्चरितादिति दुः-चरि-

ताात् । एति । मा । सुचरित इति सु-चरिते । भज । मखस्य । शिरः । असि । समिति । ज्योतिषा । ज्योतिः । अङ्काम् ॥ २१ ॥

अङ्ङ्क्त एकविंशतिश्च ॥ १२ ॥

वाजस्य । मा । प्रसवेनेति प्र-सवेन । उद्ग्राभेणेत्युत्-ग्राभेण । उदिति । अग्रभीत् । अथ । सपत्नान् । इन्द्रः । मे । निग्राभेणेति नि-ग्राभेण । अधरान् । अकः । उद्ग्राभमित्युत्-ग्राभम् । च । निग्राभमिति नि-ग्राभम् । च । ब्रह्म । देवाः । अवीवृधन् । अथ । सपत्नान् । इन्द्राग्नी इतीन्द्र-अग्नी । मे । विषूचीनान् । वीति । अस्यताम् । वसुभ्य इति वसु-भ्यः । त्वा । रुद्रेभ्यः । त्वा । आदित्येभ्यः । त्वा । अक्तम् । रिहाणाः । वियन्तु । वयः । प्रजामिति प्र-जाम् । योनिम् । मा । निरिति । मृक्षम् । एति । प्यायन्ताम् । आपः । ओषधयः । मरुताम् । पृषतयः । स्थ । दिवम् ॥ २२ ॥ गच्छ । ततः । नः । वृष्टिम् । एति । ईरय । आयुष्पा इत्यायुः-पाः । अग्ने । असि । आयुः । मे । पाहि । चक्षुष्पा

इति चक्षुः-पाः । अग्ने । असि । चक्षुः । मे । पाहि । ध्रुवा । असि । यम् । परिधिमिति परि-धिम् । पर्यधत्था इति परि-अधत्थाः । अग्ने । देव । पणिभिरिति पणि-भिः । वीयमानः । तम् । ते । एतम् । अन्विति । जोषम् । भरामि । न । इत् । एषः । त्वत् । अपचेतयाता इत्यप-चेतयातै । यज्ञस्य । पाथः । उप । समिति । इतम् । सꣳस्रावभागा इति सꣳस्राव-भागाः । स्थ । इषाः । बृहन्तः । प्रस्तरेष्ठा इति प्रस्तरे-स्थाः । बर्हिषद इति बर्हि-सदः । च ॥ २३ ॥ देवाः । इमाम् । वाचम् । अभीति । विश्वे । गृणन्तः । आसद्येत्या-सद्य । अस्मिन्न् । बर्हिषि । मादयध्वम् । अग्नेः । वाम् । अपन्नगृहस्येत्यपन्न-गृहस्य । सदसि । सादयामि । सुम्नाय । सुम्निनी इति । सुम्ने । मा । धत्तम् । धुरि । धुर्यौ । पातम् । अग्ने । अदब्धायो इत्यदब्ध-आयो । अशीततनो इत्यशीत-तनो । पाहि । मा । अद्य । दिवः । पाहि । प्रसित्या इति प्र-सित्यै । पाहि । दुरिष्ट्या इति दुः-इष्ट्यै । पाहि । दुरद्मन्या

इति दुः—अग्मन्यै । पाहि । दुश्चरितादिति दुः—चरितात् । अविषम् । नः । पितुम् । कृणु । सुषदेति सु—सदा । योनिम् । स्वाहा । देवाः । गातुविद इति गातु—विदः । गातुम् । वित्वा । गातुम् । इत । मनसः । पते । इमम् । नः । देव । देवेषु । यज्ञम् । स्वाहा । वाचि । स्वाहा । वाते । धाः ॥ २४ ॥

दिवश्च वित्वा गातुन्त्रयोदश च ॥ १३ ॥

उभा । वाम् । इन्द्राग्नी इतीन्द्र—अग्नी । आहुवध्यै । उभा । राधसः । सह । मादयध्यै । उभा । दातारौ । इषाम् । रयीणाम् । उभा । वाजस्य । सातये । हुवे । वाम् । अश्रवम् । हि । भूरिदावत्तरेति भूरिदावत्—तरा । वाम् । विजामातुरिति वि—जामातुः । उत । वा । घ । स्यालात् । अथ । सोमस्य । प्रयतीति प्र—यती । युवभ्यामिति युव—भ्याम् । इन्द्राग्नी इतीन्द्र—अग्नी । स्तोमम् । जनयामि । नव्यम् । इन्द्राग्नी इतीन्द्र—अग्नी । नवतिम् । पुरः । दासपत्नीरिति दास—पत्नीः । अधूनुतम् । साकम् । एकेन ।

कर्मणा । शुचिम् । नु । स्तोमम् । नवजातमिति नव-जातम् । अद्य । इन्द्राग्नी इतीन्द्र-अग्नी । वृत्रहणेति वृत्र-हना । जुषेथाम् ॥ २५ ॥ उभा । हि । वाम् । सुहवेति सु-हवा । जोहवीमि । ता । वाजम् । सद्यः । उशते । धेष्ठा । वयम् । उ । त्वा । पथः । पते । रथम् । न । वाजसातय इति वाज-सातये । धिये । पूषन् । अयुज्महि । पथस्पथ इति पथः-पथः । परिपतिमिति परि-पतिम् । वचस्या । कामेन । कृतः । अभीति । आनट् । अर्कम् । सः । नः । रासत् । शुरुधः । चन्द्राग्रा इति चन्द्र-अग्राः । धियंधियमिति धियं-धियम् । सीषधाति । प्रेति । पूषा । क्षेत्रस्य । पतिना । वयम् । हितेन । इव । जयामसि । गाम् । अश्वम् । पोषयित्नु । एति । सः । नः ॥ २६ ॥ मृडाति । ईदृशे । क्षेत्रस्य । पते । मधुमन्तमिति मधु-मन्तम् । ऊर्मिम् । धेनुः । इव । पयः । अस्मासु । धुक्ष्व । मधुश्चुतमिति मधु-श्चुतम् । घृतम् । इव । सुपूतमिति सु-पूतम् । ऋतस्य । नः । पतयः । मृडयन्तु । अग्ने । नय । सुपथेति सु-पथा ।

राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् । युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नमउक्तिमिति नमः—उक्तिम् । विधेम । एति । देवानाम् । अपीति । पन्थाम् । अगन्म । यत् । शक्नवाम । तत् । अन्विति । प्रवोढुमिति प्र—वोढुम् । अग्निः । विद्वान् । सः । यजात् ॥ २७ ॥ सः । इत् । उ । होता । सः । अध्वरान् । सः । ऋतून् । कल्पयाति । यत् । बार्हिष्ठम् । तत् । अग्नये । बृहत् । अर्च । विभावसो इति विभा—वसो । महिषी । इव । त्वत् । रयिः । त्वत् । वाजाः । उदिति । ईरते । अग्ने । त्वम् । पारय । नव्यः । अस्मान् । स्वस्तिभिरिति स्वस्ति—भिः । अतीति । दुर्गाणीति दुः—गानि । विश्वा । पूः । च । पृथ्वी । बहुला । नः । उर्वी । भव । तोकाय । तनयाय । शम् । योः । त्वम् । अग्ने । व्रतपा इति व्रत—पाः । असि । देवः । एति । मर्त्येषु । आ । त्वम् । यज्ञेषु । ईड्यः । यत् । वः । वयम् । प्रमिनामेति प्र—मिनाम । व्रतानि । विदुषाम् । देवाः । अविदुष्टरास इत्यविदुः—तरासः । अग्निः । तत् । विश्वम् । एति ।

पृणाति । विद्वान् । येभिः । देवान् । ऋतुभिरि-
त्यृतु–भिः । कल्पयाति ॥ २८ ॥

जुषेथांमा स नौ यज्ञादा त्रयोविंशतिश्च ॥१४॥

इषे त्वा यज्ञस्य शुन्धध्वङ्कर्मणे देवोवधूत-
न्धृष्टिस्सं वपाम्या ददे प्रत्युष्टङ्कृष्णोसि
भुवनमसि वाजस्योभा वाश्वतुर्दश ॥

इषे हरहु भुवनमष्टाविंशतिः ॥

इषे त्वा कल्पयाति ॥

हरिः ओम् ॥





आप॑ उन्द॒न्तु जी॒वसे॑ दीर्घा-
यु॒त्वाय॒ वर्च॑स॒ ओष॑ध॒ त्राय॑स्वै-

[1]आप॑ः । उ॒न्द॒न्तु॒ । जी॒वसे॑ । दी॒र्घा॒यु॒त्वायेति॑ दीर्घायु–त्वाय॑ । वर्च॑से । [2]ओष॑धे । त्राय॑स्व ।

---

अथ द्वितीयः प्रपाठकः.

अतः परमग्निष्टोममन्त्राः, येषामाध्वरिका इत्याख्या । एषां च सोमः काण्डऋषिः 'कृणुष्व पाजः'* इत्यतः प्राक्, अध्वर-ग्रहदाक्षिणानां सोमार्षेयत्वात् ॥

[1]तत्र दीक्षिष्यमाणस्य यजमानस्य दक्षिणं गोदानमुनत्ति— आप इति द्विपदया गायत्र्या ॥ आपः उन्दन्तु क्लेदयन्तु आर्द्रीकुर्वन्तु । उन्दी क्लेदने, रौधादिकः, 'श्नसोरल्लोपः', 'श्नान्न-लोपः' । जीवसे जीवयितुं इमं यजमानम् । जीवेर्ण्यन्तात् 'तुमर्थे सेसेन्' इत्यादिना असेप्रत्ययः, णिलोपः । किं दिवसमात्रं जीवयितुम्? नेत्याह—दीर्घायुत्वाय । बहुव्रीहेर्भावप्रत्ययः । दीर्घमायुरस्य यथा स्यादित्येवमर्थम् । 'इणश्छन्दसि' इत्युण्-प्रत्ययः । किञ्च—वर्चसे तेजसे ॥

[2]ऊर्ध्वाग्रं बर्हिरनुच्छ्रयति—ओषध इति ॥ हे ओषधे बर्हि-रात्मिके । आमन्त्रिताद्युदात्तत्वम् । एनं यजमानं त्रायस्व रक्ष । स्वधितिव्यवधानमेव रक्षणं बर्हिषा ॥

---

*सं. १-२-१४.

नꣳ स्वधिते मैनꣳ हिꣳसीर्देवश्रू-
रेतानि प्र वपे स्वस्त्युत्तराण्यशी-

एनम् । [3]स्वधित इति स्व-धिते । मा । एनम् ।
हिꣳसीः । [4]देवश्रूरिति देव-श्रूः । एतानि ।
प्रेति । वपे । [5]स्वस्ति । उत्तराणीत्युत्-तराणि ।

---

[3]तस्मिन् बर्हिषि स्वधितिं तिर्यञ्चं निदधाति—स्वधित इति ॥ स्वस्मिन् प्रयोजने धितिरवस्थानमस्येति स्वधितिः स्वकार्यसमर्थः । धाञः आकारस्येकारः, बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम् , इह त्वामन्त्रिताद्युदात्तत्वम् । हे स्वधिते क्षुर एनं यजमानं मा हिंसीः । हिंसाप्रतिषेधो वप्तुरप्रमादाय ॥

[4]प्रवपति—देवश्रूरिति ॥ देवश्रूर्नाम देवनापितः, देवेषु श्रूयते तत्र प्रसिद्धिं गच्छतीति कृत्वा । शृणोतेः 'अन्येभ्योपि दृश्यन्ते' इति कर्मणि विच् ,* दृशिग्रहणस्य विध्यन्तरोपसङ्ग्रहार्थत्वाद्दीर्घत्वम् , कृदुत्तरपदप्रकृतिस्वरत्वम् । देवश्रूरेव भूत्वा अहमेतानि श्मश्रुप्रभृतीनि प्रवपे प्रकृष्टं वपे छिनद्मि । वपतिस्स्वरितेत् । 'केशश्मश्रु वपते'† इत्यादि ब्राह्मणम् ॥

[5]उत्तरदेशं यजमानोभिमृशति—स्वस्तीति ॥ स्वस्ति अविघ्नेनोत्तराणि कर्माणि अशीय व्याप्नुयाम् । अश्नोतेर्लिङि 'बहुलं छन्दसि' इति शपो‡ लुक् । सीयुडादि ॥

---

*ग. ख—क्विप्. †सं. ६-१-१.

‡अत्र अश्नोतेस्स्वादिगणपठितत्वेपि 'व्यत्ययो बहुलम्' (३-१-८५) इति विकरणव्यत्ययानुशासनात् शपः प्राप्तिरिति बोध्यम्.

यापो अस्मान्मातरंश्शुन्धन्तु घृ-
तेन नो घृतपुवः पुनन्तु विश्व-
मस्मत्प्र वहन्तु रिप्रमुदाभ्यश्शु-

अशीय । [6]आपः । अस्मान् । मातरः । शुन्धन्तु । घृतेन । नः । घृतपुव इति घृत-पुवः । पुनन्तु । [7]विश्वम् । अस्मत् । प्रेति । वहन्तु । रिप्रम् । [8]उदिति । आभ्यः । शुचिः । एति । पूतः । एमि ।

---

[6]यजमानमभिषिञ्चति—आपो अस्मानिति द्विपदया विराजा ॥ आपो मातरः मातृस्थानीयाः अस्मान् यजमानान् शुन्धन्तु शोधयन्तु । किञ्च—घृतेनोदकेन पुनन्तीति घृतपुवः । 'तन्वादीनां छन्दसि बहुळम्' इत्युवङादेशः, कृदुत्तरपदप्रकृतिस्वरत्वम् । पर्जन्यादय उच्यन्ते । ते चास्मान् घृतेनोदकेन पुनन्तु अपापान् कुर्वन्तु । घृ क्षरणे, घृतं क्षरणात् । 'अप्सु दीक्षातपसी'* इत्यादि ब्राह्मणम् ॥

[7]सम्प्रधाव्य रजः प्लावयति—विश्वमिति विराजैकपदया ॥ अस्मत् अस्मभ्यं अस्मदीयेभ्यो यजमानेभ्यः विश्वं रिप्रं पापं इमा आपः प्रवहन्तु देशान्तरं प्रापयन्तु नाशयन्त्विति यावत् ॥

[8]एति यजमानः—उदाभ्य इति विराजैकपदया ॥ शुचिः स्नानेन बाह्यतश्शुद्धः । पूतः आचमनेनान्तश्शुद्धः । 'अपोक्षात्यन्तरत एव मेध्यो भवति'* इति ब्राह्मणम् । एवं-

*सं. ६-१-१.

चित्रा पूत एमि सोमस्य तनूरसि
तनुवं मे पाहि महीनां पयोसि
वर्चोधा असि वर्चः ॥ १ ॥ मयि

[9]सोमस्य । तनूः । असि । तनुवम् । मे । पाहि ।
[10]महीनाम् । पयः । असि । वर्चोधा इति वर्चः—
धाः । असि । वर्चः ॥ १ ॥ मयि । धेहि ।

---

भूतस्सन्नहं आभ्योद्धृत्य उत्तीर्य एमि गच्छामि । आभ्य इति ‘ इदमोन्वादेशेऽशानुदात्तस्तृतीयादौ ’ इत्येकादेशोनुदात्तः ॥

[9]वासः परिधत्ते—सोमस्येति ॥ सोमस्य तनूः शरीरमसि शरीरमिव प्रियतममसि, तद्देवत्यत्वाद्वाससः । ‘ सौम्यं वै क्षौमं देवतया ’* इति च ब्राह्मणम् । ईदृशं त्वं मे मम तनुवं शरीरं पाहि पालय । ‘ कृषिचमितमि ’ इत्यादिना तनोतेरूप्रत्ययः, ‘ तन्वादीनां छन्दसि बहुलम् ’ इत्युवङादेशः । ‘ अग्नेस्तूषाधानम् ’* इत्यादि ब्राह्मणम् ॥

[10]नवनीतेन मुखमभ्यङ्क्ते—महीनामिति ॥ महीनां गवाम् । ‘ नामन्यतरस्याम् ’ इति विभक्तेरुदात्तत्वम् । पयोसि । पयोजातत्वात्पय इत्युच्यते । तत्कार्यत्वात् ताच्छब्द्यम् । किञ्च—वर्चसो दीप्तेः धाः धारकं चासि । लिङ्गव्यत्ययेन पुल्लिङ्गत्वम्, कृदुत्तरपदप्रकृतिस्वरत्वम् । ईदृशं त्वं मयि वर्चो धेहि । ‘ घृतं देवानाम्मस्तु पितृणाम् ’* इत्यादि ब्राह्मणम् ॥

---

*सं. ६-१-१.

धेहि वृत्रस्य कनीनिकासि चक्षु-
ष्पा असि चक्षुर्मे पाहि चित्प-
तिस्त्वा पुनातु वाक्पतिस्त्वा पु-
नातु देवस्त्वा सविता पुनात्व-

[11]वृत्रस्य । कनीनिका । असि । चक्षुष्पा इति चक्षुः-पाः । असि । चक्षुः । मे । पाहि । [12]चित्पतिरिति चित्-पतिः । त्वा । पुनातु । [13]वाक्पतिरिति वाक्-पतिः । त्वा । पुनातु । [14]देवः । त्वा । सविता । पुनातु । अच्छिद्रेण ।

[11]अञ्जनेनाङ्क्ते—वृत्रस्येति ॥ वृत्रस्य असुरस्य कनीनिका अक्षिस्थकृष्णमण्डलमासि । 'इन्द्रो वृत्रमहन् तस्य कनीनिका परापतत्'* इत्यादि ब्राह्मणम् । किञ्च—चक्षुष्पाः चक्षुषः पालयितृ त्वमसि । पातेर्विचि पूर्ववछिङ्गव्यत्ययस्स्वरश्च, 'नित्यं समासेनुत्तरपदस्थस्य' इति विसर्जनीयस्य सत्वम्, 'आदेशप्रत्यययोः' इति षत्वम् । ईदृशस्त्वं मम चक्षुः पाहि पालनं कुरु दोषरहितं कुरु ॥

[12—14]दर्भपुञ्जीलैर्यजमानं पवयति—चित्पतिरित्यादिभिः त्रिपदाभिर्गायत्रीभिः ॥ अच्छिद्रेणेति सर्वत्रानुषज्यते । चित् चैतन्यं ज्ञानम् । चेतयतेः 'अन्येभ्योपि दृश्यन्ते' इति क्विप् । तस्य पतिरुत्पादकः पालकः चित्पतिः मनइन्द्रियमुच्यते । 'मनो वै

*सं. ६-१-१.

च्छिद्रेण पवित्रेण वसोस्सूर्यस्य
रश्मिभिस्तस्यं ते पवित्रपते पवि-
त्रेण यस्मै कं पुने तच्छकेयमा

पवित्रेण । वसोः । सूर्यस्य । रश्मिभिरिति रश्मि-
भिः । [15]तस्यं । ते । पवित्रपत इति पवित्र–पते ।
पवित्रेण । यस्मै । कम् । पुने । तत् । शकेयम् ।

चित्पतिः '* इति ब्राह्मणम् । स त्वां पुनातु मानसा दोषा यथा न स्युस्तथा करोतु । किञ्च—वाचः शब्दस्य पतिरुत्पादकः वाक्पतिर्वागिन्द्रियमुच्यते, मनसोनन्तरं यस्य प्रवृत्तिः । 'यद्धि मनसा ध्यायति तद्वाचा वदति '† इति ब्राह्मणम् । स च त्वां पुनातु वाचिकेभ्यो दोषेभ्यो निवृत्तिं करोतु । 'वाचैवैनं पवयाति '* इति ब्राह्मणम् । अत्र 'न भूवाक्चिद्दिधिषु ' इत्युत्तरपदलक्षणे पूर्वपदप्रकृतिस्वरे निषिद्धे 'परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । किञ्च—देवस्सविता सर्वस्य प्रेरकः मनःप्रभृतेश्च प्रेरकः, स च त्वां पुनातु । अच्छिद्रेणेति व्याख्यातं 'देवो वस्सवितोत्पुनातु '‡ इत्यत्र । 'इन्द्रो वृत्रमहन् सोपोभ्यम्रियत '* इति ब्राह्मणम् ॥

[15]यजमानं वाचयति, स च ब्रूते—तस्य त इति ॥ हे पवित्रपते, अच्छिद्रपवित्रात्मका आदित्यस्य रश्मय इत्युक्ताः, तेषां पते, तस्य जगत्पालयितृत्वगुणविशिष्टस्य पवित्रेण रश्मिलक्षणेन यस्मै प्रयोजनाय कमात्मानमहं पुने शोधयामि ।

*सं. ६-१-१. †सं. ६-१-७. ‡सं. १-१-५[1]

वो देवास ईमहे सत्यधर्माणो
अध्वरे यद्वो देवास आगुरे यज्ञि-

[16]एति । वः । देवासः । ईमहे । सत्यधर्माण इति सत्य-धर्माणः । अध्वरे । यत् । वः । देवासः ।

---

आमन्त्र्ययस्योदात्तत्वे शेषस्य चानुदात्तत्वे 'आम्यस्तयोरातः' इत्याकारलोपे उदात्तनिवृत्तिस्वरेणोत्तमैकवचनस्योदात्तत्वम् । यद्वा— 'सतिशिष्टस्वरो बलीयानन्यत्र विकरणेभ्यः' इति आस्वरं बाधित्वा लसार्वधातुकस्वर एव प्रवर्तते । तदहं त्वत्प्रसादाच्छ-केयं निर्वर्तयितुं शक्तो भवेयम् । शकेराशिषि लिङि 'लिङ्या-शिष्यङ्' इत्यङ् । 'छन्दस्युभयथा' इति सार्वधातुकत्वा-त्सलोपः ॥

[16]शालां यजमानमानयति—आव इति चतुष्पदयानुष्टुभा । हे देवासः । 'आज्जसेरसुक्' । वः युष्मान् आभिमुख्येन ईमहे याचामहे । ईङ् गतौ भौवादिकः* छन्दसि याच्ञाकर्मा, 'बहुलं छन्दसि' इति शपो लुक् । यद्वा—भजामहे । सत्यधर्माणः सदा सत्यशीलाः । 'धर्मादनिच्केवलात्' इति समा-सान्तः । किमर्थमित्यत आह—अध्वरे यज्ञे निमित्तभूते । 'निमित्तात्कर्मसंयोगे सप्तमी' । अध्वरसिद्ध्यर्थमीमहे । बहु-व्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । एवं देवान् याचित्वा इदानीं तस्याध्वरस्य प्रस्थानं देवेभ्यो निवेदयति—

---

*क. ग–दैवादिकः.

यास्तो हवामह इन्द्राग्नी द्यावा-

आगुर इत्या-गुरे । यज्ञियासः । हवामहे ।
[17]इन्द्राग्नी इतीन्द्र-अग्नी । द्यावापृथिवी इति

हे देवासः यज्ञियासः यज्ञार्हाः । 'यज्ञर्त्विग्भ्यां घखञौ' इति घप्रत्ययः, उभयत्रापि पूर्ववदसुक् । आगुरे उद्योगे यज्ञमारब्धुम् । गुरी उद्यमने, 'घञर्थे कविधानम्' इति कः, थाथादिस्वरेणान्तोदात्तत्वम् । यद्वा—क्विपि छान्दसं विभक्त्युदात्तत्वम्, चतुर्थी [परा?]*द्युदात्तत्वम् । यद्यस्मात् वो युष्मान् हवामहे आह्वयामः । 'बहुलं छन्दसि' इति सम्प्रसारणम् । पूर्वस्यामन्त्रितस्याविद्यमानत्वान्निघाताभावः । 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वम् । यस्मादेवं तस्मादस्माभिः प्रस्तूयते†ध्वरः । अतस्तत्सिद्ध्यर्थं याचामह इति ॥

[17]शालां यजमानं प्रवेशयति—इन्द्राग्नी इति ॥ हे इन्द्राग्नी। षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । हे द्यावापृथिवी द्यावापृथिव्यौ। 'दिवो द्यावा' इति द्यावादेशः, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्, पूर्वस्याविद्यमानत्वादिदमप्याद्युदात्तमेव । हे आपः। पूर्ववत्स्वरः, द्वयोरप्यविद्यमानत्वात् । हे ओषधीरोषध्यः । 'कृदिकारादक्तिनः' इति ङीष्, पूर्वसवर्णदीर्घत्वं पूर्ववत् । ओषधिशब्देनोषधिकारणभूता आप उच्यन्ते । तेन सामानाधिकरण्यात् 'विभाषितं विशेषवचने बहुलवचनम्' इति पूर्वस्य विद्यमानत्वात् ओषधीरित्यामन्त्रितं निहन्यते । अयं यजमान-

*ख–चतुर्थी पूरणाद्युदात्तत्वम्. ग–चतुर्थी पुराद्युदात्तत्वम्.
†ख. ग–अस्माभिः स्तूयते.

पृथिवी आप ओषधीस्त्वन्दीक्षा-
णामधिपतिरसीह मा सन्तम्पाहि
॥ २ ॥ ॥ १ ॥

द्यावा-पृथिवी । आपः । ओषधीः । [18]त्वम् । दीक्षाणाम् । अधिपतिरित्यधि-पतिः । असि । [19]इह । मा । सन्तम् । पाहि ॥ २ ॥

वर्चं ओषधीरष्टौ च ॥ १ ॥

श्शालां प्रविशति एनमनुजानीतेति भावः । 'बहिः पवयित्वान्तः प्रपादयति '* इत्यादि ब्राह्मणम् ॥

[18]आहवनीयमन्वीक्षयति—त्वमिति ॥ हे आहवनीय त्वं दीक्षाणामधिपतिः स्वाम्यसि । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अतो मामपि दीक्षितं कुर्विति भावः ॥

[19]यजमान आत्मानमीक्षते—इहेति ॥ इह एतस्यां दीक्षायां सन्तं वर्तमानं मा मां पाहि ॥

इति प्रथमस्य काण्डस्य द्वितीयप्रपाठके प्रथमोनुवाकः.

*सं. ६-१-२.

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै
मनसेऽग्नये स्वाहा दीक्षायै तप-
सेऽग्नये स्वाहा सरस्वत्यै पूष्णे-

[1]आकूत्या इत्या—कूत्यै । प्रयुज इति प्र—युजे । अग्नये । स्वाहा । [2]मेधायै । मनसे । अग्नये । स्वाहा । [3]दीक्षायै । तपसे । अग्नये । स्वाहा । [4]सरस्वत्यै । पूष्णे । अग्नये । स्वाहा ।

[1—4]स्रुवेण चतस्रो दीक्षाहुतीर्जुहोति—आकूत्या इति ॥ आकूतिस्सङ्कल्पः । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । प्रयुङ्क्ते इति प्रयुक्, कर्मणां प्रयोक्ता । क्विपि कृदुत्तरपदप्रकृतिस्वरत्वम् । य आकूतिर्भूत्वा कर्माणि प्रयुङ्क्ते प्रवर्तयति, तस्मा अग्नये स्वाहा हुतमिदमस्तु । 'आकूत्या हि पुरुषः'* इत्यादि ब्राह्मणम् । मेधा ग्रन्थार्थधारणशक्तिः । मनुत इति मनः । मनोतेरसुन् । यो मेधा भूत्वा सर्वान् दुर्बोधानपि मनुते जानाति, तस्मा अग्नये स्वाहा इति । दीक्षा मौण्ड्यस्नानादिलक्षणा । तपतीति तपः । तपतेरसुन् । यो दीक्षा भूत्वा तपति दुःखयति तस्मा अग्नये स्वाहा । सरस्वती वाक् । पुष्णातीति पूषा । 'श्वन्नुक्षन्' इति पुष्णातेः कनिन्प्रत्ययो निपातितः । यस्सरस्वती भूत्वा सर्वानर्थान्पुष्णाति । यद्वा—पृथिवी पूषा, सर्वार्थपोषणत्वात् । 'पृथिवी पूषा'* इति

*सं. ६-१-२.

अग्नये स्वाहापो देवीर्बृहतीर्विश्व-
शम्भुवो द्यावापृथिवी उर्वन्तरिक्षं
बृहस्पतिर्नो हविषा वृधातु स्वाहा

[5]आपः । देवीः । बृहतीः । विश्वशम्भुव इति विश्व-शम्भुवः । द्यावापृथिवी इति द्यावा-पृथिवी । उरु । अन्तरिक्षम् । बृहस्पतिः । नः । हविषा ।

च ब्राह्मणम् । यस्सरस्वत्यात्मना पृथिव्यात्मना च स्थित्वा यागं निर्वर्तयति तस्मा अग्नये स्वाहा । 'वाचैव पृथिव्या यज्ञं प्रयुङ्क्ते'* इति ब्राह्मणम् । पूष्ण इत्युदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

[5]स्रुचा पञ्चमीं जुहोति—आप इति त्रिपदया विराजा । एकादशाक्षरास्त्रयः पादाः । उक्तं च, 'ईशैश्च' इति ॥ हे आपः । पाष्ठिकमामन्त्रिताद्युदात्तत्वम् । हे देवीः देव्यः दीप्तिमत्यः, बृहतीः बृहत्यः । उभयत्र 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । हे विश्वशम्भुवः विश्वस्य लोकस्य शं सुखं भावयन्तीति । भवतेर्ण्यन्तात्क्विप्, 'बहुलमन्यत्रापि संज्ञाच्छन्दसोः' इति णिलुक् । वर्ष्या आपः सस्यादिनिष्पादनद्वारेण सर्वस्य सुखं भावयन्तीति ता इहामन्त्र्यन्ते । 'या वै वर्ष्याः'* इत्यादि ब्राह्मणम् । अत्र 'विभाषितं विशेषवचने बहुलवचनम्' इति प्रथमस्य विद्यमानत्वादतः परमामन्त्रितत्रयं निहन्यते । हे

*सं. ६-१-२.

विश्वे॑ दे॒वस्य॑ ने॒तुर्मर्तो॑ वृणीत

वृ॒धा॒तु॒ । स्वाहा॑ । विश्वे॑ । दे॒वस्य॑ । ने॒तुः । मर्तः॑ ।

एवंविधा आपः येषां लोकानां भवत्यशरं भावयन्ति तान् लोकान् द्यावापृथिवी दिवं च पृथिवीं च । 'दिवो द्यावा,' इति द्यावादेशः । पृथिवीशब्दो ङीषन्तोन्तोदात्तः, 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोः प्रकृतिस्वरत्वम् । उरु चान्तरिक्षमसि । त्रीनपि लोकान्नोऽस्माकं अन्नेन हविषा बृहस्पतिर्ब्रह्मा वृधातु वर्धयतु । 'ब्रह्म वै देवानां बृहस्पतिः'* इति ब्राह्मणम् । वृधेर्ण्यन्ताल्लोट्, 'बहुलमन्यत्रापि' इति णिलुक् । विकरण-व्यत्ययेन शः, आगमव्यत्ययेनाडागम उत्तमस्योक्तः प्रथमस्यापि भवति । यद्वा—लेट उक्तो लोटोपि भवति । एवं यज्ञस्यैव वृद्ध्यर्थं तदाधाराणां लोकानां वृद्धिः प्रार्थ्यते । 'द्यावापृथि-व्योर्हि यज्ञः'* इत्यादि ब्राह्मणम् । वनस्पत्यादित्वाद्बृहस्पति-शब्दे पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्, बृहच्छब्दो वृत्तावाद्यु-दात्तः । स्वाहा सुहुतं चेदमस्तु, युष्मभ्यं वर्धयितव्येभ्यो लोकेभ्यः वर्धयित्रे च बृहस्पतये । एवं स्वाहाकाराधिक्यात् यजुरन्ता विराडियं वेदितव्या । एवमृग्यजुषसमुदायत्वात् अस्य यजुरित्यपि व्यपदेष्टुं शक्यते । यथा 'यदेतद्यजुर्न ब्रूयात्'* इति । भवति ह्यवयवधर्मेणापि समुदायव्यपदेशः, यथा कुष्टेषु चूर्णमिति । अनवसानत्वाद्वा यजुष्ट्वम् ॥

[6]स्रुचैवोद्ग्रहणं जुहोति—विश्वेदेवस्येत्यनुष्टुभा चतुष्पदया यजु-रन्तया । 'सा वा एषर्गनुष्टुक्'* इत्यादि ब्राह्मणम् । सप्ता-

*सं. ६-१-२;

सख्यं विश्वे राय इषुध्यसि द्युम्नं

वृणीत । सख्यम् । विश्वे । रायः । इषुध्यसि ।

क्षरं प्रथमं पदं, अष्टाक्षराणि त्रीण्यन्यानि ॥ विश्वे प्राणिनः देवस्य नेतुः प्रेरयितुः स्वभूताः वशवर्तिनः नेतव्यत्वेन वर्तन्ते अस्वतन्त्रा वर्तन्त इति यावत् । कोसौ नेता? सवितेति ब्रूमः । कुत एतत्?—'विश्वे देवस्य नेतुरित्याह सावित्र्येतेन'* इति ब्राह्मणदर्शनात् । स हि सर्वस्य प्रेरकः, येन यत्र यदा कर्म कृतं भोक्तव्यं तत्र नयति ग्रामाद्ग्रामम्, जागरितात्स्वप्नम्, स्वप्नाच्च जागरितम्, इतो लोकादमुं लोकम्, अमुतश्चेमम्, इति । एवं तेन सर्वस्येशानेन अस्वतन्त्रा जन्तवः इतश्चेतश्च पशुवन्नीयन्ते । किमधुना विजानता प्रतिपत्तव्यमित्याह—मर्तो वृणीत सख्यम् । मरणधर्मा मनुष्यः । 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' इति तन्प्रत्ययः । यत एवं देवः करोति अतोसौ मर्तो विजानन् देवेन सख्यं वरितुमर्हति त्वत्सकाशात् । 'अर्हे कृत्यतृचश्च' इति लिङ् । समानख्यानः सखा । 'समाने ख्यस्सचोदात्तः' इति ख्यातेरिण्प्रत्ययः, 'समानस्य छन्दसि' इति सभावः, यलोपः इति तत्रानुवर्तते, तस्य भावः सख्यम्, 'सख्युर्यः' इति यः । अयमर्थः—देवेन सवित्रा यत्समानाख्यानत्वं सारूप्यमेकत्वं वा, यस्मिन् सति स एव भूत्वा पारतन्त्र्याद्विमुक्तस्सर्वस्य स्वयं नेता सम्पद्यते, तत्क्षिप्रमयं मर्त्यस्त्वत्सकाशाद्वरीतुमर्हति । इदानीमस्य देवेन सख्यं कृतवतः मर्त्यस्याग्निसकाशात्समुपजायमाना सिद्धिरुच्यते—इषुध्यसि; त्वमपि देवसख्यं

*सं. ६-१-२.

वृतवन्तमिमं जनमिषुधिमिवाचरसि; यथा इषुधिरिषूणां निधानं भवति, एवमिमं सर्वसिद्धीनां भाजनत्वेनाचरसि; तादृशमेनं करोषीति यावत् । 'उपमानादाचारे' इति क्यच्, 'कव्यध्वरपृतनस्य' इति विधीयमानो लोपो व्यत्ययेन भवति । अथवा—इषुध शरधारणे, इति कण्ड्वादिरयं द्रष्टव्यः । देवसख्यं गतवतोस्य त्वमिषुध्यसि, इषूणामिषुधिरिव इषुस्थानीयानां सिद्धीनामपादानत्वेनाधारत्वेन च वर्तस इत्यर्थः । एवमामुष्मिका[की]णां सिद्धीनामग्निरेव दातेत्युक्तम् । इदानीमैहिका[की]नामपि दातृत्वं प्रतिपाद्यते । तत्र धनाधीनत्वात्सर्वसिद्धीनां तन्माहात्म्यं प्रतिपादयति—विश्वे राय इति । रायो धनस्य गोभूमिहिरण्यौदनादिलक्षणस्य विश्वे प्राणिनः । किं? वशवर्तिनः तत्परतन्त्राःसर्वे इतश्चेतश्च नीयन्ते देवा अपि, किं पुनर्मनुष्याः । कुत एतत्? 'वैश्वदेव्येतेन'* इति ब्राह्मणदर्शनात् । यत एवं तस्मादयं मर्त्यश्शीघ्रमेव त्वत्सकाशाद्द्युम्नं धनं वृणीत वरितुमर्हति । स एव लिङ् । त्वमपि तत् द्युम्नं वृणानं मर्त्यं पुष्यसे पोषयसि । पुष पुष्टौ, दैवादिकः उदात्तेत्, व्यत्ययेनात्मनेपदम् । सर्वाभिमतधनसम्पत्तिः पुष्टिः । यद्वा—तस्य पुरुषस्य द्युम्नं त्वया पुष्यते । पुरुषव्यत्ययेन मध्यमः, स च तिङः परत्वान्न निहन्यते, 'अदुपदेशात्' इति लसार्वधातुकत्वानुदात्तत्वे कृते विकरणस्यैव स्वरः, श्यनस्तु स्वरव्यत्ययेनोदात्तत्वम् । स्वाहा सुहुतमिदमौद्ग्रहणाख्यं हविरस्तु । यज्ञस्योद्ग्रहणहेतुत्वादियमृगुद्ग्रहणी, इदं हविरौद्ग्रहणम् यदनया दीयते । 'प्रजापतिर्यज्ञमसृजत सोस्मात्सृष्टः पराङैत्स प्रयजुरव्लीनात्'* इत्यादि ब्राह्मणम् ॥

---

*सं. ६-१-२.

वृणीत पुष्यसे स्वाहर्क्सामयो-
शिल्पे स्थस्ते वामा रभे ते
मां ॥३॥ पातमास्य यज्ञस्योदृचं

द्युम्नम् । वृणीत । पुष्यसे । स्वाहा । [7]ऋक्सामयो-रित्यृक्-सामयोः । शिल्पे इति । स्थः । ते इति । वाम् । एति । रभे । ते इति । मा ॥३॥ पातम् । एति । अस्य । यज्ञस्य । उदृच इत्युत्-ऋचः ।

---

[7]कृष्णाजिनस्य शुक्लकृष्णे अङ्गुष्ठाङ्गुलिभ्यां सम्मृशति—ऋक्सामयोरिति ॥ अचतुरादिसूत्रेण ऋक्सामशब्दोऽच्प्रत्ययान्तो निपातितः । हस्तविषयं कौशलं शिल्पम् । हे शुक्लकृष्णे ऋक्सामयोश्शिल्पे स्थः । तत्र ऋचश्शिल्पं शुक्लं, साम्नः कृष्णम् । 'एष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्य '* इत्यादि ब्राह्मणम् । ते तादृशे वां युवां अहमारभे आलभे स्पृशामि । रलयोरेकत्वं स्मर्यते । ते च मया स्पृष्टे युवां मां पातं रक्ष-तम् । कुत इत्यत आह—अस्य यज्ञस्य आ उदृच आ उदयात् समाप्तेरिति यावत् । ऋच स्तुतौ, इह तु धातूनामनेकार्थत्वात् गतौ वर्तते, स्तोमाभिप्रायं वा, तत उत्पूर्वात्सम्पदादिलक्षणः क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम् । 'ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने '* इत्यादि ब्राह्मणम् ॥

---

*सं. ६-१-३.

इमान्धियꣳ शिक्षमाणस्य देव
क्रतुन्दक्षं वरुण सꣳशिशाधि
ययाति विश्वा दुरिता तरेम

[8]इमाम् । धियम् । शिक्षमाणस्य । देव । क्रतुम् । दक्षम् । वरुण । समिति । शिशाधि । यया । अतीति । विश्वा । दुरितेति दुः—इता । तरेम । सुतर्माणमिति सु—तर्माणम् । अधीति । नावम् ।

---

[8]कृष्णाजिनमभिसर्पति—इमामिति त्रिष्टुभा चतुष्पदया ॥ तत्र देवशब्दान्तः प्रथमः । इमामग्निष्टोमविषयां धियं प्रज्ञां शिक्षमाणस्योपाददानस्य पुरुषस्य । शिक्ष विद्योपादाने 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः । दक्षमभिवृद्धिकरम् । दक्ष वृद्धौ शीघ्रार्थे च । प्रवर्तकं वा । क्रतुमग्निष्टोमाख्यमिममस्मदीयं यागं हे देव वरुण संशिशाधि संशितं कुरु, स्वकार्यसमर्थमित्यर्थः। श्यतेर्लोटि 'बहुलं छन्दसि' इति शपश्श्लुः, 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम्, 'सेर्ह्यपिच्च' इति 'वा छन्दसि' इत्यापित्त्वप्रतिषेधात् पित्त्वेन ङित्त्वाभावात् 'अङितश्च' इति ईडभावः । इदानीं धीर्विशेष्यते—यया धिया विश्वा दुरिता विश्वानि दुरितानि । 'शेश्छन्दसि बहुलम्' इति शलोपः । दुःखेन यन्ति एतेष्विति दुरितानि । 'क्तोऽधिकरणे च' इत्यधिकरणे निष्ठा, थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । श्रेयसो विघातकानि कर्माण्युच्यन्ते । तानि सर्वाणि ययाऽतितरेम अतिक्रम्य

सुतर्माणमधि नावꣳ रुहेमोर्ग-
स्याङ्गिरस्यूर्णम्रदा ऊर्जम्मे यच्छ

रुहेम । [9]ऊर्क् । असि । आङ्गिरसी । ऊर्णम्रदा इत्यूर्णं–म्रदाः । ऊर्जम् । मे । यच्छ । पाहि ।

गच्छेम तामिमां धियमिति सम्बध्यते । ननु दुरितसागरं तितीर्षूणां सम्यक्प्रज्ञावतामपि कया चिन्नावा भवितव्यमित्यत आह—सुतर्माणमिति, सुष्ठु दुरितानां तारणकुशलाम् । 'अन्येभ्योपि दृश्यते' इति तरतेर्मनिन्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् । ईदृशीं नावमग्निष्टोमात्मिकाम् वयमधिरुहेम अधिरूढा भूयास्म अनेन चर्माधिरोहणेनेति । रुहेराशिषि लिङ्, 'लिङ्याशिष्यङ्' । 'यज्ञो वै सुतर्माणम्' इति ब्राह्मणम् । 'कृष्णाजिनेन दीक्षयति ब्रह्मणो वा एतद्रूपं यत्कृष्णाजिनम्'* इति ब्राह्मणम् ॥

[9]मेखलां पर्यस्यति—ऊर्गसीति ॥ ऊर्जयतेः सम्पदादिलक्षणः क्विप् । बलं रसो वाभिधीयते । अङ्गिरसामियमाङ्गिरसीति, यामङ्गिरसो व्यभजन्त । 'अङ्गिरसः सुवर्गं लोकं यन्त ऊर्जं व्यभजन्त'* इत्यादि ब्राह्मणम् । हे मेखले आङ्गिरसि ऊर्क् त्वमसि ऊर्क्परिणामभूतैश्शरैर्निर्मितत्वात् ऊर्ग्व्यपदेशः । पुनश्च विशेष्यते—ऊर्णम्रदाः, ऊर्णा अविसूत्रं, तद्वन्मृद्वी । मृदु मर्दने, असुन्प्रत्ययः । 'ङ्यापोस्संज्ञाछन्दसोर्बहुळम्' इति पूर्वपदस्य ह्रस्वत्वम्, उपमानपूर्वपदप्रकृतिस्वरत्वम् । ईदृशी त्वमूर्जं बलं मह्यं यच्छ देहि पाहि च माम् । तिङः परत्वान्न निहन्यते । मा च मा हिंसीः ॥

*सं. ६-१-३.

पाहि मा मा मां हिंसीर्वि-
ष्णोश्शर्मासि शर्म यजमानस्य
शर्म मे यच्छ नक्षत्राणाम्माती-
काशात्पाहीन्द्रस्य योनिरसि ॥४॥

मा । मा । मा । हिंसीः । [10]विष्णोः । शर्म ।
असि । शर्म । यजमानस्य । शर्म । मे । यच्छ ।
[11]नक्षत्राणाम् । मा । अतीकाशात् । पाहि ।
[12]इन्द्रस्य । योनिः । असि ॥४॥ मा । मा ।

---

[10]वाससा यजमानं प्रोर्णोति—विष्णोरिति ॥ विष्णोरपि शर्म सुखमसि सुखहेतुरसि । यज्ञो वै विष्णुः । किञ्च— यजमानस्य शर्मासि । लसार्वधातुकानुदात्तत्वे धातुस्वरः । ईदृशस्त्वं मह्यमपि शर्म यच्छ देहि ॥

[11]वसनच्छिद्रेषु यजमानं वाचयति—नक्षत्राणामिति ॥ अतीकाशश्छिद्रं, अतीत्य काशत इत्यतीकाशः । पचाद्यच्, घञ् वाधिकरणे, उभयत्रापि थाथादिस्वरेणान्तोदात्तत्वम्, 'इकः काशे' इति दीर्घत्वम् । नक्षत्राणां सम्बन्धी योतीकाशः नक्षत्रदेवत्यत्वान्नक्षत्राणामतीकाश इति । तस्मान्मां पाहि । हे वासः अतीकाशनिमित्तमनाच्छादनं दोषत्वेन न मन्तव्यम् । नक्षत्राण्येव हि तं दोषं परिहरिष्यन्तीति भावः ॥

[12]कृष्णविषाणे यजमानाय प्रयच्छति—इन्द्रस्येति ॥ इन्द्रस्यापि योनिः कारणमसि त्वम् । ईदृशी त्वं मा मा हिंसीः ।

मा मां हिꣳसीः कृष्यै त्वां सु-
सस्यायै सुपिप्पलाभ्यस्त्वौषधी-
भ्यस्सूपस्था देवो वनस्पति-

हिꣳसीः । [13]कृष्यै । त्वा । सुसस्याया इति सु-
सस्यायै । [14]सुपिप्पलाभ्य इति सु-पिप्पलाभ्यः ।
त्वा । ओषधीभ्य इत्योषधि-भ्यः । [15]सूपस्था

त्वां यजमानाय प्रयच्छामीति भावः । 'यज्ञो दक्षिणामभ्यध्या-यत्तां समभवत्' इत्यारभ्य 'सा कृष्णविषाणाऽभवत्'* इत्यन्ते ब्राह्मणे स्पष्टमिन्द्रयोनित्वमस्याः ॥

[13]तयान्तर्वेदि लोष्टमुद्धन्ति—कृष्यै त्वेति ॥ हे पृथिवि या सुसस्या शोभनसस्या कृषिः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । तदर्थं त्वामुद्धरामीति शेषः । 'इगुपधात्किः' इति किप्रत्ययान्तोन्तोदात्तः कृषिशब्दः । 'उदात्तयणो हल्पूर्वात्' इति ततः परस्याश्चतुर्थ्या उदात्तत्वम् ॥

[14]तया दक्षिणं गोदानं कण्डूयते—सुपिप्पलाभ्य इति ॥ यास्सुपिप्पलाः शोभनफलाः शोभनकरणिका ओषधयः, तदर्थं त्वां कण्डूये इति शेषः । पूर्ववत्स्वरः । ओषधिशब्दे तु दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । 'ओषधेश्च विभक्तावप्रथमायाम्' इति दीर्घः । 'यद्धस्तेन कण्डूयेत'* इत्यादि ब्राह्मणम् ॥

[15]औदुम्बरं दण्डं यजमानाय प्रयच्छति—सूपस्था इति ॥ सुष्ठु उपस्थीयते अवष्टभ्य स्थीयते मैत्रावरुणेन प्रैषे कृते ।

*सं. ६-१-३.

**ऊर्ध्वो मा पाह्योदृचस्स्वाहा यज्ञ-**
**म्मनसा स्वाहा द्यावापृथिवीभ्याꣳ**

**इति सु-उपस्थाः । देवः । वनस्पतिः । ऊर्ध्वः । मा । पाहि । एति । उदृच इत्युत्-ऋचः । [16]स्वाहा । यज्ञम् । मनसा । [17—18]स्वाहा । द्यावा-**

---

तिष्ठतेः ‘अन्येभ्योपि दृश्यते’ इति कर्मणि क्विप्, कृदुत्तर-पदप्रकृतिस्वरत्वम् । यद्वा—उपस्थानमुपस्था । भावे क्विप्, शोभनमुपस्थानं यस्मिन्निति बहुव्रीहौ ‘नञ्सुभ्याम्’ इत्युत्तर-पदान्तोदात्तत्वम्, अस्त्रीप्रत्ययान्तत्वाद्ध्रस्वाभावः । देवः दीप्तिमान् वनस्पतिः वनस्पतिविकारः, कार्ये कारणशब्दः । ‘उभे वनस्पत्यादिषु युगपत्’ इति पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम् । पारस्करप्रभृति-त्वात्सुट् । ऊर्ध्वः अकुटिलः । ईदृशस्त्वं मां पाहि रक्ष । ओदृचः आसमाप्तेर्यज्ञस्य । पूर्ववत्प्रत्ययः स्वरश्च । ईदृशं त्वां यजमानाय प्रयच्छामीति भावः । ‘वाग्वै देवेभ्योऽपाक्रामत्’* इत्यादि ब्राह्मणम् ॥

[16—20]यजमानं वाचयति—स्वाहेति ॥ आरभ इति सर्वत्र सम्बध्यते, यस्मादित्थं कर्तव्यमिति स्वयमेवाह वाक् तस्मात् त्वयानुज्ञातोहं प्रथमं तावन्मनसा यज्ञमारभे यज्ञाभिमुखं मनः करोमीति । ‘मनसा हि पुरुषो यज्ञमभिगच्छति’* इति ब्राह्मणम् । किञ्च—तस्या एव वचनेन द्यावापृथिवीभ्यां यज्ञ-

---

*सं. ६-१-४.

स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वा-
ताद्दा रंभे ॥ ५ ॥

पृथिवीभ्यामिति द्यावा—पृथिवीभ्याम् । [19]स्वाहा । उरोः । अन्तरिक्षात् । [20]स्वाहा । यज्ञम् । वातात् । एति । रभे ॥ ५ ॥

मा योनिरसि त्रिꣳशच्च ॥ २ ॥

---

मारभे यज्ञसाधनानां यज्ञजानां* द्यावापृथिव्योः स्थितत्वात् । 'द्यावापृथिव्योर्हि यज्ञः '† इति च ब्राह्मणम् । यद्वा— द्यावापृथिव्योः स्थित्यर्थं यज्ञमारभे । द्यावापृथिव्योर्हि यज्ञः स्थितिहेतुत्वेन वर्ण्यते । 'देवताद्वन्द्वे च ' इति युगपत्पूर्वोत्तर-पदयोः प्रकृतिस्वरत्वम् । द्यावाशब्द आद्युदात्तः । पृथिवीशब्दो ङीषन्तोन्तोदात्तः । किञ्च—पुनरपि तस्या एव वचनेन उरोरन्त-रिक्षाद्यज्ञमारभे, अन्तरिक्षानुगृहीतत्वात्सर्वार्थानाम् । 'अन्तरिक्षे हि यज्ञः '† इति च ब्राह्मणम् । किञ्च—पुनरपि तस्या एव वचनेन वाताद्यज्ञमारभे । आत्मसमवेतक्रियाशक्तिरूपपरिस्पन्दात्मा प्राणो वातः । ततो यज्ञमारभे, तदधीनत्वात्सर्वव्यापाराणाम् । 'वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते '‡ इति ब्राह्मणम् ॥

इति प्रथमस्य काण्डस्य द्वितीयप्रपाठके द्वितीयोनुवाकः.

---

*क. रभे यज्ञसाधनफलानां. †सं. ६-१-४. ‡ब्रा. ३-३-९.

दैवीन्धियम्मनामहे सुमृडीकाम-
भिष्टये वर्चोधां यज्ञवाहसꣳ सुपारा

[1]दैवीम् । धियम् । मनामहे । सुमृडीकामिति सु–मृडीकाम् । अभिष्टये । वर्चोधामिति वर्चः–धाम् । यज्ञवाहसमिति यज्ञ–वाहसम् । सुपारेति

[1]मध्यरात्रे प्रबुद्धो यजमान आचामति—दैवीं धियमित्यनुष्टुभा चतुष्पदया ॥ देवानामियं दैवी यया देवान् यष्टुं शक्नोति । 'देवाद्यञञौ' इत्यञ्, ञित्त्वादाद्युदात्तत्वम् । तां धियं मनामहे अभ्यस्यामः, भूयोभूयोपि सम्पादयामः । 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' इति मनादेशः, व्यत्ययेनात्मनेपदम् । सा पुनर्धीः कीदृशीत्याह—सुमृडीकाम् । शोभना मृडीका यस्यामिति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । मृड सुखने, तस्मात् 'मृडेरीकन्कननौ' इति कन्प्रत्ययः* । सुखयितारस्सुखहेतवः उच्यन्ते । वर्चोधां वर्चसो दीप्तेर्धात्रीम् । 'आतोनुपसर्गे कः,' कृदुत्तरपदप्रकृतिस्वरत्वम् । यज्ञवाहसं यज्ञं वहतीति यज्ञवाहाः यज्ञनिर्वहणक्षमाम् । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात् 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन्प्रत्ययः कारकपूर्वादपि भवति, 'वसोर्णित्' इति तत्रानुवर्तते, ततो वृद्धिः, यज्ञशब्दो नङ्प्रत्ययान्तोऽन्तोदात्तः । किमर्थं मनामहे? अभिष्टये आभिमुख्येन या इष्टिः देवानां तदर्थम् ।

*क—'मृडेरीकक्कनौ' इतीकप्रत्ययः. [ 'मृडः कीकन्कङ्कणौ' (उ ४–२४)

नो असद्वशे । ये देवा मनोजाता
मनोयुजस्सुदक्षा दक्षपितारस्ते नः
पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्य-

सु-पारा । नः । असत् । वशे । [2]ये । देवाः । मनोजाता इति मनः-जाताः । मनोयुज इति मनः-युजः । सुदक्षा इति सु-दक्षाः । दक्षपितार इति दक्ष-पितारः । ते । नः । पान्तु । ते । नः ।

---

'एमन्नादिषु पररूपं वक्तव्यम्' इति पररूपत्वम्, वर्णव्यत्ययेन वा ह्रस्वः; 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वरत्वम्, 'उपसर्गाश्चाभिवर्जम्' इत्यभिशब्दोन्तोदात्तः; व्युत्पत्त्यनवधारणान्नावगृह्यते । आभिमुख्येन देवान् यष्टुं दैवीं धियं मनामहे । सा च धीः सुपारा शोभनावसाना सुष्ठु कर्मणां समाप्तिसाधनभूता । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—पार तीर कर्मसमाप्तौ, सुष्ठु पारयित्री कर्मणः । पचाद्यच्, कृदुत्तरपदप्रकृतिस्वरत्वम्, थाथादिस्वरो वा । ईदृशी भूत्वा नोऽस्माकं वशे असत् अस्तु अस्मद्वशे वर्तताम् । अस्तेर्लेटि 'लेटोडाटौ' इत्यडागमः, 'इतश्च लोपः परस्मैपदेषु' ॥

[2]व्रतयाति—ये देवा इति ॥ 'प्राणा वै देवा मनोजाता मनोयुजः'* इति ब्राह्मणदर्शनात् चक्षुरादयः प्राणाः देवाः, ते हि देवनवन्तः ।

मनोजाताः जातमनसः, मनोव्यापारमन्तरेण स्वकार्यकरणासम्भवात्। 'निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्' इति जातशब्दस्य परवचनम्। 'वा जाते' इत्युत्तरपदान्तोदात्तत्वाभावे 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरत्वम्, मनश्शब्दोऽसुन्प्रत्ययान्त आद्युदात्तः। मनोयुजः मनसा मननेन विषयावधारणलक्षणेन युज्यन्त इति। 'सत्सूद्विष' इति क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम्। सुदक्षाः—दक्षन्त इति दक्षाः निपुणाः प्रतिपत्तारः। दक्ष वृद्धौ, पचाद्यच्, वृषादित्वादाद्युदात्तः। शोभना दक्षा येषु मनोयुक्तेषु प्रवर्तमानेषु ते सुदक्षाः। 'आद्युदात्तं द्व्यच्छन्दसि' इत्युदात्तत्वम्। यद्वा—दाक्षिण्यं दक्षः। घञन्तः आद्युदात्तः, सुष्ठु दाक्षिण्यं येषामिति बहुव्रीहौ पूर्ववदुत्तरपदाद्युदात्तता। यद्वा—सुष्ठु दक्षाः सुदक्षाः। 'परादिश्छन्दसि बहुळम्' इत्युत्तरपदाद्युदात्तत्वम्। दक्षपितारः दक्षं पिता पितृस्थानीयं मनो येषां ते दक्षपितारः। 'ऋतश्छन्दसि' इति कपः प्रतिषेधः, वर्णव्यत्ययेनोपधादीर्घत्वम्। ते तादृशा देवा नोऽस्मान् पान्तु रक्षन्तु। पा रक्षणे। किञ्च, ते नः अस्मान् अवन्तु रक्षन्तु अनुप्रविशन्तु सदा अस्मासु तिष्ठन्तु। अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु। तेभ्यो नमः नमस्कुर्मः। किञ्च, तेभ्यस्स्वाहा स्वाहुतं इदं पीतं पयोऽस्तु। एतौ चाचमनमन्त्रौ पातुस्सामर्थ्यादिति संवेशनप्रबुद्धयजुर्भ्यां उत्तरौ द्रष्टव्यौ। सुप्त्वा प्रबुद्ध्वा चाचम्य व्रतयितव्यमिति क्रमः। 'ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३ः'* इत्यादि ब्राह्मणम्॥

स्वाहाग्ने त्वꣳ सु जागृहि वयꣳ
सु मन्दिषीमहि गोपाय नस्स्वस्तये

अवन्तु । तेभ्यः । नमः । तेभ्यः । स्वाहा । [3]अग्ने । त्वम् । स्विति । जागृहि । वयम् । स्विति । मन्दिषीमहि । गोपाय । नः । स्वस्तये । प्रबुध इति

---

[3]संविशाति—अग्ने त्वमित्यनुष्टुभा चतुष्पदया ॥ हे अग्ने त्वं सुजागृहि अनिद्र आस्स्व । त्वयि तथाकारिणि सति वयं सुमन्दिषीमहि सुष्ठु निर्भयास्स्वप्यास्म । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । 'स्वपन्तं वै दीक्षितम्'* इत्यादि ब्राह्मणम् । त्वं चास्मान्स्वपतो गोपाय रक्ष । 'सनाद्यन्ता धातवः' इति धातुत्वात्, धातोरित्यन्तोदात्तत्वम्, पादादित्वान्न निहन्यते । स्वस्तये अविनाशार्थम् । विभक्त्यन्तप्रतिरूपको निपातः । यद्वा—अस गतावित्यस्मात्सुपूर्वात् 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्, कृदुत्तरपदप्रकृतिस्वरत्वम्, व्युत्पत्त्यनवधारणान्नावगृह्यते । शोभनगत्यर्थं गोपाय, यथा रक्षोभिर्न बाध्यामहे । किञ्च—नोस्मान् पुनः पश्चान्मध्यरात्रे प्रबुधे प्रबोधनाय । सम्पदादित्वात्क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम् । प्रबोधार्थं ददः देहि, प्रबुद्धान्कुर्विति यावत् । ददातेर्लेटि 'लेटोडाटौ' इत्यडागमः । 'घोर्लोपो लेटि वा' इत्याकारलोपः । 'इतश्च लोपः' इतीकारलोपः ॥

प्रबुधे नः पुनर्ददः । त्वमग्ने व्रतपा
असि देव आ मर्त्येष्वा । त्वम् ॥६॥
यज्ञेष्वीड्यः । विश्वे देवा अभि मा-
मावंवृत्रन्पूषा सन्या सोमो राधं-

प्र-बुधे । नः । पुनः । ददः । [4]त्वम् । अग्ने । व्रतपा इति व्रत-पाः । असि । देवः । एति । मर्त्येषु । आ । त्वम् ॥६॥ यज्ञेषु । ईड्यः । [5]विश्वे । देवाः । अभीति । माम् । एति । अववृत्रन् । पूषा । सन्या । सोमः । राधसा । देवः । सविता । वसोः । वसु-

---

[4]प्रबुद्धं यजमानं वाचयति—त्वमग्ने इति गायत्रीं त्रिपदां प्रतिष्ठानाम्नीम्, ‘विपरीता प्रतिष्ठा’* इति वचनात् । व्याख्याता चेयमृक् ‘उभा वामिन्द्राग्नी’ इत्यनुवाके† । ‘अव्रत्यमिव वा एष करोति यो दीक्षितः’‡ इत्यादि ब्राह्मणम् ॥

[5]सनिहारान्प्रहिणोति—विश्वे देवा इत्येकपदया त्रिष्टुभा यजुरन्तया ॥ विश्वे सर्वेपि देवाः मामभ्याववृत्रन् । व्यत्ययेन परस्मैपदम् । आभिमुख्येन मां प्रत्यावर्तन्ताम्, धनान्यादायाभ्या§गच्छन्त्विति यावत् । वृतेर्लुङि ‘द्युद्भ्यो लुङि’ इति परस्मैपदम्, व्यत्ययेन च्लेश्चङादेशः, ‘बहुळं छन्दसि’ इत्यडागमः । को देवः केन धनेनेत्याह—पूषा सन्या सनिना सनि-

---

*पिं. ३-१५. †सं. १-१-१४[13] ‡सं. ६-१-४. §य मामाग.

सा दे॒वस्स॑वि॒ता वसो॒र्वसु॑दावा॒ रा-
स्वेय॑थ्सो॒मा भूयो॑ भर॒ मा पृ॒ण-

दावेति॑ वसु—दावा॑ । [6]रास्व॑ । इय॑त् । सो॒म॒ । एति॑ ।
भूयः॑ । भ॒र॒ । मा । पृ॒णन्न् । पू॒र्त्या । वीति॑ । रा॒धि॒ ।

मादाय मामागच्छतु । याच्ञालब्धं हिरण्यादिधनं सानिः, याच्ञा-नन्तरं दीयत इति कृत्वा । षणु दाने, 'खनिकषि' इत्यादिना कर्मणि इप्रत्ययः, 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । सोमो राधसा आगच्छतु । राधो वासः क्षौमदुकूलादि, राध्यते प्रसाध्यतेनेन देह इति कृत्वा । यश्च देवस्सविता सर्वस्य प्रेरकः वसुदावा वसूनां प्रशस्तानां उस्रादिचेतनपदार्थानां दाता । 'आतो मनिन्' इति वनिपि, कृदुत्तरपदप्रकृतिस्वरत्वम् । सोपि वसोर्वसुनागच्छतु । सुपां सुपो भवन्तीति तृतीयैकवचनस्य षष्ठ्ये-कवचनम् । यद्वा—वसोर्वसुसमुदायात् कां चिदुस्रां हयं छागं वादायागच्छतु । 'चन्द्रमसि मम भोगाय भव' इत्यादि ग्रहणमन्त्रानुसारेण च एतेषां* विशिष्टविषयत्वं द्रष्टव्यम् । 'अप वै दीक्षितात्सुषुपुषः'[1] इत्यादिब्राह्मणम् ॥

[6]आहरन्तं दृष्ट्वा जपति—रास्वेति गायत्रीं त्रिपदाम् ॥ तत्र प्रथमे पादे आङ्स्सवर्णदीर्घत्वमकृत्वा छन्दो गणयेत् । द्वितीयस्तु इयादेशेन पूरयितव्यः 'भर मा पृणन्पूर्तिया' इति । 'वि राधि माहमायुषा' इति तृतीयस्स्वयमेवाष्टाक्षरः । केचित्तु यजुरादिका एकपदा गायत्रीत्याहुः; आह च 'यदेतद्यजुर्न ब्रूयात्'[1] इति ।

*क. एतेषां पदार्थानां. [1]सं. ६-१-४.

अस्मिन्पक्षे भरेत्यस्यापादादित्वान्निघातो न दुर्लभः, पूर्वत्र तु पादादित्वाद्व्यत्ययेन निघातो वेदितव्यः । हे सोम इयत् एतावत् इदं मया लब्धमिति हस्ताभिनयेन दर्शयन्नाह । इदं परिमाणमस्येति मतुपि ‘ किमिदम्भ्यां वो घः ’ इति वकारस्य च घादेशे ‘ इदंकिमोरीश्की ’ इतीशादेशस्य ‘ यस्य ’ इति लोपे प्रत्ययमात्रमवशिष्यते, तस्य सत्यपि पित्त्वे उदात्तनिवृत्तिस्वरेण इयादेश उदात्तः । एतावन्मे रास्व देहि । रा दाने, व्यत्ययेनात्मनेपदम्, सतिशिष्टोपि लसार्वधातुकस्वरः धातुस्वरेण बाध्यते व्यत्ययेनैव । यद्वा—रासृ शब्दे, अनुदात्तेत्, ‘ बहुलं छन्दसि ’ इति शपो लुक्, ‘ तास्यनुदात्तेत् ’ इत्यादिना लसार्वधातुकानुदात्तत्वम् । अयमर्थः—हे सोम यदिदं मया लब्धं एतन्मे शब्दय यथा ममैव भवति तथैव वक्तुमर्हसीति । यद्वा—रासतिरयं छन्दसि दाने वर्तते, दानार्थेषु नैरुक्तैः पठितत्वात् । किञ्च—इतोपि भूयः बहुतरं धनमाभर । ‘हृग्रहोर्भः’ इति भत्वम् । ‘ यावत एव पशूनभि दीक्षेत ’* इति ब्राह्मणम् । किञ्च—इदं चाप्यस्तु—अस्मान् पृणन् धनेन पूरयन् पुर[नः?]स्स्वय†मपि पूर्त्या धनपोषेण मा विराधि धनपोषेण‡ वियुक्तो मा कारि । अहं चायुषा मा विरात्सि वियुक्तो माकार्षि । पॄ पालनपूरणयोः क्रैयादिकः ; प्वाऽ§दित्वाद्ध्रस्वः, शतरि कृते विकरणस्वरस्तु लसार्वधातुकस्वरेण न बाध्यत इति शतुरेवोदात्तत्वम्, सत्यामपि सतिशिष्टेन बाधायां ‘ श्नाभ्यस्तयोरातः ’ इत्याकारलोपे उदात्तनिवृत्तिस्वरेण शतुरेवोदात्तत्वम्, ततः क्तिनि तु सति ‘ ॠकारल्वादिभ्यः ’ इति निष्ठावद्भावे प्राप्ते ‘ न ध्याख्यापॄमूर्छिमदाम् ’ इति प्रतिषिध्यते, तत्र व्यत्ययेन विभक्तेरुदात्तत्वम् । यद्वा—पूर्यते

*सं. ६-१-४. †ग—पुरुस्वय. ‡ग—पोषण. §क—ध्वा.

न्पूर्त्या वि रांधि माहमायुंषा चुन्द्र-
मंसि मम भोगांय भव वस्त्रंमसि
मम भोगांय भवोस्रासि मम

मा । अहम् । आयुंषा । [7]चन्द्रम् । असि । ममं । भोगांय । भव । [8]वस्त्रंम् । असि । ममं । भोगांय । भव । [9]उस्रा । असि । ममं । भोगांय । भव ।

---

पुरुषोनयेति पूर्तिः, धनस्येयं संज्ञा । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिचि 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ॥

[7]हिरण्यं प्रतिगृह्णाति—चन्द्रमसीति ॥ चन्द्रं ह्लादनमसि सर्वेषाम् । चदि आह्लादने, 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययः । ईदृक्त्वं प्राणिनां क्षीरप्रदानेनासि । शिष्टं स्पष्टम् । वस निवासे, 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययः । मम भोगाय दानाद्युपभोगाय भव पर्याप्नुहि ॥

[8]वस्त्रं प्रतिगृह्णाति—वस्त्रमिति ॥ वस्त्रं छादनम्, वस आच्छादने, येन देहस्संछाद्यते । समानमन्यत् । 'हुयामाश्रुवसिभ्यस्त्रन्' इति त्रन्प्रत्ययः ॥

[9]उस्रां प्रतिगृह्णाति—उस्रेति । उस्रा वासहेतुस्त्वं प्राणिनां क्षीरादिप्रदानेन असि । शिष्टं स्पष्टम् । वस निवासे, 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययः, वच्यादिना सम्प्रसारणम्, बहुळवचनात् 'शासिवसिघसीनाम्' इति षत्वाभावः ॥

भोगाय भव हयोऽसि मम भोगाय भव ॥ ७ ॥ छागोऽसि मम भोगाय भव मेषोऽसि मम भोगाय भव

[10]हयः । असि । मम । भोगाय । भव ॥ ७ ॥ [11]छागः । असि । मम । भोगाय । भव । [12]मेषः ।

---

[10]अश्वं प्रतिगृह्णाति—हय इति ॥ हय गतिकान्त्योः । हयिता विक्रमितासि । पचाद्यचि 'वृषादीनां च' इत्याद्युदात्तत्वम् । गतमन्यत् । 'विश्वजनादीनां छन्दसि वेति वक्तव्यम्' इति भवेत्यस्य संहितायां 'छे च' इति तुगभावः ॥

[11]छागं प्रतिगृह्णाति—छाग इति ॥ छदनमगतिर्वा छातेरर्थः । छातीति छा[ग]ः । यद्वा—छादनं छेदनं गच्छति करोति जानातीति वा छागः । 'अन्यत्रापि दृश्यते' इति गमेर्डः, पृषोदरादित्वात्स्वरूपविशेषः स्वरविशेषश्चानुसरणीयः, संस्कारविशेषानिर्णयान्नावगृह्यते । ईदृशस्त्वं मम भोगाय भव छेत्ता मा भूः ॥

[12]मेषं प्रतिगृह्णाति—मेष इति ॥ मेषः अभिभविता । मिष स्पर्धायाम्, पचाद्यच्, असीत्यनेन संहितायां 'स्वरितो वानुदात्ते पदादौ' इति स्वर्यते । शिष्टं स्पष्टम् । सर्वत्र लिङ्गसङ्ख्ययोरविवक्षा ॥

वायवे॑ त्वा॒ वरु॑णाय त्वा॒ निर्‌-
ऋ॑त्यै त्वा रु॒द्राय॑ त्वा॒ दे॒वी॑राप्मो
अपान्नपा॒द्य ऊ॒र्मिर्ह॑वि॒ष्य॑ इन्द्रि॒या-

अ॒सि॒ । मम॑ । भोगा॑य । भ॒व॒ । [13]वा॒यवे॑ । त्वा॒ । [14]वरु॑णाय । त्वा॒ । [15]निर्‌ऋ॑त्या॒ इति॒ निः—ऋ॒त्यै॒ । त्वा॒ । [16]रु॒द्राय॑ । त्वा॒ । [17]दे॒वीः॑ । आ॒पः॒ । अ॒पा॒म् । न॒पा॒त् । यः । ऊ॒र्मिः । ह॒वि॒ष्यः॑ । इ॒न्द्रि॒या॒वा॒निती॑-

[13]नष्टां मृतां वानुदिशाति—वायव इति ॥ त्वां नष्टां मृतां वा वायवेनुदिशामीति शेषः, ददामीत्यर्थः । 'यद्देवमेता नानुदिशेत्'* इत्यादि ब्राह्मणम् ॥

[14]अप्सु वा† पाशे वा मृतामनुदिशाति—वरुणाय त्वेति ॥

[15]या सं वा शीर्यते गर्ते वा पद्यते तामनुदिशाति—निर्ऋत्यै त्वेति ॥ प्रादिसमासः । निर्गता ऋतेः निर्ऋतिः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

[16]यामहिर्व्याघ्रो वा हन्ति तामनुदिशाति—रुद्राय त्वेति ॥

[17]दीक्षितोप उत्तरति—देवीराप इति उपरिष्टाज्ज्योतिषा त्रिष्टुभाष्टाक्षरचतुर्थ्या । केचिदिमामनुष्टुभं यजुरन्तामाचक्षते, तेषाम् 'अच्छिन्नम्' इत्यादि यजुः ॥ हे देवीरापः । 'विभाषितं विशेषवचने बहुवचनम्' इति पूर्वस्य विद्यमानत्वात् आप इति निहन्यते । हे अपां नपात्—चतुर्थो नप्ता ; अपां नप्तः; अग्नेराहुतिः, आहुत्या

*सं. ६-१-४. †ख—अप्सु वा व्रजे वा.

वान्मदिन्तमस्तं वो मावं क्रमिष-
मच्छिन्नन्तन्तुम्पृथिव्या अनु गेषं

न्द्रिय-वान् । मदिन्तमः । तम् । वः । मा । अवेति । क्रमिषम् । अच्छिन्नम् । तन्तुम् । पृथिव्याः ।

---

आदित्यः, आदित्याद्वृष्टिः; अद्भ्य ओषधयः, ओषधीभ्योन्नं, अन्नादग्निः; इत्युभयथापि अपान्नपात् अग्निः । न पातयतीति नपात्, क्विपि णिलोपः, नञ्समासे 'नभ्राण्नपात्' इति नलोपाभावः; आपो इत्यस्य संहितायां 'आपो जुषाणः' इत्यादिना प्रकृतिभावः, 'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यपामित्यस्य पराङ्गवद्भावः, तेन षष्ठ्यामन्त्रितसमुदायो निहन्यते । युष्मदीयो य ऊर्मिर्हविष्यः । हविरर्हतीति 'छन्दसि च' इति यत्प्रत्ययः। इन्द्रियावान् वीर्यवान् । 'मन्त्रे सोमाश्वेन्द्रिय' इति दीर्घः। मदिन्तमः मादयितृतमः । मदी हर्षे, अस्मादन्तर्भावितण्यर्थात् 'शमित्यष्टाभ्यो घिनुण्' इति घिनुण्, घटादित्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम्, 'नाद्घस्य' इति तमपो नुडागमः । तं तादृशं वो युष्मत्सम्बन्धिनमूर्मिं मावक्रमिषं पद्भ्यामवक्रम्य मागाम्। 'नेटि' इति वृद्धिप्रतिषेधः । ननु क्रियमाणमेव कथं अपह्नियते तत्राह—युष्मत्प्रसादादहं अच्छिन्नं तन्तुं यज्ञाख्यमनुगेषं अनुगतो भूयासमविघ्नेन प्राप्यासम् । को हि हविष्यत्वादिगुणविशिष्टं युष्मदीयमूर्मिं वृथावक्रामेत् । तस्माद्यज्ञ एवायं मया युष्मदवक्रमणरूपोनुष्ठीयत इति भावः । गा स्तुतौ छन्दसि जौ*होत्या-

---

*क. सीति जु.

भ॒द्राद॒भि श्रेय॒: प्रेहि॒ बृह॒स्पति॑ः

अन्विति॑ । गे॒ष्म॒ । [18]भ॒द्रात् । अ॒भीति॑ । श्रेय॑ः । प्रेति॑ । इ॒हि॒ । बृह॒स्पति॑ः । पु॒र॒ए॒तेति॑ पु॒रः॒—ए॒ता ।

दिकः, तस्माद्धातूनामनेकार्थत्वात् गतिकर्मणः आशिषि लिङि 'लिङ्याशिष्यङ्', आतो लोपः, यासुडादि । यद्वा—'दृष्टानुविधिः छन्दसि' इति इण एव चाशिषि लिङि गादेशः । कस्यायमच्छिन्नतन्तुत्वेन यज्ञो रूप्यते तत्राह—पृथिव्या अयमच्छिन्नस्तन्तुः, पृथिव्यवयवानुस्यूतावयवत्वात् । अन्यत्र हि दीक्षन्ते अन्यत्र देवान्यजन्ते अन्यत्रावभृथमवयन्तीति पृथिव्यां तायमानत्वात् तन्तुरेवायं पृथिव्याः । 'उदात्तयणः' इति पृथिव्याः परस्या विभक्तेरुदात्तत्वम् । तस्माद्यज्ञरूपत्वात् युष्माभिर्युष्मदवक्रमणं सोढव्यमिति । यद्वा—सेतुत्वेनायं यज्ञो रूप्यते । स हि पृथिव्या उभयतीरस्पर्शित्वात् अच्छिन्नस्तन्तुरिति वक्तुं शक्यते । तमेवाहमनुगच्छामि । सेतुना हि गच्छन्नपोतिक्रामन्नप्यपो नातिक्रामति । तस्माद्यज्ञाख्येन सेतुना युष्मानतिक्रमतो मे नापराध इति । 'सेतुमेव कृत्वात्येति'* इति ब्राह्मणम् ॥

[18]प्रयाणे कर्तव्ये प्रयाति—भद्रादिति विराजा गायत्र्या, वस्वेकपादत्वात् । अयं च मन्त्रस्सामर्थ्यान्नदीतरणमन्त्रात्पूर्वो द्रष्टव्यः ॥ भद्रात्प्रशस्तादस्मात् स्थानात् श्रेयः प्रशस्यतरं स्थानं योगक्षेमोपपन्नमभिप्रेहि आभिमुख्येन गच्छ । अन्तरात्मानमाह समारूढं वाग्निम् । किञ्च—बृहस्पतिः । 'तद्बृहतोः करपत्योः'

*सं. ६-१-४.

पुरएता ते अस्त्वथेमवं स्य वर
आ पृथिव्या आरे शत्रूंन्कृणुहि

ते । अस्तु । [19]अथ । ईम् । अवेति । स्य । वरे ।
एति । पृथिव्याः । [20]आरे । शत्रून् । कृणुहि ।

इति सुट्, वनस्पत्यादित्वात्पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । पुरएता अग्रगामी ते तव अस्तु । प्राप्तकाले लोट्, 'पुरोऽव्ययम्' इति गतित्वात् 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरत्वम् । 'ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वारभते'* इत्यादि ब्राह्मणम् ॥

[19]देवयजनादर्वाग्यत्र वत्स्यन्भवति तदवस्यति—अथेति त्रिष्टुभैकपदया ॥ अत्रापि स्वात्मानमाह । अथेत्यानन्तर्ये । ईमिति खल्वर्थे । आ इत्युपसर्गस्य श्रुतेः योग्यं क्रियापदमध्याह्रियते । पृथिव्याः पृथिवीमात्रात् स्थानान्तरादागतस्त्वं यदि देवयजनादर्वाग्वस्तुमिच्छसि अथेदानीं खलु वरे उत्कृष्टेऽस्मिन्प्रदेशे अवस्य अवसितो भव । यद्वा—पृथिव्या उत्कृष्टेऽस्मिन्प्रदेशे आगतस्त्वमिदानीं अत्रैवावस्य ॥

[20]आदित्यमुद्यन्तमुपतिष्ठते—आर इति त्रिष्टुभैकपदया ॥ सर्वेऽप्यात्मीयाः पुरुषाः वीराः यस्य तादृशस्त्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सर्वानस्मदीयान् शत्रून् आरे दूरे कृणुहि स्थापय । कृवि हिंसाकरणयोः, 'धिन्विकृण्व्योरच' इत्युप्रत्ययः, 'उतश्च प्रत्ययाच्छन्दो वा वचनम्' इति हेर्लुगभावः ॥

*सं. ३-१-१.

सर्ववीर एदमगन्म देवयजनम्पृथि-
व्या विश्वे देवा यदजुषन्त पूर्वे
ऋक्सामाभ्यां यजुषा सन्तरन्तो
रायस्पोषेण समिषा मदेम ॥ ८ ॥

सर्ववीर इति सर्व—वीरः । [21]एति । इदम् । अगन्म । देवयजनमिति देव—यजनम् । पृथिव्याः । विश्वे । देवाः । यत् । अजुषन्त । पूर्वे । ऋक्सामाभ्यामित्यृक्साम—भ्याम् । यजुषा । सन्तरन्त इति सं—तरन्तः । रायः । पोषेण । समिति । इषा । मदेम ॥ ८ ॥

आ त्वꣳ हयोसि मम भोगाय भव
स्य पञ्चविꣳशतिश्च ॥ ३ ॥

---

[21]यत्र यक्ष्यमाणो भवति तदभिप्रेतं देवयजनमधितिष्ठति—एदमिति त्रिष्टुभा चतुष्पदया ॥ देवा इज्यन्ते अस्मिन्निति देवयजनम् । अधिकरणे ल्युट्, कृदुत्तरपदप्रकृतिस्वरत्वम् । ईदृशमिदं स्थानमगन्म अगन्महि आगता वयम् । गमेर्लुङि 'बहुळं छन्दसि' इति शपो लुक् । यद्वा—लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक्, 'म्वोश्च' इति मकारस्य नकारः । कीदृशं? पृथिव्यास्सम्बन्धि । यद्वा—पृथिवीमात्रात् प्रदेशान्तरात् इदं देवयजनमागताः । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । पुनश्च

इयन्ते शुक्र तनूरिदं वर्चस्तया

[1]इयम् । ते । शुक्र । तनूः । इदम् । वर्चः ।

---

विशेष्यते—विश्वे पूर्वे अस्मदीयाः पित्रादयो देवाः भूमिदेवाः यदजुषन्त यादृशमसेवन्त । आद्युदात्तत्वम् । अत्र चागता वयं ऋक्सामाभ्यां यजुषा सन्तरन्तः सम्यग्यागं निर्वर्तयन्तः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अचतुरादिसूत्रेण ऋक्सामशब्दोऽच्प्रत्ययान्तो निपातितः । रायः धनस्य पोषेण पुष्ट्या इषा अन्नेन च सम्यङ्मदेम हृष्टा भवेम । मदी हर्षग्लपनयोरिति भौवादिक उदात्तेत्, 'षष्ठ्याः पतिपुत्र' इत्यादिना पोषे विसर्जनीयस्य सत्वम् । 'सावेकाचः' इतीषः परस्यास्तृतीयाया उदात्तत्वम् । 'ऋक्सामाभ्याँ ह्येष यजुषा सन्तरति यो यजते'* इति ब्राह्मणम् ॥

इति द्वितीये तृतीयोनुवाकः.

---

[1]हिरण्यं स्रुच्यवदधाति—इयमिति ॥ हे शुक्र शुद्धहिरण्य इयं स्रुक् तव तनूः शरीरम् । ऊप्रत्ययान्तस्तनूशब्दः । इदं स्रुक्स्थमाज्यं तव वर्चः बलम् । अतस्त्वं तया शरीरभूतया स्रुचा सम्भव सङ्गच्छस्व, अन्तः प्रविश्येत्यर्थः । भ्राजं गच्छ प्रज्व†लीभव । 'तद्धिरण्यमभवत्'‡ इत्यादि ब्राह्मणम् । 'आपो वरुणस्य पत्नय आसन्' इत्यादिरस्य शेषः§ ॥

---

*सं. ३-१-१. †ख. ग. उज्ज्व. ‡सं. ६-१-७. §सं. ५-५-४.

सम्भव भ्राजङ्गच्छ जूरसि धृता
मनसा जुष्टा विष्णवे तस्यास्ते
सत्यसंवसः प्रसवे वाचो यन्त्रम-

तया । सम्मिति । भव । भ्राजम् । गच्छ । [2]जूः ।
असि । धृता । मनसा । जुष्टा । विष्णवे । तस्याः ।
ते । सत्यसंवस इति सत्य-सवसः । प्रसव इति
प्र-सवे । वाचः । यन्त्रम् । अशीय । स्वाहा ।

---

[2]तदाज्यमाहवनीये जुहोति—जूरसीति ॥ जूरिति सोमक्रयण्युच्यते । तस्याश्च वाग्रूपत्वात् तद्रूपेण वर्ण्यते, यथा 'ते वाचं स्त्रियमेकहायनीं कृत्वा'* इत्यादि । 'वाग्वा एषा यत्सोमक्रयणी'† इत्यादि ब्राह्मणम् । सोमक्रयणि वाग्रूपे जूरासि प्रत्यर्थं‡ गन्त्र्यसि । जवतेर्गतिकर्मणः 'क्विब्वचि प्रच्छि' इत्यादिना क्विब्दीर्घौ । 'यद्धि मनसा जवते तद्वाचा वदति'† इति ब्राह्मणम् । मनसो यत्र जवः वागपि तत्र जवं करोतीत्यर्थः । कीदृशी पुनरसौ ? आह—धृता मनसा त्वमसि, मनःपूर्वकत्वात् । 'मनसा हि वाग्धृता'† इत्यादि । जुष्टा सेवितास्माभिः विष्णवे व्यापनाय§ । यज्ञाय प्रिया वासि 'यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति'† इत्यादि । तस्यास्तादृश्यास्तव वाग्रूपाया एकहायनीभावमापन्नाया यन्त्रं यमनं स्थितिं अशीय प्राप्नुयाम् । अश्नोतेर्लिटि 'बहुळं छन्दसि' इति शपो लुक् । 'गुधृवचि'

---

*सं. ६-१-६. †सं. ६-१-७. ‡क-वृत्त्यर्थम्. §ख. व्यापका.

शीय स्वाहा शुक्रमस्यमृतमसि
वैश्वदेवꣳ हविस्सूर्यस्य चक्षुराऽरुह-

[3]शुक्रम् । असि । अमृतम् । असि । वैश्वदेवमिति वैश्व-देवम् । हविः । [4]सूर्यस्य । चक्षुः । एति ।

---

इत्यादिना यमेस्त्रप्रत्ययः । ' सावेकाचः ' इति वाचः परस्याष्षष्ठ्या उदात्तत्वम् । आत्मन्येव स्थापनं यमनम् । यद्यपि त्वया सोमं क्रीणामि, तथापि त्वद्विरहो मे मा भूदित्यर्थः । ' पुनरेहि सह रय्या '* इत्यस्मिन् मन्त्रेऽप्ययमर्थस्स्पष्टो भविष्यति । ' वाचैव विक्रीय '† इत्यादि । कथमस्या यमनं लभत इत्याह—सत्यसवसः प्रसवे । सत्यममोघं सवः प्रेरणं यस्य स सत्यसवाः सविता । सुवतेरसुन् । तस्य देवस्य प्रसवे अनुज्ञाने लब्धे सर्वमिष्टं सम्पद्यत इति । थाथादिस्वरेण प्रसवशब्दोऽन्तोदात्तः । ' सवितृप्रसूतामेव वाचमवरुन्धे '† इति ब्राह्मणम् ॥

[3]अपरं चतुर्गृहीतं गृहीत्वा तद्यजमानमवेक्षयति—शुक्रमिति ॥ शुक्रम् । शुचेर्दीप्तिकर्मणः सम्पदादिलक्षणः क्विप्, ' लुगकारेकाररेफाश्च वक्तव्याः ' । यद्वा—मत्वर्थे रप्रत्ययः, अयस्मयादित्वात्पदत्वात्कुत्वम् । किञ्च—अमृतमसि, देवानाममरणहेतुत्वात् । ' नञो जरमरमित्रमृताः ' इत्युत्तरपदाद्युदात्तत्वम् । वैश्वदेवं विश्वेदेवत्यं हविस्त्वमसि ॥

[4]हिरण्यमन्तर्धाय यजमानमादित्यमुदीक्षयति—सूर्यस्येति चतुष्पदयानुष्टुभा । सूर्यो मण्डलान्तर्गतः पुरुषः स्थावरजङ्गमानामात्मा,

---

*सं. १-२-४[5] †सं. ६-१-११.

मृग्नेरृक्ष्णः कनीनिकां यदेतंशेभि-
रीयंसे भ्राजंमानो विपृश्चिता

अरुहम् । अग्नेः । अक्ष्णः । कनीनिकाम् । यत् ।
एतंशेभिः । ईयंसे । भ्राजंमानः । विपश्चिता ।

---

यथा—'सूर्य आत्मा'* इति । तस्य तव चक्षुर्भूतं यदेतन्मण्डलं आरुहमारूढोस्मि । रुहेर्लुङि 'कृवृदृरुहिभ्यश्छन्दसि' इति च्लेरङादेशः । पुनरपि विशेष्यते—अग्नेस्स्वभूतस्य अक्ष्णः कनीनिकां तारकास्थानीयमेतन्मण्डलमारूढोस्मि । उदात्तनिवृत्तिस्वरेणाक्ष्णः परस्याः षष्ठ्या उदात्तत्वम् । तदारोहणं च तत्स्थाने पुरुषेण सह स्वात्मैक्यम्, यथा 'स यश्चायं पुरुषे'† इति । तस्मिन् सति सूर्यस्याग्नेश्च पन्थानमारूढो रक्षोभिर्न बाध्यते । 'एष खलु वा अरक्षोहतः पन्थाः'‡ इत्यादि ब्राह्मणम् । कीदृशस्य सूर्यस्येत्याह—यत् यस्त्वम् । यच्छब्दात्परस्य सोः 'सुपां सुलुक्' इत्यादिना लुक् । चक्षुरपेक्षया [वा] नपुंसकत्वम् । यस्त्वं एतशेभिः शुक्लवर्णैरश्वैः ईयसे गच्छसि । ईङ् गतौ दैवादिकः । एतशब्दाल्लोमादित्वाच्छः, वृषादित्वादाद्युदात्तत्वम् । यद्वा—'एतेरतशतसुनौ' इति तसुन्प्रत्ययः । गमनकुशलाः । यद्वा—एतशरीरा एतशाः । पृषोदरादित्वात् यथाभिमतस्वरूपस्वरसिद्धिः । पुनश्च विशेष्यते—विपश्चिता मेधाविना महर्षिगणेन भ्राजमानश्शोभमानः । सह वा तेन । यस्त्वमीयसे तस्य ते मण्डलमारुहम्, इति ॥

---

*सं. १-४-४३. †तै. उ. २-९. ‡सं. ६-१-७.

चिदंसि मनासि धीरंसि दक्षिणा ॥ १ ॥ असि यज्ञियांसि क्षत्रियाऽस्यदितिरस्युभयतंश्शीर्ष्णी सा न-

[5] चित् । असि । मना । असि । धीः । असि । दक्षिणा ॥ १ ॥ असि । यज्ञियां । असि । क्षत्रियां । असि । अदितिः । असि । उभयतंश्शी-

[5] सोमक्रयणीमनुमन्त्रयते—चिदसीति ॥ चेतयतीति चित् । 'बहुलं संज्ञाछन्दसोः' इति णिलुक् । हे सोमक्रयणि वाग्रूपे चेतयमानासि, चैतन्यकार्यत्वात् । 'यद्धि मनसा चेतयते तद्वाचा वदति'* । किञ्च—मना मन्वानासि मनःपूर्वकत्वान्मनसा सह प्रवृत्तेः । 'यद्धि मनसाभिगच्छति'* इति । मन अवबोधने, पचाद्यच् । धीः प्रज्ञा चासि । 'यद्धि मनसा ध्यायति तद्वाचा वदति'* इति । 'ध्यायतेः सम्प्रसारणं च' इति क्विपि सम्प्रसारणम् । एवं [चित्तमनो][1]ध्यात्मकतया सर्वप्रवृत्तिहेतुत्वमस्या उक्तम् । यद्वा—धीः कर्मासि । अस्मिन्पक्षे कर्तृकरणक्रियारूपतया सर्वार्थसाधनत्वमस्याः प्रतिपाद्यते । दक्षिणा शीघ्रगामिनी चासि । दक्ष वृद्धौ शीघ्रार्थे च, 'द्रुदक्षिभ्यामिनन्' इति शीघ्रार्थकदक्षेः इनन्प्रत्ययः । एवं यज्ञिया यज्ञकर्मार्हा चासि । 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसङ्ख्यानम्' इति यत्प्रत्ययः । यज्ञसम्पादिनीत्यर्थः । एवं क्षत्रिया चासि क्षत्रं धनं सोमलक्षणं तस्यापत्यमसि, तत्प्रभवत्वाद्बलप्रभवत्वाच्च । 'क्षत्राद्घः' । अपिच—

*सं. ६-१-७.

[1] ख—चेतनावि.

स्सुप्राची सुप्रतीची सम्भव मित्र-
स्त्वा पदि बध्नातु पूषाध्वनः पात्वि-
न्द्रायाध्यक्षायानु त्वा माता मन्य-

ष्णीत्युभयतः—शीष्णीं । सा । नः । सुप्राचीति सु-प्राची । सुप्रतीचीति सु-प्रतीची । समिति । भव । मित्रः । त्वा । पदि । बध्नातु । पूषा ।

अदितिः अखण्डिता देवमाता चासि । नञ्समासः, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । कीदृश्यदितिः—उभयतश्शीर्ष्णी उभयतश्शिरस्का, यज्ञानामाद्यन्तयोरुभयोः शिरस्स्थानीयतया प्रधानभूता । प्रायणीयोदयनीयौ चरू यस्यास्तादृशी । 'शीर्षं छन्दसि' इति शीर्षादेशः, 'नित्यं संज्ञाच्छन्दसोः' इति ङीप्, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्, उभयशब्दात् 'इतराभ्योपि दृश्यन्ते' इति सप्तम्यर्थे तसिल्प्रत्ययात्पूर्वस्योदात्तत्वम् । 'यदेवादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः'* इत्यादि ब्राह्मणम् । तादृशी त्वं नस्सम्भव सङ्गच्छ स्वात्मनाऽस्मत्सकाशे वर्तस्व । यद्वा—नः अस्माकं सम्भव, मा कदाचिदुपेक्षिष्ठाः । कथंभूतेत्याह—सुप्राची सुप्रतीची च भूत्वा । प्रागञ्चतीति प्राची । सोमक्रयणं प्रति प्रथमं प्राचीनगतिर्भूत्वा पुनरपि प्रतीची अस्मत्सकाशं प्रत्यागता भूत्वास्माकमेव भवेति । 'ऋत्विक्' इत्यादिनाऽञ्चेः क्विन्प्रत्ययः । 'अञ्चतेश्चोपसङ्ख्यानम्' इति ङीप्, नकाराकारयोर्लुप्तयोः 'चौ' इति दीर्घः । ततश्शोभना प्राची शोभना प्रतीची । 'प्रादि-

*सं. ६-१-७.

तामनु पितानु भ्राता सगर्भ्योनु सखा सयूथ्यस्सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वा वर्तयतु मि-

अध्वनः । पातु । इन्द्राय । अध्यक्षायेत्यधि-अक्षाय । अन्विति । त्वा । माता । मन्यताम् । अन्विति । पिता । अन्विति । भ्राता । सगर्भ्य इति स-गर्भ्यः । अन्विति । सखा । सयूथ्य इति स-यूथ्यः । सा ।

---

प्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधः' इति प्राप्ते, 'स्वती पूजायाम्' इति प्रादिसमासः, 'सुः पूजायाम्' इति कर्मप्रवचनीयत्वेन गतित्वाभावादव्ययपूर्वपदप्रकृतिस्वरत्वम् । किञ्च—मित्रस्त्वा पदि पादे बध्नातु । 'ऊडिदम्' इत्यादिना सप्तम्या उदात्तत्वम्, 'पद्दन्' इत्यादिना पद्भावः । 'यद्बद्धा स्यात्'* इत्यादि ब्राह्मणम् । अपिच—पूषा त्वामध्वनो मार्गान्मार्गस्थाद्भयहेतोः पातु । अपिचास्या इन्द्रः अध्यक्षः स्वामी इन्द्राय सोमस्वामिने त्वां माता अनुमन्यतां इन्द्रार्थं त्वया सोमक्रयं क्रियमाणं अनुजानातु, पिता चानुमन्यतां, भ्राता चानुमन्यताम् । कीदृशः—सगर्भ्यः समाने गर्भे भवः । 'समानस्य छन्दसि' इति सभावः, 'सगर्भसयूथ' इत्यादिना भवार्थे यत्, सभावस्योत्पत्तिकाल एवोदात्तविधानात्सत्यामपि तद्धितवृत्तौ उदात्तत्वं न निवर्तते । यद्वा—'पूर्वादयश्च दृश्यन्ते' इत्याद्युदात्तत्वम् । सखा चानु-

---

*सं. ६-१-७.

त्रस्यं पथा स्वस्ति सोमंसखा पु-
नरेहिं सह रय्या ॥ १० ॥

देवि । देवम् । अच्छं । इहि । इन्द्राय । सोमम् । रुद्रः । त्वा । एति । वर्तयतु । मित्रस्यं । पथा । स्वस्ति । सोमसखेति सोमं—सखा । पुनः । एति । इहि । सह । रय्या ॥ १० ॥

दक्षिणा सोमंसखा पञ्च च ॥ ४ ॥

---

मन्यताम् । कीदृशः सयूथ्यः समाने यूथे भवः, सगर्भ्यवत् । हे देवि सोमविक्रयणि सा तादृशी त्वं मात्रादिभिरनुज्ञाता त्वं देवं सोममच्छ आभिमुख्येन इहि गच्छ । 'देवी ह्येषा देवस्सोमः'* इति ब्राह्मणम् । इन्द्राय इन्द्रार्थम् । 'इन्द्राय हि सोम आह्रियते'* इति ब्राह्मणम् । किञ्च—रुद्रस्त्वा वर्तयतु कृतकृत्यानस्मान्प्रति अविनष्टा†मानयतु । 'यदेतद्यजुर्न ब्रूयात्पराच्येव सोमक्रयणीयात्'* इत्यादि ब्राह्मणम् । रुद्रोपि न रौद्रभावेन, किन्तु मित्रस्य पथा त्वामावर्तयतु निजकीर्तनापराधमनादृत्य शान्तो भूत्वा वर्तयतु‡ उदात्तनिवृत्तिस्वरेण तृतीयाया उदात्तत्वम् । 'क्रूरमिव वा एतत्करोति यद्रुद्रस्य कीर्तयति'* इत्यादि ब्राह्मणम् । हे सोमक्रयणि त्वं च स्वस्ति अविघ्नेन पुनरेव सोमविक्रयिणस्सकाशात् अस्मत्सकाशमेह्यागच्छ । कीदृशी भूत्वा? सोमसखा भूत्वा, सोमस्सखा यस्यास्तादृशी भूत्वा,

---

*सं. ६-१-७. †क.—अभिमुखा.

‡ख—निजनामकृत्यं करोतु विघ्नत्यकुण्ठो भूत्वा दर्शयतु.

वस्व्यसि रुद्रास्यदितिरस्यादित्या-

[1]वस्वी । असि । [2]रुद्रा । असि । [3]अदितिः । असि । [4]आदित्या । असि । [5]शुक्रा । असि । [6]चन्द्रा ।

सोमेन सख्या सहागच्छेत्यर्थः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अत एव टजभावः । अपिच—रय्या धनेनास्मदीयेन सहा*-गच्छ । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । 'वाचा वा एष वि क्रीणीते'† इत्यादि ब्राह्मणम् ॥

इति द्वितीये चतुर्थोनुवाकः.

[1–6]षड्ढान्यनु निक्रामति सोमक्रयणीं गच्छन्तीमनुगच्छति—वस्व्यसीत्यादिभिः । एते च षट्सु पदेषु षण्मन्त्राः ॥ तत्र वसुरुद्रादित्याः सवनत्रयस्य देवताः । अदितिः प्रायणीयोदयनीययोः । शुक्रस्सोमः । चन्द्रं हिरण्यं दक्षिणादिरूपम् वस्वादिमतो यज्ञस्य साधनत्वात् सोमक्रयण्यपि तद्वतीत्युच्यते । वस्वी वसुभिर्देवैः तद्वती त्वमसि । 'छन्दसीवनिपौ' इतीकारो मत्वर्थीयः, आद्युदात्तत्वं चिन्त्यम् । वृषादिर्वा द्रष्टव्यः । यद्वा—वस्वी प्रशस्ता, प्रशस्तता च वसुभिस्सम्बन्धात् । 'वोतो गुणवचनात्' इति ङीप्, तत्र हि 'गुणवचनात् ङीबाद्युदात्तार्थम्' इत्युक्तम् । रुद्रा रुद्रवती । 'लुगकारेकाररेफाश्च' इति मत्वर्थीयोकारः । अदितिः अदितिमती । तेनैव मतुपो लुक्, अव्ययपूर्वपदप्रकृति-

*क. ग—सहैवा. †सं. ६-१-७.

सि शुक्रासि चन्द्रासि बृहस्पति-
स्त्वा सुम्ने रण्वतु रुद्रो वसुभिरा
चिकेतु पृथिव्यास्त्वा मूर्धन्नाजिघ-

असि । [7]बृहस्पतिः । त्वा । सुम्ने । रण्वतु । रुद्रः । वसुभिरिति वसु-भिः । एति । चिकेतु । [8]पृथिव्याः । त्वा । मूर्धन् । एति । जिघर्मि । देवयज-

स्वरत्वम् । आदित्या आदित्यवती । तेनैवाकारः । शुक्रवती शुक्रा । स एवाकारः । यद्वा—शुक् दीप्तिः तद्वती । तेनैव रेफः । चन्द्रवती चन्द्रा । स एवाकारः । यद्वा—आह्लादिनी । 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययः । 'षड्ढ्यन्यतु नि क्रामति'* इत्यादि ब्राह्मणम् ॥

[7]सप्तमं पदमभिगृह्णाति—बृहस्पतिरिति ॥ बृहस्पतिर्ब्रह्मा, 'ब्रह्म वै देवानां बृहस्पतिः'* इति । वनस्पत्यादित्वादुभयपद-प्रकृतिस्वरत्वम् । स त्वां सुम्ने सुखे प्रदेशे रण्वतु गमयतु पदं कारयतु । रवि मवि धवि गत्यर्थाः; भौवादिकः, इदित्त्वान्नुम् । किञ्च—क्रियमाणं वसुभिस्सह रुद्रः आचिकेतु अनुजानातु यः पशूनां पतिः । कि त ज्ञाने, जौहोत्यादिकौ,† तयोः प्रथमस्येदं लोटि रूपम् ॥

[8]तस्मिन् पदे जुहोति—पृथिव्या इति ॥ पृथिव्यास्त्वा मूर्धन् मूर्धनि मूर्धस्थानीये पदे । 'सुपां सुलुक्' इति सप्तम्या लुक्,

*सं. ६-१-८.

†परिदृश्यमाने धातुपाठे तद्व्याख्यानेषु च 'कि ज्ञाने' इत्येव दृश्यते.

र्मिं देवयजन इडाया: पदे घृतवति स्वाहा परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीन इति देव-यजने । इडायाः । पदे । घृतवतीति घृत-वति । स्वाहा । [१]परिलिखितमिति परि-लिखितम् । रक्षः । परिलिखिता इति परि-लिखि-

'न ङिसम्बुध्योः' इति नलोपाभावः । देवयजने । देवा इज्यन्तेऽस्मिन्नित्यधिकरणे ल्युट्, कृदुत्तरपदप्रकृतिस्वरत्वम्* । 'पृथिव्या ह्येष मूर्धा यद्देवयजनम्'† इत्यादि ब्राह्मणम् । इडायाः पदे इडा सोमक्रयणी, 'पशवो वा इडा',‡ तस्यास्सप्तमे पदे । कीदृशे? घृतवति । 'यदेवास्यै पदाद्घृतमपीड्यत'† इति ब्राह्मणम् । 'सा यत्रयत्र न्यक्रामत्ततो घृतमपीड्यत'§ इति च । हे आज्य तस्मिन् तादृशे पदे त्वामाजिघर्मि मर्यादया क्षारयामि । घृ क्षरणदीप्त्योः जौहोत्यादिकः, 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । स्वाहा स्वाहुतं भव । यद्वा—इत्थं कर्तव्यमिति स्वयमेव खलु सरस्वत्याह ॥

[१]पदं परिलिखति—परिलिखितमिति ॥ परिलिखितं परितो नाशितं रक्षोऽस्तु यदत्र छिद्रान्वेषि । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । किञ्च अरातयो धनस्यादातारः शत्रवः । बहुलवचनात्कर्तरि क्तिन् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तेऽपि

*ख. ग—त्वेन प्रत्ययात्पूर्वस्योदात्तत्वम्. †सं. ६-१-८.
‡सं. २-६-८. §सं. २-६-७.

वा अपि कृन्तामि योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म इदमस्य ग्रीवाः ॥११॥ अपि कृन्ताम्यस्मे रायस्त्वे

ताः । अरातयः । इदम् । अहम् । रक्षसः । ग्रीवाः । अपीति । कृन्तामि । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इदम् । अस्य । ग्रीवाः ॥ ११ ॥ अपीति । कृन्तामि । [10]अस्मे इति ।

---

परिलिखितास्सन्तु अनेन पदविलेखनेन । कथमित्याह—यदेतत्परिलिखामि इदं खल्वहं रक्षसः ग्रीवा अपिकृन्तामि यथेष्टं कृन्तामि छिनद्मि । अपिशब्दः कामचारं द्योतयति । ग्रीवाशब्दो धमनिवचनः, तासां बहुत्वाद्बहुवचनं, यथा 'ग्रीवाभ्योऽण्च' इति । कृती छेदने, 'शेमुचादीनाम्' इति नुम् । तथा योऽस्मान् द्वेष्टि यं च वयं द्विष्मः तस्य द्वेष्टुः द्वेष्यस्य शत्रोः ग्रीवाः इदमपि कृन्तामि यदेतत्परिलिखामि । 'द्वौ वाव पुरुषौ '* इत्यादि ब्राह्मणम् । इदमिति क्रियाविषेणत्वान्नपुंसकत्वम् ॥

[10]पदपांसून् धरण्यां संवपति—अस्मे इति ॥ अस्मे अस्मासु । 'सुपां सुलुक्' इति सप्तमीबहुवचनस्य शेआदेशः । अनेन पदपांसुसंवापेन अस्माकं रायः धनानि पश्वात्मकानि सन्तु । 'पशवो वै सोमक्रयण्यै पदम् '* इत्यादि ब्राह्मणम् । अत्र चाध्वर्युरात्मार्थमेवाशास्ते, न यजमानार्थम् । 'आत्मानमेवाध्वर्युः पशुभ्यो नान्तरेति '* इति दर्शनात् ॥

---

*सं. ६-१-८.

रायस्तोते रायस्सन्देवि देव्यो-

रायः । [11]त्वे इति । रायः । [12]तोते । रायः । [13]समिति । देवि । देव्या । उर्वश्या । पश्यस्व ।

[11]यजमानाय प्रयच्छति—त्वे इति ॥ त्वे तव । 'त्वमावेकवचने' इति त्वादेशः, पूर्ववत्सप्तम्येकवचनस्य शेआदेशः । हे यजमान त्वयि च रायस्सन्तु ॥

[12]यजमानः पत्न्यै प्रयच्छति—तोत इति ॥ ऊतं रक्षितम् । अवतेर्निष्ठायां ज्वरत्वरादिना ऊठादेशः । त्वया ऊतं तोतम् । त्वदूतमिति वक्तव्ये व्यञ्जनद्वयं लुप्यते, पृषोदरादित्वाद्रूपसिद्धिः, 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । हे पत्नि त्वया रक्षिते च गृहे रायस्सन्तु । 'अर्धो वा एष आत्मनः'* इत्यादि ब्राह्मणम् । आहुश्च 'तत्सा गृहेषु निदधाति' इति ॥

[13]पत्नीं सोमक्रयण्या समीक्षयति—संदेवीति ॥ उरूणि महान्ति श्रेयांसि अश्नुते व्याप्नोतीत्युर्वशी । अश्नोतेः कर्मण्यण्, 'संज्ञापूर्वको विधिरनित्यः' इत्युपधाया वृद्धिर्न क्रियते, वर्णव्यत्ययेन वा ह्रस्वत्वम्, 'परादिश्छन्दसि बहुळम्' इत्युत्तरपदाद्युदात्तत्वम् । देव्या द्योतनवत्या त्वया दृश्यमानया हे देवि सोमक्रयणि सम्पश्यस्व सम्यग्दर्शनवती भव, यथेयमुरूणि श्रेयांस्यश्नुते तथा पश्येति भावः । 'दृशेश्चेति वक्तव्यम्' इत्यात्मनेपदम् । 'उदात्तयणो हल्पूर्वात्' इति देव्याः परस्यास्तृतीयाया उदात्तत्वम् ॥

*सं. ६-१-८.

वैश्यां पश्यस्व त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव

[4]त्वष्टीमती । ते । सपेय । सुरेता इति सु-रेताः । रेतः । दधाना । वीरम् । विदेय । तव । सन्दृशीति

[14]पत्नी यजमानमीक्षते—त्वष्टीमतीति अस्तार*बृहत्या वस्वष्टदशपङ्क्त्यक्षरया ॥ तक्षू त्वक्षू तनूकरणे, त्वक्षेः क्तिनि त्वष्टिः प्रजननविषयं नैशित्यं सामर्थ्यविशेषः, तद्वती त्वष्टीमती मिथुनीभवने योग्या । अहं ते तुभ्यं सपेय मिथुनीभवेयम् । षप समवाये, व्यत्ययेनात्मनेपदम्, 'क्रियाग्रहणं च कर्तव्यम्' इति सम्प्रदानत्वात्त इति चतुर्थी, पत्ये शेते इति यथा । यद्वा—त्वष्टुर्व्यापारास्त्वष्टयः विविधप्रजानिर्माणशक्तयः । 'त्वष्टा वै पशूनां मिथुनानां रूपकृत्'[1] इति ब्राह्मणमप्युपपद्यते । त्वष्टारमाचक्षते इति त्वष्टीयतेः 'सर्वधातुभ्यः' इतीन्प्रत्ययः । तद्वती त्वष्टीमती । सर्वत्र 'अन्येषामपि दृश्यते' इति दीर्घः । किञ्च—सुरेता शोभनममोघं यस्यां निषिक्तं शुक्लं सा सुरेताः । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । रेतश्च त्वया निषिक्तं दधाना गर्भार्थमन्तर्बिभ्रती । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । अहमीदृशीभूत्वा वीरं पुत्रं विदेय लभेय । वेतेः प्रजननवृत्तेः औणादिको रक्प्रत्ययः । विदिर्लाभे, स्वरितेत्, 'आशिषि लिङि' 'लिङ्याशिष्यङ्', सीयुट्, 'छन्दस्युभयथा' इति सार्वधातुकत्वात् सलोपः, अतो लोपाभावश्छान्दसः । तव संदृशि संदर्शने सस्नेहदृष्टिलाभे । सम्पदादित्वात्क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

*ख. ग—आस्पद.

[1]तै. सं. ...

सन्दृशि माहꣳ रायस्पोषेण वि योषम् ॥ १२ ॥

अꣳशुना ते अꣳशुः पृच्यताम्परु-

सं-दृशिं । [15]मा । अहम् । रायः । पोषेण । वी- तिं । योषम् ॥ १२ ॥

अस्य ग्रीवा एकान्न त्रिꣳशच्च ॥५॥

[1]अꣳशुना । ते । अꣳशुः । पृच्यताम् । परु-

---

[15]यजमानस्सोमक्रयणीमीक्षते—माहमिति चतुर्थेन पादेन ॥ अहं रायो धनस्य पोषेण पुष्ट्या मा वियोषं वियुक्तो मा भूवम्, हे सोमक्रयणि त्वत्प्रसादात् । यौतेर्लिङि 'छन्दस्युभयथा' इति सिचस्सार्वधातुकत्वादिडभावः, 'संज्ञापूर्वको विधिरनित्यः' इति सिचि वृद्धिर्न क्रियते । यद्वा—युञ्बन्धने क्रैयादिकः, अनुदात्तः 'युणुक्ष्णवः' इत्यत्र हि कारिकायां सानुबन्धस्य ग्रहणात्, वृद्ध्यभावः पूर्ववत् । यद्वा—'लेटोऽडाटौ' इत्याडागमः, इतश्च लोपः, 'सिब्बहुळं लेटि', 'ऊडिदम्' इत्यादिना रायः परस्याष्षष्ठ्या उदात्तत्वम्, 'षष्ठ्याः पतिपुत्र' इत्यादिना विसर्जनीयस्य संहितायां सकारः ॥

इति द्वितीये पञ्चमोनुवाकः.

---

[1]सहिरण्येन पाणिना राजानमभिमृशति—अंशुनेति ॥ अंशुस्सूक्ष्मावयवः । त्वदीयोंशुः अंशुना अंश्वन्तरेण पृच्यतां सर्वदा

मा पर्रुर्गन्धस्ते काममवतु मदाय
रसो अच्युतोमात्योसि शुक्रस्ते ग्र-
होभि त्यन्देवꣳ सवितारमूण्योः

मा । परुः । गन्धः । ते । कामम् । अवतु । मदाय । रसः । अच्युतः । अमात्यः । असि । शुक्रः । ते । ग्रहः । [2]अभीति । त्यम् । देवम् । सवितारम् ।

संयुज्यताम् , प्राणा[पाना]दिना* निमित्तेन मा कदाचिदपि तेन विश्लिष्टो भूत् । किञ्च—परुः पर्व तच्च परुषा पर्वणा सम्पृच्यतां अङ्गच्छेदादिना कदाचिदपि तेन विश्लिष्टं मा भूत् । अपि च—यागमविघ्नेन निर्वर्तयेमेत्येवं योयमस्माकं कामः इच्छा तं ते तव गन्धः अवतु रक्षतु उद्दीपयतु वा । मदाय देवतातृप्तये त्वदीयो रसः अच्युतो भवतु यागान्मादकरणाद्वा मा च्योष्ट । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । कस्मादेवमुच्यत इति चेत् अत आह—अमात्योसीति । अमा सहभवतीत्यमात्यः । 'अव्ययात्त्यप्' 'अमेहक्वतसित्रेभ्य एव' । यज्ञस्येन्द्रस्य यजमानस्य वा सहायस्त्वमसि । किञ्च—शुक्रो हिरण्यं तव ग्रहः परिग्रहः, हिरण्येन त्वं प्राप्यसे गृह्यसे वा, सहिरण्येन पाणिना ग्रहणात्क्रयणाद्वा ॥

[2]अतिच्छन्दसर्चा सोमं मिमीते—अभित्यं देवमिति । अत्यष्टिरियं षोडशाक्षरपादा, 'अर्चामि' इति द्वितीयस्यादिः, 'ऊर्ध्वा यस्य' इति तृतीयस्य, 'हिरण्यपाणिः' इति चतुर्थस्य ॥

*ख–प्रयाणादिना.

कविक्रतुमर्चामि सत्यसवसꣳ र-
त्नधामभि प्रियम्मतिमूर्ध्वा यस्या-

ऊण्योः । कविक्रतुमिति कवि–क्रतुम् । अर्चामि ।
सत्यसवसमिति सत्य–सवसम् । रत्नधामिति रत्न–
धाम् । अभीति । प्रियम् । मतिम् । ऊर्ध्वा । यस्य ।

'अतिछन्दा वै सर्वाणि छन्दांसि'* इति ब्राह्मणम् । अभित्वं देवं सवितारं सर्वस्य प्रेरयितारं ऊण्योस्सर्वस्यावित्र्योः द्यावापृथिव्योः । अवतेरौणादिके निप्रत्यये 'ज्वरत्वर' इत्यादिना ऊठि छान्दसं णत्वम्, 'उदात्तस्वरितयोः' इत्योकारस्स्वर्यते, 'उदात्तयणः' इति व्यत्ययेन प्रवर्तते । कविक्रतुं कवीनां मेधाविनामिव क्रतुः कर्म यस्य तादृशं, कमनीयकर्माणं वा । सत्यसवसं, सत्यानुज्ञं सत्यप्रेरणं वा । रत्नधां रत्नानां रमणीयानां धनानां धारयितारं, रत्नानि धारयन्तं वा† । 'आतो मनिन्' इति विच् । अभिप्रियं प्रियमभि प्रियं लक्षीकृत्य सर्वस्य प्रियमुत्पादयामीति रत्नानि धारयन्तम् । यद्वा—आभिमुख्येन सर्वस्य प्रियम्; असमस्त एव धात्वर्थं विशिनष्टि । मतिं सर्वैर्मन्तव्यं, सर्वस्य वा ज्ञातारम् । 'मन्ते वृषः' इति क्तिन उदात्तत्वम् । ईदृशं देवमभ्यर्चामि आभिमुख्येन पूजयामि । पादादित्वान्न निहन्यते । पुनश्च देवोपि विशेष्यते—यस्य देवस्यामतिरमनशीला व्यापनशीला भाः दीप्तिः ऊर्ध्वा उत्कृष्टा अदिद्युतत् द्योतयति विश्वं तमभ्यर्चामि । 'णौ चङ्च्युपधाया ह्रस्वः', 'द्युतिस्वाप्योस्सम्प्रसारणम्' । अम-

*सं. ६-१-९. †क–तारं दातारं वा.

मतिर्भा अदिद्युतत्सवीमनि हि-
रण्यपाणिरमिमीत सुक्रतुः कृपा

अमतिः । भाः । अदिद्युतत् । सवीमनि । हिर-
ण्यपाणिरिति हिरण्य—पाणिः । अमिमीत । सु-

तेर्गतिकर्मण औणादिकोतिप्रत्ययः । भासतेः 'भ्राजभास' इति क्विप् । पुनश्च देवो विशेष्यते—यस्य देवस्य सवीमनि सवे अभ्यनुज्ञायां सत्यां येनाभ्यनुज्ञातस्सन् । मनिनि छान्दसमितो दीर्घत्वम् । यद्वा—इमनिचि 'तुरिष्ठेमेयस्सु' इति लोपः । अस्मदादिस्सोमस्य माता हिरण्यपाणिः हिरण्यसहितपाणिः अमि-मीत मिमीते सोमम् । छान्दसो लङ् । सुक्रतुः शोभनकर्मा माता । यद्वा—ईदृशोहममि[मी]ति पुरुषव्यत्ययः, 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् । कृपा कल्पनयाङ्गुल्यादिविषयया सुवः सुष्ठु वृतः आगतोहम् । यद्वा—कृपा सामर्थ्येन सुवः सुष्ठु प्राप्तः यस्य प्रसवेनेति । अन्य आहुः—सवीमनीति निमित्तसप्तमी । सर्वस्य प्रसवार्थं यस्य भा[सो] विश्वं द्योतयन्ति स देवो हिरण्यपाणिः अपहरणशीलरश्मिः सुक्रतुश्शोभनकर्मा सुवः आदित्यः कृपया मामध्वर्युमाविश्य स्वयमेव सोमं मिमीते । अत्र वा सवीमनीति सम्बध्यते, सर्वस्य प्रसवार्थं स्वयमेव कृपया मामाविश्य सोमं मिमीते इति । कृपू सामर्थ्ये, क्विप्, 'सावेकाचः' इति विभक्तेरुदा-त्तत्वम् । पक्षान्तरेपि क्विबन्तमेव कृपायां वर्तते । तृतीयायां वा आकारः । सुपूर्वादर्तेर्विचि गुणे स्वः, 'तन्वादीनां छन्दसि बहुळम्' इत्युवङादेशः, 'न्यङ्स्वरौ स्वरितौ' इति स्वरितत्वम् ॥

सुवः । प्रजाभ्यस्त्वा प्राणाय त्वा
व्यानाय त्वा प्रजास्त्वमनु प्राणि-
हि प्रजास्त्वामनु प्राणन्तु ॥ १३ ॥

क्रतुरिति सु–क्रतुः । कृपा । सुवः । [3]प्रजाभ्य इति प्र–जाभ्यः । त्वा । [4]प्राणायेति प्र–अनाय । त्वा । [5]व्यानायेति वि–अनाय । त्वा । [6]प्रजा इति प्र–जाः । त्वम् । अनु । प्रेति । अनिहि । प्रजा इति प्र–जाः । त्वाम् । अनु । प्रेति । अनन्तु ॥ १३ ॥

अनु सप्त च ॥ ६ ॥

---

[3]अवशिष्टं सोमं मितेनोपसमूहति—प्रजाभ्य इति ॥ प्रजानां सदस्यानां*मर्थाय त्वामवशिष्टं उपसमूहामि मितं प्रापयामि । 'यद्वै तावानिव सोमस्स्यात्'† इत्यादि ब्राह्मणम् ॥

[4]उष्णीषेणोपसन्नह्यति—प्राणायेति ॥ प्राणार्थं त्वां सोममुपनह्यामीति । 'प्राणमेव पशुषु दधाति'† इति ब्राह्मणम् ॥

[5]बन्धनं शिथिलीकरोति—व्यानायेति ॥ व्यानार्थं त्वामनुश्रृन्थामीति । 'व्यानमेव पशुषु दधाति'† इति ब्राह्मणम् ॥

[6]यजमानमवेक्षयति सोमं—प्रजा इति ॥ हे सोम प्रजा अनु त्वं प्राणिहि प्रजार्थं जीवेत्यर्थः । प्रजाश्च त्वां प्राणन्तमनु प्राणन्तु त्वयि प्राणति ताः प्राणन्तीति ॥

इति द्वितीये षष्ठोनुवाकः.

---

*ख-ग—समर्थाना. †सं. ६-१-९.

सोमं॑न्ते क्रीणाम्यू॒र्जस्व॑न्तं॒ पय॑स्वन्तं॑
वी॒र्या॑वन्तमभिमाति॒षाह॑ꣳ शु॒क्रन्ते॑

[1]सोम॑म् । ते॒ । क्री॒णा॒मि॒ । ऊ॒र्जस्व॑न्तम् । पय॑स्वन्तम् । वी॒र्या॑वन्त॒मिति॑ वी॒र्य॑—व॒न्त॒म् । अ॒भि॒मा॒ति॒षाह॒मित्य॑भिमाति—साह॑म् । शु॒क्रम् । ते॒ । शु॒क्रेण॑ । क्री-

[1]हिरण्येन पणते—सोमं त इति ॥ हे सोमविक्रयिन् ते तव सकाशात्सोमं क्रीणामि । ऊर्जस्वन्तं रसवन्तं बलवन्तं वा । ऊर्जयतेरसुन्प्रत्ययः । पयस्वन्तं क्षीरवन्तं, उदकवन्तं* वा तद्धेतुत्वात् । वीर्यावन्तं वीरकर्मवन्तम् । 'अन्येषामपि दृश्यते' इति दीर्घः । अभिमातिषाहं, अभिमातिः पाप्मा तस्याभिभवितारं नाशयितारम् । 'छन्दसि सहः' इति ण्विः, 'सहेस्साढस्सः' इति षत्वम् । शुक्रं शुद्धं सोमम् । ते इति पुनर्वचनमादरार्थम् । शुक्रेण हिरण्येन क्रीणामि । आख्यातावृत्तिरप्यादरार्थैव । यद्वा—क्रीत्यन्तरारम्भादुभयं पुनरुपादीयते मूल्यमपि हिरण्य†प्रभृति निर्दिश्यते । चन्द्रमाह्लादकरं सोमं चन्द्रेण तादृशेन हिरण्येन । अमृतं देवानां यजमानस्य वा अमरणहेतुं सोमं अमृतेन तथाविधेन हिरण्येन । मृतं मरणं यस्य सकाशे नास्तीत्यमृतम् । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । स्तुत्यर्थमनेकविशेषणोपादानम् । किञ्च—हे सोमविक्रयिन् ते तव गोर्वाचः, सम्यत्संयतं सङ्गतं यथा तथा क्रीणामीति क्रियाविशेषणम् । संपूर्वाद्यमेः क्विप्, छान्दसे अनुनासिकलोपे तुक्, समो मका-

*ख.अर्थवन्तम्. †ख-ग—मूल्यमपिहीतः.

शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृत-
ममृतेन सम्यत्ते गोरस्मे चन्द्राणि
तपसस्तनूरसि प्रजापतेर्वर्णस्तस्या-

णामि । चन्द्रम् । चन्द्रेण । अमृतम् । अमृतेन । सम्यत् । ते । गोः । [2]अस्मे इति । चन्द्राणि । [3]तपसः । तनूः । असि । प्रजापतेरिति प्रजा—

रस्य चानुस्वाराभावश्छान्दसः । यद्वा—तव गोस्सम्यत् तव वाचं सङ्गच्छते यथा तथा क्रीणामि । एतेर्लटश्शत्रादेशः । गोः कर्मणि षष्ठी, 'न लोकाव्यय' इति प्रतिषेधः व्यत्ययेन न प्रवर्तते । तव वाचा सङ्गच्छमानं क्रीणामीत्यर्थः । अथवा—सम्यगित्यस्यान्त्यविकारश्छान्दसः, तव वाचस्समीचीनमिति यावत् । 'समस्समिः' इति समिरादेशः । षमष्टम अवैकल्ये, व्यत्ययेन श्यन्, 'छन्दस्युभयथा' इति शतुरार्धधातुकत्वादडुपदेशाल्लसार्वधातुकानुदात्तत्वाभावः । तव वाचोऽविकलं क्रीणामीति ॥

[2]यजमानाय प्रयच्छति हिरण्यं—अस्मे इति ॥ अस्माकमेव चन्द्राणि हिरण्यानि, न सोमविक्रयिणः; चन्द्रेण क्रीणामीति तु छलमात्रमुक्तमिति । 'सुपां सुलुक्' इति षष्ठीबहुवचनस्य शे इत्यादेशः । अस्मानेव हिरण्यं पुनः प्राप्नोत्वित्यर्थः । 'देवा वै येन हिरण्येन'* इत्यादि ब्राह्मणम् ॥

[3]अजया क्रीणाति—तपस इति ॥ अजा जातिरुच्यते । तपसो यज्ञस्य तनूः शरीरं त्वमसि यागसाधनानां प्रधानभूतासीत्यर्थः ।

*सं. ६-१-१०.

स्ते सहस्रपोषं पुष्यन्त्याश्चरमेण
पशुना क्रीणाम्यस्मे ते बन्धुर्मयि

पतेः । वर्णः । तस्याः । ते । सहस्रपोषमिति सहस्र-पोषम् । पुष्यन्त्याः । चरमेण । पशुना । क्रीणामि । [4]अस्मे इति । ते । बन्धुः । [5]मयि । ते । रायः ।

ऊप्रत्ययान्तस्तनूशब्दः । किञ्च—प्रजापतेर्वर्णः स्वरूपं त्वमसि । प्रजापतेस्सर्वदेवतात्मकत्वात् सर्वेषां देवानां रूपं त्वमसीत्युक्तं भवति । अस्याश्च सर्वदेवत्यत्वात् सर्वदेवस्वरूपता । यथोक्तं 'सा वा एषा सर्वदेवत्या यदजा '* इति । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । तस्यास्तादृश्यास्ते तव सहस्रपोषं सहस्रस्य पुष्टिं, बह्वीं वा पुष्टिं, पुष्यन्त्याः पुष्कलं† मुत्पादयन्त्याः कुर्वन्त्या वा सम्बन्धी यश्चरमः पशुर्व्यक्तिरूपेण पश्चाज्जातः तेन सोमं क्रीणामि । तव कलामात्रेण क्रीणामीति महिमातिशयप्रति-पादनार्थं चरमग्रहणम् । यथा—'पशुभ्य एव तदध्वर्युर्निह्नुते '‡ इत्यादि ब्राह्मणम् ॥

[4]यजमानमीक्षते—अस्मे त इति ॥ प्रथमाबहुवचनस्य शे इत्या-देशः । हे यजमान वयं तव बन्धवः । बध्यतेस्मिन्कर्मणि बन्धुरध्वर्युरुच्यते । तेनैव सूत्रेण जसस्स्वादेशः । यद्वा—अस्म इति व्यत्ययेन बहुवचनम्; अहं तव बन्धुरित्यर्थः ॥

[5]आत्मानमीक्षते—मयीति ॥ मयि तव रायः अपत्यलक्षणानि

*सं. ३-४-३. †क–पुष्टि. ‡सं. ६-१-१०.

ते रायंश्श्रयन्तामस्मे ज्योतिस्सो
मविक्रयिणि तमोमित्रो न एहि
सुमित्रधा इन्द्रस्योरुमा विश दक्षि-

श्रयन्ताम् । [6]अस्मे इति । ज्योतिः । [7]सोमविक्र-
यिणीति सोम-विक्रयिणि । तमः । [8]मित्रः । नः ।
एति । इहि । सुमित्रधा इति सुमित्र-धाः । [9]इन्द्र-

---

धनानि श्रयन्ताम् वर्तन्ताम् ममैव याज्या* भवन्त्विति यावत् । त इति वचनात्पूर्वशेषत्वं† युक्तमिव‡ लक्ष्यते ॥

[6]यजमानं शुक्लोर्णुकया क्षिपति—अस्मे ज्योतिरिति ॥ अस्माकमेव प्रकाशः । पूर्ववदामश्शे इत्यादेशः ॥

[7]कृष्णोर्णया सोमविक्रयिणं विध्यति ॥ सोमविक्रयिणि तमोस्तु । 'कर्मणीनिर्विक्रियः' इतीनिप्रत्ययः ॥

[8]सोमविक्रयिणस्सोममादत्ते—मित्र इति ॥ हे सोम सुमित्रधाः शोभनानां मित्राणां यजमानानां धारयिता त्वं अस्मान् मित्रोभूत्वा एहि आगच्छ । व्यत्ययेन कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा—मित्राणां सुधारयिता सुमित्रधाः । सुमित्रधा इति प्रादिसमासे गतित्वाभावादव्ययादिस्वरत्वम् । 'आतो मनिन्' इति विच् । 'वारुणो वै क्रीतस्सोम उपनद्धः'§ इति ब्राह्मणम् ॥

[9]यजमानस्य दक्षिण ऊरावासादयति—इन्द्रस्येति ॥ इन्द्रस्येश्वरस्य यजमानस्य ऊरुं दक्षिणमुशन्तं त्वामेव कामयमानं त्वमेव

---

*ख—योग्या. †ग—सर्वशेषत्वं. ‡ख. ग—...क्तमिति. §सं. ६-१-११.

णमुशन्नुशन्तꣳ स्योनस्स्योनꣳ स्वा
नभ्राजाङ्घारे बम्भारे हस्त सुहस्त

स्य । ऊरुम् । एति । विश । दक्षिणम् । उशन् । उशन्तम् । स्योनः । स्योनम् । [10]स्वान । भ्राज । अङ्घारे । बम्भारे । हस्त । सुहस्तेति सु-हस्त ।

---

कामयमानस्त्वं स्योनः सुखस्त्वं स्योनं तादृशं तमाविश । स्यमु स्वन ध्वन शब्दे, 'शमेश्च' इति नप्रत्ययः । 'ग्रहिज्या' इत्यादिना वष्टेस्सम्प्रसारणम् । 'देवा वै यज्ञ सोमं'* इत्यादि ब्राह्मणम् ॥

[10]स्वानादिभ्यः सोमक्रयणान्परिददाति—स्वानेत्यादिना ॥ स्वानादयः† सोमस्य रक्षितारः देवाः । स्वानः शब्दयिता‡ । स्वनेर्ण्यन्तात्पचाद्यच् । भ्राजत इति भ्राजः दीप्तिमान् । स एवाच् । अंहसामरिः अङ्घारिः । अङ्घभावश्छान्दसः । यद्वा—अघिगत्याक्षेपे, अङ्घमाना अरयो यस्येत्यङ्घारिः पलायमानशत्रुः । बंभारिः बंभ्रम्यमाणारिः । तस्मिन्नेवाचि, पृषोदरादित्वाद्रूपसिद्धिः । हस्तः हसनशीलः अनादृतशत्रुवीर्यः । सहेर्वा आद्यन्तविपर्ययः, अभिभविता शत्रूणाम् । सुहस्तः कल्याणपाणिः, शोभनहस्तकृत्यो वा । कृशानुः नाशयिता शत्रूणाम् । कृश तनूकरणे, तस्मादानुक्प्रत्ययः । यद्वा—कृशाननयति जीवयतीति अन्तर्भावितण्यर्थात् अनितेरुण्प्रत्ययः । यद्वा—कृशाः स्वल्पवीर्याः अनवः प्राणिनो यस्मिन् तादृशः । सर्वत्र चात्र षाष्ठिकमामन्त्रिताद्युदा-

---

*सं. ६-१-११. †स्व-स्वान

कृशानवेते वस्सोमक्रयणास्तान्रक्ष-
ध्वं मा वो दभन्न् ॥
उदायुषा स्वायुषोदोषधीनाꣳ रसे-

कृशानविति कृश—अनो । एते । वः । सोमक्रयणा इति सोम—क्रयणाः । तान् । रक्षध्वम् । मा । वः । दभन्न् ॥ १४ ॥

ऊरुन्धाविꣳशतिश्च ॥ ७ ॥

[1]उदिति । आयुषा । स्वायुषेति सु—आयुषा ।

त्त्वम्, ‘आमन्त्रितं पूर्वमविद्यमानवत्’ इति पूर्वपूर्वाविद्यमानता । हे स्वानादयः एते सोमक्रयणाः सोमः क्रीयते यैस्ते गवादयः वः युष्मभ्यं समर्पिताः रक्षार्थम् । अतस्तान् यूयं रक्षध्वम् । युष्माभिरेते रक्षणीयाः, ये यूयं सोमं रक्षध्वम् । व्यत्ययेनात्मनेपदम् । मा वो युष्मान् सोमक्रयणान् रक्षतः केचिदपि दभन्न् हिंसिषुः । दम्भेश्छान्दसः च्लेरङादशः । ‘एते वामुष्मिन् लोके सोममरक्षन्’* इत्यादि ब्राह्मणम् ॥

इति द्वितीये प्रपाठके सप्तमोनुवाकः.

[1]सोममादायोत्तिष्ठति—उदित्यन[न्व?]वसानयानुष्टुभा ॥ उच्छब्दादयश्चत्वारोपि पादाः । अस्थामिति वक्ष्यते, तेनोदित्यस्य

*सं. ६-१-१०.

नोत्पर्जन्यस्य शुष्मेणोदस्थाममृ
ताँ अनु । उर्वन्तरिक्षमन्विहादि-

उदिति । ओषधीनाम् । रसेन । उदिति । पर्जन्य-
स्य । शुष्मेण । उदिति । अस्थाम् । अमृतान् ।
अनु । [2]उरु । अन्तरिक्षम् । अन्विति । इहि । [3]अदि-

सम्बन्धः । आयुस्सोमः अयनीयत्वा*दायुषोन्नस्य वा हेतुत्वात्स एव विशेष्यते । स्वायुषा शोभनमायुर्देयमस्मिन्निति स्वायुः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । तादृशेन त्वया सहाहं उदस्थामुत्तिष्ठामि । छान्दसो लुङ् । 'गातिस्था' इति सिचो लुक् । तदिदमोषधीनां रसेन सारेणोदस्थाम्, पर्जन्यस्य शुष्मेण बलेनोदस्थाम्, तदुभयस्यापि तदधीनत्वात् । किञ्च, अमृतानमरणान् देवान् अनु लक्षीकृत्य उद्दिश्य वा त्वया सहोदस्थाम्, अमरणान् देवान् कर्तुमिति यावत् । उत्तरपदाद्युदात्तत्वे, पूर्ववद्रुत्वानुनासिकौ सांहितिकौ । 'देवता एवान्वारभ्योत्तिष्ठति'† इति ब्राह्मणम् ॥

[2]सोमवाहनमनोभिप्रैति—उर्विति गायत्र्यैकपदया ॥ विस्तीर्णमाकाशमनुगच्छ निर्बाधं गच्छेति । व्याख्याता चेयम्‡ । 'अन्तरिक्षदेवत्यो ह्येतर्हि सोमः'† इति ब्राह्मणम् ॥

[3]नीडे कृष्णाजिनमास्तृणाति—अदित्या इति ॥ अदित्याः देवमातुः सदः सदनं लोकलक्षणं त्वमसि ॥

*ख—अदनीयत्वा. †सं. ६-१-११. ‡सं. १-१-२[18]

त्या॒स्सदो॒ऽस्यदि॑त्या॒स्सद॒ आ सी॑दा-
स्त॑भ्ना॒द्द्यामृ॑ष॒भो अ॒न्तरि॑क्ष॒ममि॑-
मीत वरि॒माणं॑ पृथि॒व्या आसी॑द्-
द्विश्वा॒ भुव॑नानि स॒म्राड्विश्वेत्ता॒नि

त्याः । सदः॑ । अ॒सि । [4]अदि॑त्याः । सदः॑ । एति॑ । सीद॒ । [5]अस्त॑भ्नात् । द्याम् । ऋ॒ष॒भः । अ॒न्तरि॑क्षम् । अमि॑मीत । व॒रि॒माण॑म् । पृ॒थि॒व्याः । एति॑ । अ॒सी॒द॒त् । विश्वा॑ । भुव॑नानि । स॒म्राडिति॑ सं॒—राट् ।

---

[4]तस्मिन्सोमं निदधाति—अदित्या इति ॥ अदित्यास्सदः सदन स्थानीयमेतत् कृष्णाजिनमासीद उपविश अस्मिन् ॥

[5]सोममुपतिष्ठते—अस्तभ्नादिति त्रिष्टुभा ॥ अमिमीतेति द्वितीयस्य पादस्यादिः, अत एव न निहन्यते । अस्तभ्नात् स्तब्धां दृढामकरोत् द्यां द्युलोकम् । ऋषभो वर्षिता अन्तरिक्षममिमीत मितवान् निर्मितवान् । वरिमाणं पृथिव्याः वरिमाणं उरुत्वम् । 'प्रियस्थिर' इत्यादिना वरादेशः । यद्वा—वरिमाणं वारकत्वम् । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्, उञ्छादिर्द्रष्टव्यः । आसीदत् व्याप्तवान् वर्षेण । विश्वा विश्वानि च भुवनानि भूतजातानि आसीदत् इत्येव । यद्वा—अन्तरिक्षममिमीत वरिमाणं च पृथिव्या अमिमीतेत्येव । विश्वानि भुवनानि आसीदत् इत्यन्तर्भावितण्यर्थो वा आसादयति विश्वानि भुवनानीति । 'शेश्छन्दसि बहुळम्' इति लुक् । सम्राट् सङ्गतदीप्तिः । 'मो

वरु॑णस्य व्र॒तानि॒ वने॑षु॒ व्य॑न्तरि॑-
क्षं ततान॒ वाज॒मर्व॑त्सु॒ पयो॑ अ-
घ्नियासु॑ हृ॒त्सु ॥ १५ ॥ क्रतुं॑ वरु॑-
णो वि॒क्ष्व॑ग्निं दि॒वि सूर्य॑मदधा॒त्सो-

विश्वा॑ । इत् । तानि॑ । वरु॑णस्य । व्र॒तानि॑ । [6]वने॑षु । वीति॑ । अ॒न्तरि॑क्षम् । त॒तान॒ । वाज॑म् । अर्व॒त्स्वित्य-र्व॑त्-सु॒ । पय॑: । अ॒घ्नियासु॑ । हृ॒त्स्विति॑ हृ॒त्-सु॒ । ॥१५॥ क्रतु॑म् । वरु॑णः । वि॒क्षु । अ॒ग्निम् । दि॒वि ।

राजि समः क्वौ' इति मकारः । यान्येवंविधानि तानि विश्वान्येव वरुणस्य वारकस्य सोमस्य व्रतानि वीर्याणि कर्माणि, त्वमेवेन्द्रो भूत्वा तथा तथा कृतवानित्यर्थः । 'वारुण्यर्चा सादयति'* इत्यादि ब्राह्मणम् ॥

[6]सोमं वाससा वेष्टयति—वनेष्विति त्रिष्टुभा । वाजमिति द्वितीयस्यादिः । हृत्स्विति तृतीयस्य । दिवीति चतुर्थस्य ॥ वनेषु वृक्षेषु वृक्षषण्डेषु वा अन्तरिक्षं भूताकाशं† विततान विस्तारितवान् । वाजं वेगमर्वत्सु अश्वेषु विततान । 'अर्वणस्त्रसावनञः' इति त्रादेशः । पयः क्षीरमघ्नियासु गोषु विततान । अहन्तव्या अघ्नियाः । 'अघ्न्यादयश्च' इति निपात्यते । हृत्सु हृदयेषु क्रतुं विज्ञानं विततान । वरुणो वरुणशब्दवाच्यस्सोमः विक्षु मर्त्येषु अग्निं विततान । दिवि सूर्यमदधात् स्थापितवान् । सोमं

*सं. ६-१-११. †ख—भूत्वा आकाशं.

ममद्रावुदु त्यं जातवेदसं देवं वं-
हन्ति केतवः । दृशे विश्वाय सू-
र्यम् । उस्रावेतं धूर्षाहावनश्रू अ-

सूर्यम् । अदधात् । सोमम् । अद्रौ । [7]उदिति । उ ।
त्यम् । जातवेदसमिति जात-वेदसम् । देवम् ।
वहन्ति । केतवः । दृशे । विश्वाय । सूर्यम् । [8]उस्रौ ।
एति । इतम् । धूर्षाहाविति धूः-साहौ ।

---

लतारूपमात्मानं अद्रावदधात् इत्येव । त्वमेवं यथैतत्सर्वमकरोः तथा वाससा आत्मानं वेष्टयामीति ॥

[7]सौर्यर्चा कृष्णाजिनं पुरस्तात्प्रत्यानह्यत्यूर्ध्वग्रीवम्—उदुत्यमिति गायत्र्या ॥ त्यं तं* जातवेदसं जातानां वेदितारम् । 'गतिकारकयोरपि' इत्यसुन्प्रत्ययः । जातप्रज्ञानं वा सूर्यं देवं देवनादिगुणयुक्तं उद्वहन्ति ऊर्ध्वं वहन्ति केतवो रश्मयः दृशे द्रष्टुम् । 'दृशे विख्ये च' इति निपात्यते । विश्वाय विश्वार्थं विश्वं लोको यथा एनं पश्येत् तदनुरूपमुद्वहन्ति । स्मैभावाभावश्छान्दसः । क्रियमाणेन का सङ्गतिः? उच्यते—एतस्य कर्मणस्सामर्थ्यादेतदेवं भवतीति ॥

[8]सोमवाहनावानीयमानौ प्रतिमन्त्रयते—उस्राविति विराजैकपदया यजुरन्तया ॥ हे उस्रौ बलीवर्दौ एतमागच्छतं धूर्षाहौ

---

*ख. ड अत्यन्तम्.

वीरहणौ ब्रह्मचोदनौ वरुणस्य स्कम्भनमसि वरुणस्य स्कम्भ-

अनश्रू इति । अवीरहणावित्यवीर—हनौ । ब्रह्मचो-दनाविति ब्रह्म—चोदनौ । [9]वरुणस्य । स्कम्भनम् । असि । [10]वरुणस्य । स्कम्भसर्जनमिति स्कम्भ—

---

धूर्वाहौ धुरस्सोढारौ धुरं वोढुं समर्थौ । 'छन्दसि सहः' इति ण्विः, पूर्ववत् षत्वम् । अनश्रू अश्रुवर्जितौ अखिन्नौ सन्तावागच्छतम् । 'नञ्सुभ्यां' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—अनसि शकटे वोढृत्वेन श्रुतौ विख्यातौ । क्विपि तुगभावश्छान्दसः । अनो वोढृत्वेन श्रितौ वा । श्रयतेः क्विपि वर्णव्यत्ययः । तुगभावश्छान्दसः । अवीरहणौ अहिंसकौ दान्तौ सन्तौ । यजुरादित्वान्न निहन्यते । ब्रह्मचोदनौ ब्रह्म अन्नं, तत्साधनत्वादिह सोम उच्यते; तस्य चोदनौ प्रस्थापयितारौ सन्तौ । कर्तरि करणे वा ल्युटि कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[9]दक्षिणं युनक्ति—वरुणस्येति ॥ वरुणस्य स्कम्भनं स्तम्भनमुत्पादयिता त्वमसि यागद्वारेण । यद्वा—वरुणस्य वरणीयस्य वारयितुर्वा सोमस्य स्कम्भनं धारयिता असि ॥

[10]शम्यामवगूहति—वरुणस्येति ॥ वरुणस्य सोमस्य स्कम्भनं स्कम्भः अविचलिमवस्थानं, तस्य सर्जनमुत्पादयिता चासि, त्वदधीनत्वात् स्कम्भनस्य ॥

सर्जनमसि प्रत्यस्तो वरुणस्य
पाशः ॥ १६ ॥
प्र च्यवस्व भुवस्पते विश्वान्यभि
धामानि मा त्वा परिपरी विदत्-

सर्जनम् । असि । [11]प्रत्यस्त इति प्रति-अस्तः ।
वरुणस्य । पाशः ॥ १६ ॥

हृत्सु पञ्चत्रिंशच्च ॥ ८ ॥

[1]प्रेति । च्यवस्व । भुवः । पते । विश्वानि ।
अभीति । धामानि । मा । त्वा । परिपरीति

---

[11]योक्त्रेण बध्नाति—प्रत्यस्त इति ॥ प्रत्यस्तः उत्क्षिप्तः वरुणस्य पाशस्त्वमसि । यद्वा—त्वया बन्धने कृते वरुणस्य पाशः प्रत्यस्तः ॥

इति द्वितीये अष्टमोनुवाकः.

---

[1]शकटेन सोमं प्रच्यावयति—प्रच्यवस्वेति तिसृभिः । तत्र प्रथमा षट्पदा अतिजगती ॥ प्रच्यवस्व प्रकर्षेणास्मा* द्देशाद्गच्छ भुवः भुवनस्य पते सोम । 'षष्ठ्याः पतिपुत्र' इत्यादिना सत्वम्, 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमु-

---

*तं—र्षेणात्मनास्मा.

न्मा त्वां परिपुन्थिनो विदुन्मा
त्वा वृका अघायवो मा गंन्धुर्वो

परि–पुरी । विदत् । मा । त्वा । पुरिपुन्थिन् इतिं परि–पुन्थिनः । विदुन् । मा । त्वा । वृकाः । अघायव् इत्यंघ–यवंः । मा । गुन्धुर्वः । विश्वा-

---

दायो निहन्यते । विश्वानि धामानि गन्तव्यानि स्थानानि अभि लक्षीकृत्य गच्छ । ‘अभिरभागे’ इति कर्मप्रवचनीयत्वम् । किञ्च—तथा गच्छन्तं त्वां परिपरी मा विदत् मा प्रापत् । वि-न्दतेर्लुङि लृदित्वादङ् । ‘छन्दसि परि’ इत्यादिना पर्यवस्था तरि निपात्यते । योध्वन्याक्रम्य बाधते स पर्यवस्थाता । स वि-श्वावसुर्गन्धर्वोभिप्रेतः यः पूर्वं सोमं पर्यमुष्णात् । ब्राह्मणं च भवति ‘मा त्वा परिपरी विददित्याह यदेवादस्सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्तस्मादेवमाहापरिमोषाय’* इति । स इदानीं त्वाम्मा विददिति । किञ्च—सर्व एव परिपन्थिनः विश्वावसोरन्येपि त्वां मा विदन् । तेनैव निपात्यते । किञ्च—वृकाः आदाय गन्तारः । वृक वृक आदाने, इगुपधात्कः, पचाद्यच् [ज्वा ?], पुषादिर्द्रष्टव्यः । अघं पापं वधादिकं तदि-च्छन्तः । ‘छन्दसि परेच्छायाम्’ इति क्यच्, ‘अश्वाघ-स्यात्’ इत्यात्वम् । येध्वनि पीडां कुर्वन्तोन्यत्र बाधितुं अध्व-नोपनयन्ति ते त्वां मा दघत् मात्मसात्कार्षुः । दघ पालने, छान्दसश्श्लेरङादेशः । एवं तु वक्ष्यमाणस्यैकवचनस्य विपरिणा-

---

*सं. ६-१-११.

वि॒श्वाव॑सुरा द॑घच्छ्ये॒नो भू॒त्वा परा॑
पत॒ यज॑मानस्य नो गृ॒हे दे॒वैस्स-
ꣳ॒स्कृ॒तं यज॑मानस्य स्व॒स्त्यय॑न्य॒-

वसु॒रिति॑ वि॒श्व—व॒सु॒ः । एति॑ । द॒घ॒त् । [2]श्ये॒नः । भू॒त्वा । परेति॑ । प॒त॒ । यज॑मानस्य । न॒ः । गृ॒हे । दे॒वैः । स॒ꣳ॒स्कृ॒तम् । [3]यज॑मानस्य । स्व॒स्त्य॒य॒नीति॑

---

मेन सम्बन्धः क्लिष्टस्स्यात् । तस्माद्वृका अपि त्वां माविदन्नित्येव । किञ्च—विश्वावसुनामा गन्धर्वः त्वां मा दघत् परिपरी च मा भूत् आदघिता च मा भूत् इति द्वयमस्य निषिध्यते । चतुर्थपादो विवृद्धाक्षरः ॥

[2]अथ द्वितीया श्येन इत्यनुष्टुप् । अत्र तृतीयः पादो ह्रसिष्ठः, चतुर्थो वर्षिष्ठः ॥ श्येन इव शीघ्रो भूत्वा परापत निस्सङ्कटं गच्छ अस्मदीयस्य यजमानस्य गृहे प्राग्वंशे । तत्र ऋत्विग्भिर्देवैस्संस्कृतं आसन्दीस्थानम् । प्रवृद्धादित्वादुत्तरपदान्तोदात्तत्वम् ॥

[3]अध्वर्युयजमानौ गच्छतः—यजमानस्य स्वस्त्ययनीति ॥ स्वस्त्ययनमविनाशप्रापणं तद्वानसि यजमानस्य स्वस्त्ययनकार्यसि हे सोम । यद्वा—स्वस्तिमदयनमाश्रयस्तद्वान् अविनश्वराश्रयत्वात् यजमानस्याविनश्वराश्रयोसीति यावत् । सर्वथा 'परादिश्छन्दसि बहुळम्' इत्युत्तरपदाद्युदात्तत्वम् । सतिशिष्टत्वादीनि[दि] स्वरस्य ॥

स्यापि॒ पन्था॑मगस्महि स्वस्ति॒गा-
म॑ने॒हस॑ं॒ येन॒ विश्वा॒ः परि॒ द्विषो॑

स्वस्ति—अय॑नी । अ॒सि॒ । [4]अपीति॑ । पन्था॑म् ।
अ॒ग॒स्म॒हि॒ । स्व॒स्ति॒गामिति॑ स्वस्ति—गाम् । अ॒ने॒-
ह॒सम् । येन॑ । विश्वा॑ः । परीति॑ । द्विष॑ः । वृ॒णक्ति॑ ।

---

[4]अथ तृतीया—अपिपन्थामित्यनुष्टुप् । केचिदाहुः—'प्रथमा धृतिर्नवपदा । यजमानस्य स्वस्त्ययनीत्यादिका तु पञ्चपदा पङ्क्तिः' इति ॥ अपि च, वयमपि पन्थां पन्थानमगस्महि सम्प्राप्ताः त्वत्प्रसादेन सोम । कीदृशं स्वस्तिगां, स्वस्ति अविनाशं गम्यते येन तादृशम् । 'गाङ् गतौ' इत्यतो विच् । अनेहसं अपापं पापफलरहितं पन्थानं अगमाम । व्यत्ययेनात्मनेपदम्, 'वा गमः' इति सिचः कित्त्वादनुनासिकलोपः । 'पथिमथ्यृभुक्षामात्' इत्यात्वम् व्यत्ययेन द्वितीयायामपि भवति । यद्वा—'आशंसायां भूतवच्च' इति लुङ् । तमपि पन्थानं गम्यास्म स्वस्तिगामनेहसम् । पुनश्च पन्था विशेष्यते—येन पथा गच्छन् विश्वा द्विषः विश्वान्* द्वेष्यान् । लिङ्गव्यत्ययेन स्त्रीत्वम् । यद्वा—सम्पदादिलक्षणास्त्रियां क्विप् । परिवृणक्ति परितो वर्जयति । किञ्च—विन्दते लभते च वसु धनं तमगमाम गम्यास्म वा ॥

---

*क—द्वेष्टन्.

**वृणक्ति विन्दते वसु नमो मित्रस्य**
**वरुणस्य चक्षसे महो देवाय तदृतꣳ**

**विन्दते । वसु । [5]नमः । मित्रस्य । वरुणस्य । चक्षसे । महः । देवाय । तत् । ऋतम् । सपर्यत । दूरेदृश इति दूरे—दृशे । देवजातायेति देव—जा-**

---

[5]राजानं प्रत्युपतिष्ठते—नमो मित्रस्येति जगत्या ॥ सूर्यात्मना सोमस्स्तूयते । नमस्कारोस्तु तस्मै मित्रस्य वरुणस्य चक्षसे चक्षुस्स्थानीयाय । महः चतुर्थ्यर्थे षष्ठी; महते देवाय तदृतं यज्ञं सपर्यत तस्मै देवाय सपर्यार्थं यज्ञमपि प्रयुङ्क्ष्म् । सपर पूजायां कण्ड्वादिः । विभक्तिव्यत्ययेन वा चक्षुस्स्थानीयं तं ऋतेन परिचरतेति । एवं नमस्कारेण यज्ञेन च महान् देव आराध्यत इत्युक्तम्, अधुना स्तोत्रेणाप्याराधनीय इत्याह— दूरेदृशे दूरे सर्वदा दृश्यत इति दूरेदृक्, दूरे स्थित्वा सर्वं पश्यतीति वा । 'तत्पुरुषे कृति बहुळम्' इत्यलुक् । देवजाताय जाता देवा यस्मिन् । 'निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्' इति परनिपातः । केतवे रश्मिमते । मत्वर्थीयो लुप्यते । यद्वा—केतुः प्रज्ञा, तद्धेतवे तदात्मने वा । दिवस्पुत्राय दीप्तेः पुत्रस्थानीयाय, सदा तत्प्रभवत्वात् । यद्वा—दिवो द्युलोकस्य दुःखात्त्रायकाय । 'षष्ठ्याः पतिपुत्र' इत्यादिना सत्वम् । ईदृशाय सूर्याय विश्वस्य सवित्रे शंसत शस्त्राणि कुरुत, स्तुवतेति यावत् । एवं लिङ्गात्सूर्योपस्थानमिदं प्रतीयते, सोमोपस्थाने तु विनियुज्यते 'राजानं प्रत्युपतिष्ठते' इति । तत्र

संपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत वरुणस्य स्कम्भनमसि वरुणस्य

ताय । केतवे । दिवः । पुत्राय । सूर्याय । शꣳसत ।
6वरुणस्य । स्कम्भनम् । असि । 7वरुणस्य । स्कं-

चक्षुस्स्थानीयस्य सूर्यस्य नमस्कारादिना* चक्षुष्मान्देव आराधितो भवतीत्याचार्यस्याभिप्रायः । इयं चोपपत्तिः—अत्र प्रकरणे मित्रवरुणशब्दौ सोमवचनौ मन्त्रेषु प्रसिद्धौ, यथा 'मित्रो न एहि '† इति सोम उच्यते । मितेः त्रायते इति मित्रः । 'वरुणो वा एष यजमानमभ्यैति यत्क्रीतस्सोम उपनद्धः '‡ इति च । वरुण इतीदानीं सोमाभिधानम् । वरणीयैस्सर्वैर्भवतीति वरुणः । देवायेति षष्ठ्यर्थे चतुर्थी । अयं भावः—मित्रत्वादिगुणविशिष्टस्य महतो देवस्यास्य त्व(मस्य) [म्] चक्षुस्स्थानीय [इति] सूर्याय नमस्कारादिकं कुरुतेति । अनेनैवाभिप्रायेण 'राजानं प्रत्युपतिष्ठते ' इति प्रतिशब्दः प्रयुक्तः ; राजानं प्रति राजानमुद्दिश्य सूर्यमुपतिष्ठत इति लिङ्गमप्यविरुद्धम् ॥

6शकटमुद्गीषमुपस्तम्भयति—वरुणस्य स्कम्भनमसीति ॥ व्याख्यातम् § । इह त्वयं विशेषः—ईषाया उपस्कम्भनमभिधेयम्, तत्र तु गौः ॥

7शम्यामुद्वृहति—वरुणस्य स्कम्भसर्जनमसीति ॥ व्याख्यातम्¶-मेतत् । अत्रापि स एवार्थः । सर्जनं विसर्जनं वेदितव्यम् ॥

*ख—नमस्कारविधिना. †सं. १-२-७[8] ‡सं ६ १-११.
§सं. १-२-८[9] ¶सं १-२-८[10]

स्कम्भसर्जनमस्युन्मुक्तो वरुणस्य पाशः ॥ १७ ॥

अग्नेरातिथ्यमसि विष्णवे त्वा सो-

म्भसर्जनमिति स्कम्भ-सर्जनम् । असि । [8]उन्मुक्त इत्युत्-मुक्तः । वरुणस्य । पाशः ॥ १७ ॥

मित्रस्य त्रयोविंशतिश्च ॥ ९ ॥

[1]अग्नेः । आतिथ्यम् । असि । विष्णवे । त्वा ।

---

[8]योक्रम*पनयति—उन्मुक्तो वरुणस्य पाश इति ॥ अपनीतोसीत्यर्थः । यद्वा—त्वय्यपनीते वरुणस्य पाशः उन्मुक्तो भवतीति ॥

इति द्वितीये नवमोनुवाकः.

---

[1]आतिथ्यं निर्वपति—अग्नेरातिथ्यमसीत्यादिभिः ॥ 'अतिथिरभ्यतितो गृहाद्भवति'† इति यास्कः । अतेरिथिन् । अतिथये इदमातिथ्यम् । 'अतिथेर्ञ्यः' । अत्र सर्वदेवतात्मनो विष्णोरंशभूता एते अग्न्यादयो राज्ञि गृहमागते आगता भवन्ति । ते च केवलं निर्वपणविशेषणतयोपादीयन्ते‡ । यथा—'यदग्नावाग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते'§ इति । अत्र नाग्नेर्हविषा सम्बन्धः । एवमेते अग्न्यादयो न हविर्भजन्ते, विष्णोरेव केवलस्य सर्वदेवतासमष्टिरूपस्य हविषा सम्बन्धः । ननु

---

*क—योक्रमव. †नै. का. ४-१-५ ['गृहान् भवति' इति मुद्रितनिरुक्तकोशे.]
‡ख—...णतया विधीयन्ते. §सं ६-२-१.

मस्यातिथ्यमसि विष्णवे त्वातिथे-
रातिथ्यमसि विष्णवे त्वाग्नये त्वा

[2]सोमस्य । आतिथ्यम् । असि । विष्णवे । त्वा ।
[3]अतिथेः । आतिथ्यम् । असि । विष्णवे । त्वा ।
[4]अग्नये । त्वा । रायस्पोषदाव्न्न इति रायस्पोष—

निर्वपणमन्त्रेष्वग्नचादयोपि प्रतीयन्ते, तत्कथं केवलं* विष्णुस्स्यात् हविषस्सम्बन्धी ? उच्यते—अग्नचादिग्रहणस्योपलक्षणार्थत्वादन्येषामपि राज्ञा सहागतानामतिथीनाम्, अत्रागतानां मध्ये कैश्चिन्निर्वापः क्रियत इति । अत्र हि ब्राह्मणम् 'यावद्भिर्वै राजानुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते'† इत्युक्त्वा 'अग्नेरातिथ्यमासि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति'† इत्यादिना अग्नचादीनामुपलक्षणभूतानां हविषा सम्बन्धो नास्तीति प्रतिपादयति‡ । तत्राग्नचादयस्तिस्रो देवताः विष्णुना व्यधिकरणभूता निर्दिष्टाः; अन्ये तु सामानाधिकरण्येन, आतिथ्यपदं च तयोर्मन्त्रयोर्नास्ति । तत्र वैचित्र्यकारणं मृग्यम् । मन्त्रार्थस्तु—निरुप्यमाणं द्रव्यमुच्यते । अग्नेरग्नचात्मनो विष्ण्वंशस्यातिथ्यमतिथिप्रयुक्तं निर्वाप्यं त्वमसि, तत्त्वां विष्णवे हविष्मते निर्वपामि ॥

[2]सोमस्य सोमलतात्मनो विष्ण्वंशस्य । शेषं समानम् ॥

[3]अतिथिरतनशीलः यतस्सर्वदा गच्छति आदित्य उच्यते; वायुर्वा । समानमन्यत् ॥

[4]रायस्पोषदावा नामाग्निविशेषः, तदात्मने विष्णवे त्वां निर्व-

*म., तं. दे—केवलो. †सं. ६-२-१.
‡क. अन्येषामपि राज्ञा सम्बन्धो नास्तीति प्रतीयते.

रायस्पोषदाव्ने विष्णवे त्वा श्ये-
नाय त्वा सोमभृते विष्णवे त्वा
या ते धामानि हविषा यजन्ति

दाव्ने । विष्णवे । त्वा । [5]श्येनाय । त्वा । सोम-भृत इति सोम-भृते । विष्णवे । त्वा । [6]या । ते । धामानि । हविषा । यजन्ति । ता । ते । विश्वा । परिभूरिति परि-भूः । अस्तु । यज्ञम् ।

---

पामि । रायो धनस्य पोषो रायस्पोषः । छान्दसष्षष्ठ्या अलुक्, 'षष्ठ्याः पतिपुत्र' इति सत्वम् । तं ददातीति । 'आतो मनिन्' इति वनिप्, कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[5]श्येनस्सोमभृद्देवताविशेषः । गायत्रीत्येके ॥ श्येनश्शंसनीय इत्याहुः । श्येनात्मा* वा सोमं बिभर्तीति सोमभृत् । गायत्री-पक्षे सोमं हरतीति सोमभृत् । 'हृग्रहोर्भश्छन्दसि' इति भत्वम् ॥

[6]यजमानस्सोममादत्ते—या त इति त्रिष्टुभार्धर्चेन ॥ हे सोम या यानि तव धामानि स्थानानि नामानि जन्मानि वा हविषा यजन्ति ता तानि विश्वान्यपि धामानि परिभूः परितो भावयिता रक्षिता अस्तु । कः? भवान् । यद्वा—पुरुषव्यत्ययः, एधी-त्यर्थः । यज्ञं च परिभूरस्तु । 'ततोन्यत्रापि दृश्यते' इति द्वितीया । तसिप्रत्ययान्तो† वा । तत्र 'अभितःपरितस्सम-यानिकषाहाप्रतियोगेष्वपि दृश्यते' इति द्वितीया । यद्वा—

---

*क. श्येनात्मना. †क–तासिल्प्रत्ययलोपो.

ता ते विश्वा परिभूरस्तु यज्ञं गयस्फानः प्रतरणस्सुवीरोऽवीरहा प्र चरा सोम दुर्यानदित्यास्सदोऽस्यदित्या-

[7]गयस्फान इति गय–स्फानः । प्रतरण इति प्र–तरणः । सुवीर इति सु–वीरः । अवीरहेत्यवीर–हा । प्रेति । चर । सोम । दुर्यान् । [8]अदित्याः । सदः । असि । [9]अदित्याः । सदः । एति ॥ १८ ॥

लक्षणे परेः कर्मप्रवचनीयसंज्ञा । 'कर्मप्रवचनीयानां प्रतिषेधः' इत्येतद्बाधित्वा व्यत्ययेन समासः ॥

[7]शालां प्रवेशयति—गयस्फान इति द्वितीयेनार्धर्चेन ॥ गय इति गृहनाम । गयानां गृहाणां स्फायिता वर्धयिता गयस्फानः । ओ स्फायी वृद्धौ, 'कृत्यल्युटो बहुळम्' इति कर्तरि ल्युट्, धातोरन्त्यलोपश्छान्दसः । आकारान्तं धात्वन्तरं वा द्रष्टव्यम् । प्रतरणः प्रकर्षेण दुर्गेभ्यस्तारयिता । सुवीरश्शोभनैः पुत्रपौत्रादिभिरस्मदीयैस्तद्वान् । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । अवीरहा कस्यचिदप्यस्मदीयस्य पुत्रपौत्रादेरहन्ता सर्वदा प्रसन्न एव सन्, हे सोम दुर्यान् प्राग्वंशादीन् गृहान् प्रचर प्रकर्षेण प्रविश्य चर ॥

[8–9]कृष्णाजिनस्तरणसोमस्थापनमन्त्रौ व्याख्यातौ* अदित्यास्सद इति ॥

*सं १-२-८-३-४.

स्सद॒ आ ॥ १७ ॥ सीद॒ वरु॑णोसि
धृ॒तव्र॑तो वारु॒णम॑सि शं॒योर्दे॒वाना॑ᳫँ
स॒ख्यान्मा दे॒वाना॑म॒पस॑श्छित्स्म-

सीद॒ । [10]वरु॑णः । अ॒सि॒ । धृ॒तव्र॑त॒ इति॑ धृ॒त—व्र॒तः । वा॒रु॒णम् । अ॒सि॒ । [11]शं॒योरिति॑ शं—योः । दे॒वा-नाम् । [12]स॒ख्यात् । मा । दे॒वाना॑म् । अ॒पसः॑ ।

---

[10]सोममुपतिष्ठते—वरुणोसीति गायत्र्यैकपदया यजुरन्तया ॥ हे सोम वरुणस्त्वमसि वरणीयत्वात् । वृतत्वाद्वा; वाससा आच्छादितत्वात् । 'वरुणो वा एष यजमानमभ्यैति यत्क्रीत-स्सोम उपनद्धः'* इति ब्राह्मणम् । धृतव्रतः धृतकर्मा धारण-त्वात्कर्मणाम् । वारुणं वरुणस्य तव यत्स्वभूतं† द्रव्यमिति‡ सर्वं त्वमेव त्वदधीनत्वात् ॥

[11]वंशे बध्नाति—शंयोरिति ॥ शं च योश्च देवानां भव । समाहारद्वन्द्वः, छान्दसं पुल्लिङ्गत्वम् । विद्यमानानां रोगादीनां शमनं शम् । आगामिनां यावनं पृथक्करणं उत्पत्तिनिरोधः योः । उभयत्रापि शाम्यतेर्यौतेश्च विच् ॥

[12]सोमस्य पादौ प्रक्षाळयति—सख्यान्मा देवानामिति ॥ देवानां सम्बन्धि यत् अपः कर्म ततः सख्याच्च तत एव हेतोः मा छित्स्महि विच्छिन्ना मा भूम । 'सख्युर्यः' ॥

---

*सं ६-१-११. †ख—यत्किं- द्वस्तुभूतं. ‡तं—द्रव्यं तादिति.

आप॑तये त्वा गृह्णामि परि॑पतये
त्वा गृह्णामि तनू॒नप्त्रे॑ त्वा गृह्णामि
शाक्व॒राय॑ त्वा गृह्णामि शक्म॒न्नो-
जि॑ष्ठाय

[13]आप॑तय॒ इत्या—प॒तये॑ । त्वा । गृह्णामि । [14]परि॑पतय॒ इति॒ परि॑—प॒तये॑ । त्वा । गृह्णामि । [15]तनू॒नप्त्र॒ इति॒ तनू॒—नप्त्रे॑ । त्वा । गृह्णामि । [16]शा॒क्व॒राय॑ । त्वा । गृह्णामि । [17]शक्म॒न्न् । ओजि॑ष्ठाय ।

[13]तानूनप्त्रं गृह्णाति—आपतय इति ॥ आवृत्त्या आभिमुख्येन वा पतति पातीति वा आपतिः प्राणः । 'प्राणो वा आपतिः'* इति च ब्राह्मणम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तस्मै तद्विनाशाय त्वां गृह्णामि ध्रुवातः स्रुवेण गृह्णामि ॥

[14]हे आज्य परितः सर्वतः पाति पततीति वा परिपतिः मनः । पातेर्डतिः । पतेः 'इन् सर्वधातुभ्यः' इति इन् । 'मनो वै परिपतिः'* इति च ब्राह्मणम् । तस्मै त्वां गृह्णामि ॥

[15]तनूनामपां नप्ता चतुर्थः तनूनप्ता अग्निः शरीरस्थः । तस्मै गृह्णामि । वनस्पत्यादित्वात्पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम् ॥

[16]शाक्वराय शक्त्यै । शकनशीलः शक्वरः तस्य भावश्शाक्वरं शक्तिरेव । 'शक्त्यै हि ते तास्समवाद्यन्त'* इति च ब्राह्मणम् । तस्मै गृह्णामि ॥

[17]शक्मन्न् शक्मेषु, जातावेकवचनम् । शकेर्मनिन्, 'सुपां

*सं. ६-२-२.

जिष्ठाय त्वा गृह्णाम्यनाधृष्टमस्य-
नाधृष्यं देवानामोजोऽभिशस्तिपा

त्वा । गृह्णामि । [18]अनाधृष्टमित्यना-धृष्टम् । असि । अनाधृष्यमित्यना-धृष्यम् । देवानाम् । ओजः । अभिशस्तिपा इत्यभिशस्ति-पाः । अ-

---

सुलुक्' इति ङेर्लुक्, 'न ङिसम्बुद्ध्योः' इति नलोपप्रतिषेधः । शक्तानां मध्ये ओजिष्ठाय अतिशयेन बलवते प्राणाय त्वां गृह्णामि । ओजस्विशब्दादिष्ठनि 'विन्मतोर्लुक्', 'टेः' इति टिलोपः । अयमेककार्यानुवृत्त्यर्थं समयः क्रियते । यद्येवं समयो न क्रियेत तदा परस्पराभिप्रायेण द्रोहेण विप्रतिपद्यमानाः यागं न कुर्युः । अतस्तन्मा भूदिति तानूनप्त्रं गृह्यते ॥

[18]अवमृशति—अनाधृष्टमसीति ॥ आज्यमुच्यते । अनाधृष्टं केनचिदप्यनभिभूतमसि । अनाधृष्यं केनचिदप्याभिभवितुमशक्यं चासि । 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यप्, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । देवानामोजो बलं चासि । त्वया हि देवा ऋत्विजो बलवन्तो यजन्ते । यद्वा—त्वया हि देवा इन्द्रादयो बलवन्तो भवन्ति । अभिशस्तिपाः अभिशस्तिरभिशंसनमभिशापः अतस्त्वं पासि । विचि लिङ्गव्यत्ययः । अनभिशस्तेन्यं अनभिशंसनीयं केनचिदपि नाभिशंस्यते न दूष्यत इत्यर्थः । एन्यप्रत्ययस्तुडागमश्च, उत्तरपदान्तोदात्तत्वं च छन्दसि । [यद्वा?] अभिशस्तेन योगं नार्हति इत्यनभिशस्तेन्यम् । 'छन्दसि च' इति

**अनभिशस्तेन्यमनु मे दीक्षां दीक्षा-**
**पतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा**

**नभिशस्तेन्यमित्यनभि-शस्तेन्यम् । [19]अन्विति । मे । दीक्षाम् । दीक्षापतिरिति दीक्षा-पतिः । म-न्यताम् । अन्विति । तपः । तपस्पतिरिति तपः-**

---

यः, विभक्तेर्लुगभावश्छान्दसः, योगं नार्हतीत्यर्थे तद्धितः, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—अभिशंसनं अभिशस्तं तन्नार्हतीति एन्यप्रत्ययश्छान्दसः, 'नञो गुणप्रतिषेधे' इत्युत्तरपदान्तोदात्तत्वम् । ईड्यां त्वमसीत्याज्यस्तुतिः ॥

[19]यजमानं वाचयति—अन्विति ॥ दीक्षापतिर्विष्णुस्स मम दीक्षामनुमन्यतां अनुजानातु । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । तपः उपसत् तस्य पतिस्तपस्पतिरग्निः । सोपि मम तपोनुमन्यताम् । अञ्जसा ऋजुना आशास्येन सत्यं समयं तानूनप्त्राभिमर्शनेन उपगेषं उपसम्प्राप्तोस्मि । अत एतद्विज्ञाय मां सुविते धाः धेहि स्थापय हे आज्य सुविते सूतौ अपत्ये मां धेहि अपत्यवन्तं मां कुरु । छान्दस इडागमः । यद्वा—सुविते स्विते सुष्ठुप्राप्ते अस्मत्प्राप्ते अस्मत्पूर्वचरिते यज्ञे वा मां धेहि । स्थाने वा सुखवति अस्मत्पूर्वैरिते मां स्थापय । 'तन्वादीनां बहुळं छन्दसि' इत्युवङादेशः, 'सूपमानात्क्तः' इत्युत्तरपदान्तोदात्तत्वम् । अन्य आहुः—अञ्जसा ऋजुना यथाशास्त्रीयेण सत्यं सति साधु परानिन्दात्मकं वस्तु उपगेषं उपगतो भूयासम् । तदर्थ-

सत्यमुपं गेषꣳ सुवितें मां धाः॥१९॥
अꣳशुरꣳशुस्ते देव सोमा प्यायता-
मिन्द्रायैकधनविद आ तुभ्यमिन्द्रः

पातिः । अञ्जसा । सत्यम् । उपेति । गेषम् । सुवि-
ते । मा । धाः ॥ १९ ॥

आ मैकंञ्च ॥ १० ॥

[1]अꣳशुरꣳशुरित्यꣳशुः—अꣳशुः । ते । देव ।
सोम । एति । प्यायताम् । इन्द्राय । एकधनाविदे

मामन्त्रिते श्रेयोर्थिभिस्सुष्ठु सेविते सुष्ठु ज्ञाते वा पथि मां ज्ञा[स्था]-
पयतेति । अस्मिन्पक्षे इणो गादेशश्छान्दसः, आशिषि लिङ्,
'लिङ्याशिष्यङ्', 'आतो लोपः', यासुट्, 'अतो येयः',
आर्धधातुकत्वात्सलोपाभावः, बहुळवचनाद्यलोपः । पूर्वस्मिन् पक्षे
लुङि 'इणो गा लुङि' इति गादेशः, छान्दसः इत्वं विकारः,
व्यत्ययेन 'गातिस्था' इति न प्रवर्तते, 'बहुळं छन्दस्यमाङ्योगेपि'
इत्यडभावः ॥

इति द्वितीये प्रपाठके दशमोनुवाकः.

---

[1]सोममाप्याययति—अंशुरंशुरिति ॥ हे देव*सोम ते त्वदीयों-
शुरंशुः सर्वोंवयवः आप्यायतां वर्धताम् । वीप्सायां द्विर्वचनम्,
'अनुदात्तं च' इति द्वितीयस्यानुदात्तत्वम् । इन्द्राय इन्द्रा-
र्थम् । इन्द्रो विशेष्यते—एकधनविदे, एकं प्रधानं धनं उदकं

*क—सवदेव.

प्यायतामा त्वमिन्द्राय प्यायस्वा
प्यायय सखीन्थ्सन्या मेधया स्वस्ति
ते देव सोम सुत्यामशीयेष्टा रायः

इत्येकधन-विदे । एति । तुभ्यम् । इन्द्रः । प्याय-
ताम् । एति । त्वम् । इन्द्राय । प्यायस्व । [2]एति ।
प्यायय । सखीन् । सन्या । मेधया । स्वस्ति ।
ते । देव । सोम । सुत्याम् । अशीय । [3]एष्टः ।

येषु घटेषु ते एकधनाः, तान्विन्दति लभत इत्येकधनवित् । इन्द्रो हि तान्विन्दति इन्द्रार्थत्वात् । इन्द्रोपि तुभ्यं त्वदर्थं त्वत्पानार्थमाप्यायतां पातुं समर्थो भवतु । त्वं चाप्यायमानसर्वांशुः इन्द्रार्थमाप्यायस्व पर्याप्तो भव ॥

[2]यजमानं वाचयति—आप्याययेति ॥ सखीन् समानख्यानान् ऋत्विजः सन्या धनेन मेधया च यागनिर्वर्तनसमर्थया आप्यायय सम्पन्नान् कुरु । सनिशब्दोन्तोदात्तः, तेन 'उदात्तयणः' इति ततः परस्या विभक्तेरुदात्तत्वम् । किञ्च—हे देव सोम स्वस्ति ते अविनाशेन* अविघ्नेन तव सुत्यामभिषवमशीय प्राप्नुयाम् । आशिषि लिङ्, 'छन्दस्युभयथा' इति सार्वधातुकत्वात्सीयुटि सलोपः । सुनोतेः 'संज्ञायां समजनिषद' इति क्यप्, 'उदात्तः' इति हि तत्रानुवर्तते ॥

[3]प्रस्तरे पाणिं निधाय नमस्कुर्वन्ति—एष्टा राय इति ॥ प्रस्तर उच्यते । हे एष्टः एषणशील प्रयोगानिर्वृत्ति†द्वारेण फलं

*ख—अविनाशि.  †क—च्यते एषण यागनिवृत्ति

प्रेषे भगा॑यर्त॒मृ॑तवा॒दिभ्यो॒ नमो॑ दि॒वे

रायः॑ । प्रेति॑ । इ॒षे । भगा॑य । ऋ॒तम् । ऋ॒त॒वा॒दिभ्य॒ इत्यृ॑तवा॒दि–भ्यः॒ । नमः॑ । दि॒वे । नमः॑ । पृ॒थि॒व्यै ।

---

प्रापयितुं त्वरमाण यस्मादीड्ढशास्त्वमसि तस्माद्रायो धनानि अस्माकं सन्तु त्वन्महिम्ना । यद्वा—ईड्ढशस्त्वमेव रायो धनानि; रैहेतुत्वाद्रैत्वमुपचर्यते । इषेस्तृन्, 'तीषसहलुभरुषरिषः' इतीड्भावः, षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । सम्बुद्धिगुणे 'रो रि' इति लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घत्वम् । केचिन्निष्ठायां वर्णव्यत्ययेन* इकारस्यैकारमाहुः, अनामन्त्रितत्वं च मन्यन्ते । तदा आद्युदात्तत्वं दुर्लभम्, रेफस्य संहितायां 'हशि च' इत्युत्वं प्राप्नोति । शाखान्तरे तु—आ इष्टः एष्ट इति मत्वा अवग्रहं कुर्वन्ति । तदा 'गतिरनन्तरः' इत्याद्युदात्तत्वं सिद्धम् । राय इति च षष्ठ्यन्तं केचिदाहुः । तेषां 'ऊडिदं पदाद्यप्' इति विभक्तेरुदात्तत्वं प्राप्नोति । आमन्त्रितेन तु सम्बन्धे 'परमपिच्छन्दसि' इत्यामन्त्रितानुप्रवेशात् पृथक्स्वरत्वाप्रसङ्गः । एवं प्रस्तरं स्तुत्वेदानीं स्वाभिलषितं प्रार्थयते । तत्र ससाधनां क्रियामुपसर्ग आहेति योग्यं क्रियापदमध्याह्रियते । इषे अन्नाय, भगाय ऐश्वर्याद्याय च प्रभव तत्सम्पादनसमर्थोऽस्माकं भव । 'सावेकाचः' इतीषो विभक्तिरुदात्ता ।

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥

---

*क—वर्णव्यासया.

**नमः॑ पृथि॒व्या अग्ने॑ व्रतपते॒ त्वं॑ व्र॒ता-**
**नां॑ व्र॒तप॑ति॒रसि॒ या मम॑ त॒नूरे॒षा**

**अग्ने॑ । व्र॒त॒प॒त॒ इति॑ व्रत—प॒ते॒ । त्वम् । व्र॒ताना॑म् ।**
**व्र॒तप॑ति॒रिति॑ व्र॒त—प॒तिः॒ । अ॒सि॒ । या । मम॑ ।**

यद्वा—भगं एतुं प्रभवतु । 'तुमर्थे सेसेन्' इति क्सेप्रत्ययः । किञ्च—ऋतं सत्यं ऋतवादिभ्यस्सत्यवादिभ्यः अस्मभ्यं भव, ऋतवदनफले* अस्मान्योजय । यद्वा—ऋतं यज्ञं, यज्ञवादिभ्योस्मभ्यं यज्ञो भव, शीघ्रं यज्ञं निर्वर्तयेति यावत् । किञ्च—नमो दिवे द्युरूपाय । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । नमः पृथिव्यै पृथिवीरूपाय । द्यावापृथिवीभ्यामेव वा नमस्कारः । 'द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिन्लोके प्रतितिष्ठन्ति' इति ब्राह्मणम्† । 'उदात्तयणः' इति पृथिव्या विभक्तेरुदात्तत्वम् ॥

[4]यजमानमवान्तरदीक्षामुपनयति—अग्न इति । हे अग्ने व्रतपते व्रतानां पते त्वं व्रतानां सर्वेषां सम्बन्धिनां‡ व्रतपतिरसि ; न पुनरेकस्य व्रतस्य पतित्वाद्व्रतपतिरुच्यते । समासे सङ्ख्याविशेषस्याप्रतिपत्तेः बहुत्वप्रतिपादनाय व्रतानामित्युक्तम् । नित्यसम्बन्धाविशे§-प्रतिपत्त्यर्थं वृत्तिश्च कृता । पतिः पालयिता स्वामी वा । सर्वेषां व्रतानां सर्वदा सर्वात्मना च पतिस्त्वमसि । या मम यजमान[स्य] तनूश्शरीरं सा त्वयि मया निवेशिता । एषा इत्यङ्गुल्या अग्नेस्त[नूं] दर्शयति । या तव तनूः सा मयि त्वया निवेशिता इयमित्यात्मशरीरमङ्गुल्या दर्शयति ।

*क—दनफलेन. †सं. ६-२-२.
‡शां व्रतानां. §[illegible]

सा त्वयि ॥ २० ॥ या तव तनू-
रियꣳ सा मयि सह नौ व्रतपते
व्रतिनोर्व्रतानि या ते अग्ने रुद्रिया

तनूः । एषा । सा । त्वयि ॥ २० ॥ या । तव ।
तनूः । इयम् । सा । मयि । सह । नौ । व्रतपत
इति व्रत-पते । व्रतिनोः । व्रतानि । [5]या । ते ।

---

प्रत्यक्परागूप*सन्निहितविषयत्वादिदमेतदादीनामेवमुक्तम्† । यस्मादेवं, तस्मात् हे व्रतपते अग्ने नौ आवयोर्व्रतिनोर्व्रतानि अतः परं सह भवन्ति, न परस्परव्यावृत्तानि, यन्मया कृतं तत्त्वयापि कृतं भवतीति । 'आत्मानमेव दीक्षया पाति'‡ इति ब्राह्मणम् ॥

[5]उपसत्सु व्रतयति—या त इति ॥ हे अग्ने रुद्रिया रुद्रार्हा, यो रुद्रस्तिस्रोऽसुरपुरीरदहत् तद्वीर्यानुरूपा ते तव तनूः महावीर्या । तया नः अस्मान्पाहि । रुद्रशब्दादर्हत्यर्थे छान्दसो घः । यद्वा—'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या'§ इत्युक्तम्; तत्र घोरा तनूः रुद्रिया क्रूरा 'रुद्रो वै क्रूरः'¶ इति । तदर्हत्वात्तया तन्वा नः अस्मान्पाहि भ्रातृव्यादिभ्यो रक्ष ।

---

*क—प्रत्यक् अधरागूर्ध्वम्.
†क—दिदमेव तदसावेव कर्तव्यम्. तं—दिदमेव तदावाभ्यामेव कर्तव्यम्.
‡सं ६-२-२. §सं. ५-७-३. ¶सं ६-२-३.

तनूस्तया॑ नः पाहि॒ तस्या॑स्ते॒ स्वाहा॑
या ते॑ अग्नेयाश॒या र॑जाश॒या ह॑रा-

अ॒ग्ने॒ । रु॒द्रिया॑ । त॒नूः । तया॑ । नः॒ । पा॒हि॒ । त-
स्याः॑ । ते॒ । स्वाहा॑ । [6]या । ते॒ । अ॒ग्ने॒ । अ॒या॒श॒येत्य॑या-श॒या । [7]र॒जा॒श॒येति॑ रजा-श॒या । [8]ह॒रा-

---

तस्यास्तन्वाः पतिभूताय ते तुभ्यं स्वाहा हुतमिदं पयोस्तु । चतुर्थ्यर्थे वा षष्ठी । तदीयायै तस्यै तन्वै स्वाहेति ॥

[6]उपसदाहुतीर्जुहोति—तिसृषूपसत्सु अनुक्रमेण या त इति तिसृभिरनुष्टुग्भिः । तत्र प्रथमायां 'या ते अग्नेयाशया' इति ॥ 'तनूर्वर्षिष्ठा' इत्यादि तिसृष्वपि सम्बध्यते । हे अग्ने या ते त्वदीया तनूः, अयाशया अस्यां पृथिव्यां शेत इत्ययाशया । इदमस्सप्तम्येकवचनस्य 'सुपां सुलुक्' इति यादेशः, 'हलि लोपः' इतीद्रूपस्य लोपः, त्यदाद्यत्वम्, अस्यां शेत इति 'अधिकरणे शेतेः' इत्यच्, 'शयवासवासिष्वकालात्' इत्यलुक्, कृदुत्तरपदप्रकृतिस्वरत्वम् । वर्षिष्ठा वृद्धतमा । प्रियस्थिरादिसूत्रेण वृद्धशब्दस्य वर्षादेशः । गह्वरे गहने तिष्ठतीति गह्वरेष्ठा । 'सुपि स्थः' इति कः, 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । तयेत्यध्या*ह्रियते । तया तन्वा उग्रं उद्गूर्णमधिक्षेपं वचोपावधीमप ह न्मि, तस्य प्रयोक्तारमपहन्मीति यावत् । 'अशनयापिपासेहवा उग्रं वचः'† इत्यादि ब्राह्मणम् । तन्निमित्तत्वात्तादृशवचनश्रुतेः ।

---

* ख—तयेत्याद्यध्या.

शया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो

शयेति हरा—शया । तनूः । वर्षिष्ठा । गह्वरेष्ठेति गह्वरे—स्था । उग्रम् । वचः । अपेति । अवधीम् ।

---

छान्दसो लुङ्, 'हनो वध लुङि' इति वधादेशः, 'आमो मश्' इति मशादेशः । त्वेषं दीप्तं* क्रूरं राक्षसादिसमीरितं श्रुत्वा भीतिजनकम् । 'एनश्च वैरहत्यं च त्वेषं वचः '† इत्यादिब्राह्मणम् । एनस्विभिर्वीरहादिभिश्च प्रयोज्यत्वात् । तच्च वचोपावधीम् । तस्य प्रयोक्तारं च अपहन्मि त्वत्प्रसादान्नाशयेयम् । इदमुभयं तदर्थं तस्यै तन्वै स्वाहा सुहुतमिदमस्तु ॥

[7]द्वितीयस्यां जुहोति—या ते अग्ने रजाशया तनूरित्यादि ॥ रजोन्तरिक्षं तस्मिन् शेत इति रजाशया मध्यमात्मिका । रजश्शब्दात्परस्यास्सप्तम्या डादेशः, पूर्ववदलुक् । शेषं समानम् ॥

[8]तृतीयायां जुहोति—हराशया तनूरित्यादि ॥ भौमानूसान् हरतीति हरो द्युलोकः, तस्मिन्शेते हराशया सूर्यात्मिका । डादेशादि समानम् । यद्वा—या सेत्यध्याह्रियते । अपावधीमिति च पुरुषव्यत्ययः अपावधीदिति । सा उग्रं त्वेषं वचो अपहन्त्विति । शाखान्तरे च अपावधीदिति पाठः । 'तेषामसुराणां तिस्रः पुरआसन्नयस्मय्यवमाथ रजताऽथ हरिणी '‡ इति ब्राह्मणानुसारेणान्यथा व्याख्यायते । अयसि अयस्मय्यां पुरि शेत

---

*क—दीप्तमुग्रम्. †ब्रा. १-५-९. ‡सं ६-२-३.

अपावधीं त्वेषं वचो अपावधीꣳ
स्वाहा ॥ २१ ॥
वित्तायनी मेसि तिक्तायनी मेस्य-

त्वेषम् । वचः । अपेति । अवधीम् ।
स्वाहा ॥ २१ ॥

त्वयि चत्वारिꣳशच्च ॥ ११ ॥

[1]वित्तायनीति वित्त—अयनी । मे । असि । [2]ति-
क्तायनीति तिक्त—अयनी । मे । असि । [3]अवता-

---

इत्ययाशया । डादेशादि समानम् । रजतं रजस्तन्मय्यां पुरि शेत इति रजाशया । हरितं हरस्तन्मय्यां पुरि शेत इति हराशया । गतमन्यत् ॥

इति द्वितीये एकादशोनुवाकः.

[1]शम्यया चात्वालं परिमिमीते—वित्तायनीति ॥ शम्यया परिमीयमाणा भूमिरुच्यते । वित्तं धनमग्निलक्षणम्, तस्यायनी प्रापणी त्वमसि । एतेः करणे ल्युट् । ममाग्निप्राप्तिहेतु*स्त्वमसि ॥

[2]दक्षिणतो मिमीते—तिक्तायनीति ॥ तिक्तं तेजः । तिज निशाने । अग्निलक्षणस्य तेजसो मे प्रापण्यासि ॥

[3]पश्चान्मिमीते—अवतादिति ॥ अवतात् रक्षतात् तर्पयताद्वा । मां नाथितम् । कर्तरि निष्ठा । नाथमानमग्निं याचमानं तत्प्रदानेनावतात् ॥

---

*क–प्राप्ति

वंतान्मा नाथितमवंतान्मा व्यथितं
विदेरग्निर्नभो नामाग्ने अङ्गिरो
योस्यां पृथिव्यामस्यायुषा नाम्नेहि

त् । मा । नाथितम् । [4]अवंतात् । मा । व्यथितम् ।
[5]विदेः । अग्निः । नभः । नाम । अग्ने । अङ्गिरः ।
यः । अस्याम् । पृथिव्याम् । असि । [6]आयुषा ।

---

[4]उत्तरतो मिमीते—अवतादिति ॥ अवताद्रक्षतात् मा व्यथितं भीतम्, किमत्राग्निर्लभ्यते उत न लभ्यत इति संशयेन भीतं चकितं वाग्निप्रदानेन रक्षतु ॥

[5]चात्वालस्थे बर्हिषि स्फ्येन प्रहरति—विदेरिति ॥ हे अग्ने अङ्गिरः अङ्गनादिगुणयुक्त । अङ्गेरसुनि इरुरा*गमः । यस्त्वमस्यां पृथिव्यामसि वर्तसे स त्वं विदेः वेदितुमर्हसि । कथं? नभो नामाग्निरह†मिति । यद्वा—नभोनामाग्निस्त्वमसि, एतद्वेदितुमर्हसि । वेत्तेर्लिङि विकरणव्यत्ययेन शः । एवंनामानमग्निं यागसिद्ध्यर्थमादातुं स्फ्येन बर्हिषि प्रहरामि, तस्मात्तन्नामाहमिति यत्ते वेदनं प्रयोजनवदेवेति अवश्यं त्वमेवं वेदितुमर्हसीत्यर्थः । नभना‡न्नभः । तत्र पुरीषनद्धोग्निर्नभ इत्येके । लोकत्रयनद्धस्सूक्ष्मोग्निरित्यपरे । पुरीषादाने§ पृथिवीस्थस्य तस्याग्नेरादानं भवतीति तदर्थं मया स्फ्येन बर्हिषि प्रहारः क्रियत इति ॥

[6]पुरीषमादत्ते—आयुषेति ॥ हे अग्ने पार्थिव आयुषाऽस्मभ्यं

---

*तं. दे–इरुगा. †ख–मिरसावि. ‡तं–नहना. §क–पुरीषनामाग्नेः.

यत्तेनाधृष्टं नाम यज्ञियं तेन त्वा
दधेऽग्ने अङ्गिरो यो द्वितीयस्यां
तृतीयस्यां पृथिव्यामस्यायुषा ना-
म्नेहि यत्तेनाधृष्टं नाम ॥ २२ ॥

नाम्ना । एति । इहि । [7]यत् । ते । अनाधृष्टमित्यना-धृष्टम् । नाम । यज्ञियम् । तेन । त्वा । एति । दधे । [8]अग्ने । अङ्गिरः । यः । द्वितीयस्याम् । [9]तृतीयस्याम् । पृथिव्याम् । असि । आयुषा । नाम्ना । एति । इहि । यत् । ते । अनाधृष्टमित्यना-धृष्टम् । नाम ॥ २२ ॥ यज्ञियम् । तेन । त्वा ।

देयस्यायुषस्साधनेन नाम्ना नभ इत्यनेन त्वया विदितेनोपलक्षितः एहि आगच्छ, त्वामहं ग्रहीतुमारभ इति ॥

[7—9]उत्तरवेद्यां निवपति—यत्त इति ॥ हे अग्ने यत्ते तव अनाधृष्टमनभिभूतं केनचिदपि राक्षसादिना, यज्ञियं यज्ञार्हं यज्ञ-सम्पादनसमर्थं नाम नभ इत्येतत् । तेन त्वामादधे स्थापयामि । उत्तरवेद्यामाहवनीयधारणार्थं पुरीषात्मना त्वयैवायं धारयितुं शक्यते न हि त्वदन्यस्तद्धारयितुं समर्थः । तस्मादेतन्नाम बिभ्रदु*त्तर-वेद्यामात्मनो महिमानमाहवनीयं धारयितुं सन्निहितो भूत्वा यज्ञं सम्पादयेति भावः । एवं द्वितीयं तृतीयं च करोति । विदे-

*ख-बिभ्रत उ

यज्ञियं तेन त्वा दधे सिꣳहीरसि
महिषीरस्युरु प्रथस्वोरु ते यज्ञप-

एतिं । दधे । [10]सिꣳहीः । असि । महिषीः । अ-
सि । [11]उरु । प्रथस्व । उरु । ते । यज्ञपतिरिति

---

रग्निर्नभो नामेत्यादिकं सर्वत्रानुवर्तते । अयं तु विशेषः, द्वितीय-पर्याये 'अग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामसि' इति भवति। द्वितीया पृथिवी अन्तरिक्षम् । तृतीये तु, 'अग्ने अङ्गिरो यस्तृतीयस्यां पृथिव्यामसि' इति । तृतीया पृथिवी द्युलोकः पृथुत्वात्पृथिवी । समानमन्यत् । 'विदेरग्निर्नभो नामाग्ने अङ्गिर इति त्रिर्हरति'* इति ब्राह्मणम् ॥

[10]पुरीषं सम्प्रयौति—सिंहीरिति ॥ हे उत्तरवेदे सिंहीरसि सहनात्सिंही शत्रूणामभिभवित्रीति । हिनस्तेर्वाद्यन्तविपर्ययः । सिंहीरूपं कृत्वा वा† सिंही । ब्राह्मणं च भवति—'तेभ्य उत्तरवेदिस्सिंहीरूपं कृत्वा'* इत्यादि । व्यत्ययेन 'हल्ङ्याभ्यः' इति सुलोपो न प्रवर्तते । किञ्च—महिषीरसि महती महनीया वा । 'अविमह्योष्टिषच्' । महति वा यागे सीदतीति महिषी । पृषोदरादिः, पूर्ववत्सुलोपाभावः‡ । यस्मादीदृशी त्वमसि, तस्मात्त्रिलोकाग्निभिः पुरीषरूपैस्त्वां सम्प्रयौमीति ॥

[11]प्रथयति—उर्विति ॥ व्याख्यातम्§ ॥

---

*सं–६–२–७. †ख–द्यन्तविपर्यात् सिंहीरूपत्वात्.
‡क—सुलोपः. §सं. १-१-८⁹

तिः प्रथतां ध्रुवासि देवेभ्यश्शु-
न्धस्व देवेभ्यश्शुम्भस्वेन्द्रघोषस्त्वा
वसुभिः पुरस्तात्पातु मनोजवास्त्वा

यज्ञ-पतिः । प्रथताम् । [12]ध्रुवा । असि । [13]देवेभ्यः ।
शुन्धस्व । [14]देवेभ्यः । शुम्भस्व । [15]इन्द्रघोष इतीं-
न्द्र-घोषः । त्वा । वसुभिरिति वसु-भिः । पुर-
स्तात् । पातु । [16]मनोजवा इति मनः-जवाः ।
त्वा । पितृभिरिति पितृ-भिः । दक्षिणतः । पातु ।

---

[12]स्फ्येन दृढीकरोति—ध्रुवासीति ॥ ध्रुवा निश्चलासि भवे-
त्यर्थः । लेटि लोपाभावे* रूपम् ॥

[13]अद्भिरवोक्षति—देवेभ्य इति ॥ देवार्थं शुन्धस्व शुद्धा भव ।
शुन्ध शौचकर्मणि, चुरादिराधृषीयः ॥

[14]सिकताभिरनुप्रकिरति—देवेभ्य इति ॥ देवार्थं शुम्भस्व
शोभस्व उज्ज्वला भव । शुभ शुम्भ शोभनार्थे ॥

[15]उत्तरवेदेः प्राग्भागं प्रोक्षति—इन्द्रघोष इति ॥ इन्द्रस्य घोष
इन्द्रघोषः स्तनयित्नुः, स वसुभिस्सह त्वां पुरस्तात्पूर्वस्यां दिशि
पातु रक्षतु । अनेन प्रोक्षणेन हे उत्तरवेदे त्वदीयं पूर्वभागं
पातु ॥

[16]दक्षिणभागं प्रोक्षति मनोजवा इति ॥ मनसो जव इव
जवो वेगो यस्य स मनोजवाः यमः । तस्य हि मनस इव

---

*ख—लेटि अतो लोपाभावे. तं—लेटि [illegible]

पितृभिर्दक्षिणतः पातु प्रचेतास्त्वा
रुद्रैः पश्चात्पातु विश्वकर्मा त्वादि-
त्यैरुत्तरतः पातु सिꣳहीरसि सप-

[17]प्रचेता इति प्र—चेताः । त्वा । रुद्रैः । पश्चात् ।
पातु । [18]विश्वकर्मेति विश्व—कर्मा । त्वा । आदि-
त्यैः । उत्तरत इत्युत्—तरतः । पातु । [19]सिꣳहीः ।
असि । सपत्नसाहीति सपत्न—साही । स्वाहा ।

---

जवो भवति । जवतेरसुनि जवः । स पितृभिस्सह त्वां दक्षिणतः पातु त्वदीयं दक्षिणभागं पातु ॥

[17]पश्चिमभागं प्रोक्षति—प्रचेता इति ॥ प्रकृष्टचेताः प्रकृष्टविज्ञानो वरुणः । स रुद्रैस्सह त्वां पश्चात्पातु पश्चाद्भागं पातु ॥

[18]उत्तरभागं प्रोक्षति—विश्वकर्मेति ॥ विश्वानि कर्माण्यस्मिन्निति विश्वकर्मा त्वष्टा, लोकपालाधिकाराद्वैश्रवणो वा । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । स आदित्यैस्सह त्वामुत्तरतः पातु तवोत्तरभागं पातु । 'असुरा वज्रमुद्यत्य देवानभ्यायन्त'* इत्यादि ब्राह्मणम् ॥

[19]उत्तरवेदिमक्ष्णया व्याघारयति—सिंहीरिति पञ्चभिः ॥ तत्र दक्षिणेंसे सिंहीस्त्वमसि । सपत्नसाही सपत्नानां शत्रूणामभिभवित्री । स्वाहा सुहुतं तवेदमस्तु ॥

---

*सं. ६-२-७.

त्वसाहीं स्वाहां सिꣳहीरसि सुप्र-
जावनिस्स्वाहां सिꣳहीः ॥ २३ ॥
असि रायस्पोषवनिस्स्वाहां सिꣳ
हीरस्यादित्यवनिस्स्वाहां सिꣳही-
रस्या वह देवान्देवयते यजमानाय

[20]सिꣳहीः । असि । सुप्रजावनिरिति सुप्रजा—व-
निः । स्वाहां । [21]सिꣳहीः ॥ २३ ॥ असि ।
रायस्पोषवनिरिति रायस्पोष—वनिः । स्वाहां ।
[22]सिꣳहीः । असि । आदित्यवनिरित्यादित्य—व-
निः । स्वाहां । [23]सिꣳहीः । असि । एति । वह ।
देवान् । देवयत इति देव—यते । यजमानाय ।

---

[20]उत्तरस्यां श्रोण्यां—सिंहीस्त्वमसि सुप्रजावनिः शोभनानामप-
त्यानां सम्भक्त्री त्वमसि । 'छन्दसि वनसन' इतीन् ॥

[21]दक्षिणस्यां श्रोण्यां—सिंहीस्त्वमसि रायस्पोषस्य धनपुष्टेस्स-
म्भक्त्री । छान्दसष्षष्ठ्या अलुक् । 'षष्ठ्याः पतिपुत्र' इति
सत्वम् ॥

[22]उत्तरंसे—सिंहीस्त्वमसि आदित्यवनिः अदितिपुत्राणां सम्भक्त्री ॥

[23]मध्ये—सिंहीस्त्वमसि, सा त्वमावह देवान्, यजमानाय
यजमानार्थम् । कीदृशाय ? देवयते देवान् कामयमानाय ।
देवानात्मन इच्छतीति क्यच् । 'न छन्दस्यपुत्रस्य' इतित्वाभा-

अ॒ग्नेर्भस्मा॑स्य॒ग्नेः पुरी॑षमसि ॥ २४ ॥

यु॒ञ्जते॒ मन॑ उ॒त यु॑ञ्जते॒ धियो॒ विप्रा॒

[28]अ॒ग्नेः । भस्म॑ । अ॒सि॒ । अ॒ग्नेः । पुरी॑षम् । अ॒सि॒ ॥ २४ ॥

नाम॑ सुप्रजा॒वनि॒स्स्वाहा॑ सि॒ꣳहीः पञ्च॑त्रिꣳशच्च ॥ १२ ॥

[1]यु॒ञ्जते॑ । मन॑ः । उ॒त । यु॒ञ्ज॒ते॒ । धिय॑ः । विप्रा॑ः ।

[28]सम्भारान्निवपति—अग्नेरिति ॥ अग्नेर्भस्म दीप्तिसाधनं त्वमसि । भस भर्त्सनदीप्त्योः । अग्नेः पुरीषं पूरणं प्रीणनं वा त्वमसि । तस्मादग्निं भासय पूरय प्रीणय वा । 'यदेतान्सम्भारान्सम्भराति'* इति ब्राह्मणम् ॥

इति द्वितीये द्वादशोनुवाकः.

---

[1]शालामुखीये शामित्रं जुहोति—युञ्जत इति जगत्या ॥ युञ्जते मनः विषयेभ्यः प्रत्याहृत्येष्टे विषये स्थापयन्ति । उत अपि च, धियश्च युञ्जते यागादिलक्षणानि कर्माणि कुर्वते । यद्वा—धियः प्रज्ञाः धर्मार्थकाममोक्षविषयाः युञ्जते भावयन्ति । यद्वा—धिय इतीन्द्रियाण्युच्यन्ते, तानि युञ्जते इष्टे विषये प्रवर्तयन्ति, अनिष्टेभ्यश्च निवर्तयन्ति । विप्राः मेधाविनः ।

*सं. ६-२-८.

**विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही**

**विप्रस्य । बृहतः । विपश्चितः । वीति । होत्राः । दधे । वयुनाविदिति वयुन–वित् । एकः । इत् । मही । देवस्य । सवितुः । परिष्टुतिरिति परि–स्तुतिः ।**

विप्रस्य मेधाविनः बृहतः यजमानस्य सम्बन्धिनो विपश्चितः पण्डिता ऋत्विजः । 'बृहन्महतोरुपसङ्ख्यानम्'[ख] इति विभक्तेरुदात्तत्वम् । एवमेतत्कुर्वाणा बृहतो विपश्चितो भवन्ति । एक इत् एक एव वयुनावित् वयुनानां ज्ञानोपायानां वेदिता । 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । वयुनाविदेक एव होत्राः स्तुतिलक्षणा वाचो विदधे विदधाति विविधमुत्पादयति । छान्दसो लिट् । यद्वा—होत्राः ऋत्विग्विशेषान् होमस्य कर्तॄन् मैत्रावरुणादीन् विदधाति विभज्य स्थापयति । युञ्जते* मनश्च धियश्च युञ्जानाः* । एतत्तु कर्तुं न सर्वे शक्नुवन्ति एक एव वयुनाविदेवंविधं कर्तुं शक्नोतीति कारणमाह—मही महती महनीया खलु देवस्य सवितुः परिष्टुतिः परितस्सर्वतः रूपकर्मबान्धवाध्यवसायेन कर्तुं न† शक्यते; तस्मादेक एव वयुनावित् होत्रा विधातुं शक्नोति । तस्मान्महानयं देव इति सवितुः प्रशंसा । तस्मै सवित्रे इदं स्वाहुतमस्त्विति । अन्य आह—मेधाविनो यजमानस्य सम्बन्धिनो विपश्चितो विप्रा युञ्जते । एक एव वयुनावित् होत्रा विदधाति । सा खलु सर्वा देवस्य सवि-

*क–ञ्जतां. †ख–कर्मजातिदेवासानयेन कर्मणा.

देवस्य सवितुः परिष्टुतिः । सुवा-
ग्देव दुर्यां आ वद देवश्रुतौ

[2]सुवागिति सु-वाक् । देव । दुर्यान् । एति । वद ।
देवश्रुताविति देव-श्रुतौ । देवेषु । एति । घोषेथा-

तुः महती परिष्टुतिः सर्वतः प्रस्तुतिः प्रेरणेति यावत् । तस्मा-त्तदनुज्ञाता वयमिदं कर्मारभामहे इति भावः । 'तादौ च' इति परेः प्रकृतिस्वरत्वम् ॥

[2]अक्षोत्सर्जने जपति—सुवागिति ॥ हे देव देवनशील अक्षेषु सुवाक् शोभनवाक् भूत्वा दुर्यान्गृहान्यजमानस्य सम्बन्धिन आवद आभिमुख्येन वद, कल्याणीं गृहाणां शान्तिकरीं वाचं वदे-त्यर्थः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं सुवागिति । दुर्या-निति नकारस्य पूर्ववद्रुत्वादि । 'वरुणो वा एष दुर्वागुभयतो बद्धो यदक्षः'* इत्यादि ब्राह्मणम् । अथ देवश्रुतौ देवेष्वा-घोषेथाम् इत्यस्य द्विवचनान्तत्वान्न पूर्वेण सम्बन्धः । आचार्य-वचनाच्च, सुवाग्देव दुर्यानावदेत्येवं† तत्र जपति इति । द्विवचनस-म्बन्धादेवोपरितनेनाक्षधुरोऽवाञ्जने न च सम्बध्यते । न च प्रकर-णादुत्कृष्य विकृतिमासाद्य यदयं करिष्यति तत्प्रतीयते । तस्मा-दत्रैव विनियोगः कल्पयितव्यः । स च द्विवचनात् पुल्लिङ्गा-च्चाक्षद्वयोत्सर्जनजपे युक्त इव लक्ष्यते । अयमर्थः—देवाश्शृण्वन्ति यौ तौ देवश्रुतौ । कर्मणि क्विप्, निष्ठायां वा, 'परादिश्छ-न्दसि बहुलम्' इति उत्तरपदाद्युदात्तत्वम् । हे अक्षौ ईदृशौ

*सं. ६-२-९. †ति—त्येव.

देवेष्वा घोषेथामा नो वीरो जा-
यतां कर्मण्यो यꣳ सर्वेनु जीवाम
यो बहूनामसद्वशी । इदं विष्णुर्वि

म् । [3]एति । नः । वीरः । जायताम् । कर्मण्यः ।
यम् । सर्वे । अनुजीवामेत्यनु—जीवाम । यः ।
बहूनाम् । असत् । वशी । [4]इदम् । विष्णुः ।

युवां आत्मीयोत्सर्जनेन देवेष्वाघोषेथाम्, अयं यजमानो युष्मान्यजत इत्येवं महता शब्देन घोषणं कुरुतम् । घुषि कान्तिकरणे उदात्त अनुदात्तेत् भौवादिकः ॥

[3]अक्षधुरमवाञ्जयति—आ न इति ॥ नः अस्माकं वीरः पुत्रादिकः कर्मण्यः कर्मयोग्यः आजायताम् । 'कर्मणि साधुः' इति यत् । पुनरपि विशेष्यते—यं सर्वेपि च वयमनुजीवामः । लोटि सलोपः । यश्च बहूनां वशी नियन्तृत्वादिशक्तिमान् असत् स्यात् । अस्तेर्लेटि 'इतश्च लोपः', 'लेटोडाटौ' इत्यडागमः । इयं च विराड्गायत्री, प्रथमे पादे द्व्यक्षराधिक्यात् । पुरउष्णिक्प्र*थमस्य पादस्य द्वादशाक्षरत्वात्, द्वाभ्यामूनत्वाच्च विराडुष्णिक् । तत्र 'यं सर्वेनुजीवामः' इति द्वितीयः पादः ॥

[4]दक्षिणस्यां चक्रवर्तिन्यां जुहोति—इदमिति गायत्र्या ॥ इदं विश्वं विष्णुः व्यापी भगवान्विचक्रमे विभज्य क्रमतेस्म । 'वृत्तिसर्गतायनेषु क्रमः' इति वृत्तावात्मनेपदम् । 'वेः पादविहरणे' इति

*क्र—ष्णिग्वा प्र.

च॒क्र॒मे त्रे॒धा नि द॑धे प॒दम् । सम॑ू-

ढ॒मि॒त्य॑स्य पा॒ꣳसु॒रे ॥

वीति॑ । च॒क्र॒मे॒ । त्रे॒धा । नीति॑ । द॒धे॒ । प॒दम् । सम॑ूढ॒मिति॒ सं॒—ऊ॒ढ॒म् । अ॒स्य॒ ॥ २५ ॥ पा॒ꣳसु॒-

वा । कतिधा विचक्रम इत्यत आह—त्रेधा त्रिधा पदं पादं निदधे स्थापयामास पृथिव्यामन्तरिक्षे दिवि चेत्याधारभेदेन पदस्य त्रैविध्यम् । त्रीणि पदानीति यावत्, यथा 'त्रीणि पदा वि चक्रमे'* इति । 'एधाच्च' इत्येधाप्रत्ययः । यस्मादेवं तस्मादस्य विष्णोः पांसुरे पांसुमति पादे । रः मत्वर्थीयः । यद्वा—सिध्मादिलक्षणो लः, रलयोरेकत्वं स्मर्यते । पांसवो रजांसि लोका उच्यन्ते । तैः रजःकरण[ कण ? ]कल्पैः तद्वति विष्णोः पदकमले समूढं सम्यगूढं तेनैव समवस्थापितम् । किमिदं विश्वं यद्विचक्रमे । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अस्येति 'इदमोन्वादेशेऽशनुदात्तः' इत्यशादेशोनुदात्तः । य इममर्थमकरोत्स विष्णुरनेन होमेनेमं यज्ञं समापयत्विति भावः । अपरा योजना—इदं विष्णुरेव स्वयं विचक्रमे विक्रमते यद्धाविर्धानं विक्रमते गच्छति । 'छन्दसि लुङ्लङ्लिटः' इति लिट् । विष्णोरेवेदं क्रमणं यद्धविर्धानस्येति यावत् विष्णुर्विशेष्यते—त्रेधा निदधे पदं तस्मादस्य हविर्धानस्य पांसुरे पांसुमति च मार्गे समूढं सम्यगूढं प्रापितमिदमाज्यमस्त्विति । अन्ये पुनराहुः—इदं विश्वं विष्णुर्व्यापी आदित्यात्मा† विचक्रमे विक्रमते विभज्य प्राप्नोति त्रेधा पृथिव्यामन्तरिक्षे दिवि च पदं निदधाति अग्निविद्युत्सूर्यात्मना त्रिषु स्थानेषु पादन्यासं करोति । अस्य विष्णोः पांसुरे त्वन्तरिक्षे

*आ, २-४०६. †क—आदित्यात्मना.

ढमस्य ॥ २५ ॥ प्राꣳसुर इरावती
धेनुमती हि भूतꣳ सूयवसिनी मनवे

रे । [5]इरावती इतीरा–वती । धेनुमती इति धेनु–मती । हि । भूतम् । सूयवसिनी इति सु–यवसि-

स[य?]त्पदं विद्युद्रूपं तदेव समूढं सम्मूढं कारणानित्यत्वात्सर्वदा-न दृश्यते । (मनो) यथेतरे ज्योतिषी सम्यग्गृह्येते दृष्ट्वा सोयमादित्य इदं यज्ञमनेन होमेन समापयत्विति ॥

[5]उत्तरस्यां वर्तन्यां जुहोति—इरावतीति त्रिष्टुभा ॥ द्यावापृथि-व्यात्मना स्तूयते ; हे हविर्धानात्मिके द्यावापृथिव्यौ इरावती इरावत्यौ अन्नवत्यौ भूतं भवतं यज्ञसाधनद्वारेण । लोटि 'बहुलं छन्दसि' इति शपो लुक्, 'हि च' इति निघातप्रतिषेधः । धेनुमती धेनुमत्यौ च भवतम् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । हिशब्दश्चार्थे, इरावती धेनुमती च भवतमिति । 'वा छन्दसि' इति द्वयोरपि पूर्वसवर्णदीर्घत्वम् । हविर्धानविशेषणत्वे 'नपुंसकाच्च' इति शीभावः । सूयवसिनी शोभनैर्यवसैरभ्यवहार्यै-स्तद्वत्यौ, सूयवसिन्यौ च भवतम् । सोस्सांहितिको दीर्घः । यशस्ये यशसो निमित्ते च भवतम् । 'गोद्व्यचः' इति यत्प्रत्ययः । मनवे मन्त्रवते मननवते यजमानाय इत्थं भवत-मिति । कस्मादेवमुच्यत इति चेत्, श्रूयतां युवयोर्महाभाग्यम्—एते युवां रोदसी रोदस्संज्ञां भजमाने विष्णुरेव प्रजापत्यात्मा स्वयं व्यस्कभ्नात् विभज्य स्थापितवान् अधः उपरि च; यथा

यज्ञस्यै । व्यस्कभ्नाद्रोदसी विष्णुरेते
दाधार पृथिवीमभितो मयूखैः ।

नी । मनवे । यज्ञस्यै इति । वीति । अस्कभ्नात् ।
रोदसी इति । विष्णुः । एते इति । दाधार ।

'यदप्स्ववापद्यत । सा पृथिव्यभवत्'* इत्यादि । तदानीं युवां रोदस्संज्ञे चाभूतमिति भावः । किञ्च—विस्तीर्णा वा पृथिवीमन्तरिक्षं च । पृथिवीशब्देन प्रथि[पृथु]त्वात्त्रयो लोकाः उच्यन्ते ; यथा—'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्'† इति । इमां च विष्णुर्दाधार अविचलितां स्थापयामास । अभितः अधस्तादुपरिष्टाच्च मयूखैरंशुभिः‡ । 'पर्यभिभ्यां च' इति तसिल् । धारयतेश्छान्दसे लिटि व्यत्ययेनाम्प्रत्ययो न क्रियते । यद्वा—'बहुलमन्यत्रापि संज्ञाच्छन्दसोः' इति प्रत्ययोत्पत्तेः प्रागेव णेर्लोपः, 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । एवं महाभागधेयाभ्यां युवाभ्यां किन्नाम कर्तुं न शक्यते? तस्माद्यथोक्तं भवतमिति । आदित्यपक्षे—व्यस्कभ्नात् रोदसी विष्णुरादित्य एते युवां विविधं स्थापयति । तत एते एवं स्थापिते दाधार धारयति पृथिवीमभितः पृथिव्यामन्तरिक्षस्याधस्तादुपरिष्टाच्च । 'अभितः परितः' इति द्वितीया । मयूखैः रश्मिभिरधोमुखैः पृथिवीं, ऊर्ध्वमुखैश्च दिवं, स्वयं मध्ये अन्तरिक्षे वर्तमानः इति । तस्मादनयाहुत्या युवामन्नादिमत्यौ भवतम् । युवां युवयोरन्तरालं च विष्णुरपि दृढीकरोत्विति ॥

*ब्रा. २-२-९. †सं. १-२-१२$^{8-9}$ ‡क—खैदशंकुभिः.

प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं
यज्ञं नयतं मा जीह्वरतमत्र रमेथां
वर्ष्मन्पृथिव्या दिवो वा विष्णवुत

पृथिवीम् । अभितः । मयूखैः । [6]प्राची इति ।
प्रेति । इतम् । अध्वरम् । कल्पयन्ती इति ।
ऊर्ध्वम् । यज्ञम् । नयतम् । मा । जीह्वरतम् ।
[7]अत्र । रमेथाम् । वर्ष्मन्न् । पृथिव्याः । [8]दिवः ।

---

[6]हविर्धाने प्रवर्तयन्ति—प्राची इति द्विपदया त्रिष्टुभा जगत्या वा ॥ हे हविर्धाने प्राची प्रागंचितगमनवती प्रेतं प्रकर्षेणेतं गच्छतम् । अध्वरं बाधकरहितं यज्ञं कल्पयन्ती अभिमतसम्पादनसमर्थं कुर्वाणे । 'शप्श्यनोर्नित्यम्' इति नुम् । किञ्च—ऊर्ध्वं उपरि देवान्प्रति यज्ञं नयतं प्रापयतम् । किञ्च—माजीह्वरतं मा कुटिलं कार्ष्टम्, मा अदेवगामिनं कुरुतम् । ह्वृ कौटिल्ये, हेतुमण्ण्यन्ताल्लुङि चङादि ॥

[7]अध्वर्यू हविर्धाने स्थापयतः—अत्रेति विराजैकपदया ॥ अत्रैतस्मिन्वर्ष्मन् पृथिव्यास्सम्बन्धिन्युच्छ्रिते देशे रमेथाम् अत्रैव स्थातुं रुचिं भजतम् । 'सुपां सुलुक्' इति वर्ष्मणस्सप्तम्या लुक् । 'नङिसम्बुद्ध्योः' इति नलोपाभावः । 'उदात्तयणः' इति पृथिव्या विभक्तेरुदात्तत्वम् ॥

[8]अध्वर्यू हविर्धानयोर्मेथ्यौ निघ्नतः—दिव इति त्रिष्टुभा ॥ हे विष्णो व्यापकात्मन् दिवो वा देवलोकाद्वा उत वा अपि वा

वा पृथिव्या महो वा विष्णवुत
वान्तरिक्षाद्धस्तौ पृणस्व बहुभि-
र्वसव्यैरा प्र यच्छ ॥ २६ ॥ दक्षि-

वा । विष्णो । उत । वा । पृथिव्याः । महः । वा । विष्णो । उत । वा । अन्तरिक्षात् । हस्तौ । पृणस्व । बहुभिरिति बहु-भिः । वसव्यैः । आ ।

पृथिव्याः महो वा महतो वा इतो दिवः पृथिव्याश्च महतोन्यस्माद्वा कुतश्चिन्महर्लोकादेः । महेः क्विबन्तात् पञ्चम्येकवचने 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । हे विष्णो । पुनरामन्त्रणमादरार्थम् । अथवा अन्तरिक्षात् आनीतैरित्यत्रगम्यते । बहुभिर्वसव्यैः बहूनां धनानां समूहैः । 'वसोस्समूहे च' इति यत् । हस्तौ मदीयौ पृणस्व पूरय, महाधनं मां कुर्वित्यर्थः । हस्तपूरणत्वेन महाधनत्वं लक्ष्यते । लोके हि महाधनः पूर्णहस्त इत्युच्यते, धनहीनो रिक्तहस्त इति । तस्माद्बहुभिर्धनराशिभिः वर्धमानं मां कुर्विति प्रतिपादितं भवति । पुनरपि देवस्यौदार्यातिशयप्रकटनार्थमाह—आ दक्षिणाद्धस्तात्प्रसारितात् उत अपि च आ च सव्याद्धस्तात् वसुराशिं प्रयच्छ, प्रसारितयोर्दक्षिणसव्ययोर्हस्तयोः अन्तरालं यावता धनपुञ्जेन पूर्यते तावद्देहीत्यर्थः । अथ वा बहुभिर्वसव्यैः द्युलोकादिभ्य आनीतैस्त्वदीयौ हस्तौ पूरय, प्रभूतं धनराशिं हस्ताभ्यां गृहाणेत्यर्थः । ततस्तं प्रभूतं धनराशिं दक्षिणाद्धस्तादाप्रयच्छ, सव्याच्चाप्रयच्छ । तस्मादाभिमुख्येन धनराशिं निस्सारय, हस्तविशेषो न* निरूपणीयः । अधि-

*ग-हस्तविशेषानन्नु.

णादोत सव्यात् । विष्णोर्नुकं
वीर्याणि प्र वोचं यः पार्थिवानि
विममे रजाꣳसि यो अस्कभायदु-

प्रेति । यच्छ ॥ २६ ॥ दक्षिणात् । एति । उत । सव्यात् । [१]विष्णोः । नुकम् । वीर्याणि । प्रेति । वोचम् । यः । पार्थिवानि । विमम इति वि-ममे । रजाꣳसि । यः । अस्कभायत् । उत्तरमित्युत्-

[आ]कारेणाभिमुख्यं योस्याध्वनो ग्रामादागछतीति यथा । अत एव द्वाभ्यामपि पञ्चम्यन्ताभ्यामावृत्तस्सम्बध्यते । प्रशब्दस्तु विपर्यासान्नावर्तते । 'दक्षिणस्यादिगाख्यायाम्' इति दक्षिणशब्द आद्युदात्तः ॥

[१]अध्वर्यू मेथ्यौ बध्नीतः—विष्णोर्नुकमिति त्रिष्टुभा ॥ नुकमिति क्षिप्रनाम । विष्णोर्वीर्याणि वीरकर्माणि प्रवोचं प्रकर्षेण ब्रवीमि । छान्दसो लुङ् । 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । विष्णुर्विशेष्यते—यः पार्थिवानि पृथिव्यन्तरिक्षद्युलोकभवानि । पृथिवीशब्देन त्रयो लोका उच्यन्ते, यथा 'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्'* इति । 'पृथिव्या ञाञौ' इत्यञ्-प्रत्ययः । यः पार्थिवानि रजांसि ज्योतींषि अग्निविद्युत्सूर्यात्मकानि विममे विनिर्मितवान् । यद्वा—पार्थिवानि पृथुषु भवानि रजांसि वसूनि विममे । किञ्च—य उत्तरं सधस्थं सहस्थानं

*सं. १-२-१२[४]—१

त॑र॑ꣳ स॒धस्थं॒ विच॑क्रमा॒णस्त्रे॒धोरु॑गा॒-
यो विष्णो॑ र॒राट॑मसि॒ विष्णो॑ः

त॒र॒म् । स॒धस्थ॒मिति॑ स॒ध-स्थ॒म् । वि॒च॒क्र॒मा॒ण इति॑ वि-च॒क्र॒मा॒णः । त्रे॒धा । उ॒रु॒गा॒य इत्यु॑रु-गा॒यः । [10]विष्णो॑ः । र॒राट॑म् । अ॒सि॒ । [11]विष्णो॑ः ।

सर्वेषामन्तरिक्षम् । 'सुपि स्थः' इति कः । 'सधमादस्थयोः' इति सधादेशः । तदस्कभायत् अस्तम्भयत् अधारयत् । अस्कभ्नादिति वक्तव्ये 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' इति श्नाप्रत्ययः । 'छन्दसि शायजपि' इति व्यत्ययेन हेरभावेपि श्नश्शायजादेशः । किं कुर्वन्नित्याह—विचक्रमाणस्त्रेधा त्रिषु लोकेषु विभज्य क्रममाणः पदत्रयं कुर्वन् । लिटः कानजादेशः । उरुगायः उरुभिर्महात्मभिर्गायत इति उरुगायः । कै गै शब्दे, घञि 'आतो युक्चिण्कृतोः' इति युक्, थाथादिना उत्तरपदान्तोदात्तत्वम् । यद्वा—उरुभिर्गन्तव्यः । गाङ् गतौ । य इत्थमित्थमकरोत्तस्य विष्णोर्वीर्याणि प्रवोचम् स मेधीदार्ढ्यं करोत्विति ॥

[10]रराटीमासञ्जयति—विष्णो रराटमसीति ॥ हे रराटि विष्णोर्यज्ञात्मनो ललाटमिव प्रधानमसि । कपिलकादित्वाल्लत्वं विकल्प्यते ॥

[11]मध्यमं छदिरधिनिदधाति—विष्णोरिति ॥ विष्णोः पृष्ठं पृष्ठसदृशमसि ॥

पृष्ठमसि विष्णोश्श्नप्त्रे स्थो वि-
ष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वै-
ष्णवमसि विष्णवे त्वा ॥ २७ ॥

पृष्ठम् । असि । [12]विष्णोः । श्नप्त्रे इति । स्थः । [13]विष्णोः । स्यूः । असि । [14]विष्णोः । ध्रुवम् । असि । [15]वैष्णवम् । असि । विष्णवे । त्वा ॥ २७॥

अस्य यच्छैकान्न चत्वारिꣳशच्च ॥ १३ ॥

---

[12]पार्श्वयोच्छदिषी निदधाति—विष्णोः श्नप्त्रे स्थ इति ॥ श्नप्त्रे शोधके स्थः । सकारस्य शकारापत्तिः । स्नपतिश्छान्दसश्शुद्धिकर्मा, औणादिकष्ट्रन्प्रत्ययः । स्नातेर्वा णिचि पुगादिः ॥

[13]दक्षिणबाहौ कुशमुपसङ्गृह्य स्यन्द्यां प्रवर्तयति—विष्णोस्स्यूरिति ॥ विष्णोः स्यूः सेवनी त्वमसि यज्ञस्य । षिवु तन्तुसन्ताने, 'क्विप्च' इति क्विप् 'छ्वोश्शूडनुनासिके च' इत्यूठ् ॥

[14]द्वारग्रन्थिं करोति—विष्णोर्ध्रुवमसीति ॥ विष्णुना ध्रुवमचलितं करणीयमसि ॥

[15]हविर्धानमण्डपमभिमृशति—वैष्णवमिति ॥ वैष्णवं विष्णुदेवत्यं त्वमसि । अतो विष्णवे त्वामभिमृशामि । 'वैष्णवं हि देवतया हविर्धानम्'* इति ब्राह्मणम् ॥

इति द्वितीये प्रपाठके त्रयोदशोनुवाकः.

---

*सं. ६-२-९.

कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि

[1]कृणुष्व । पाजः । प्रसितिमिति प्र—सितिम् । न । पृथ्वीम् । याहि । राजा । इव । अमवानित्यम—

[1]' अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यं रक्षांसि सचेरन् '* इत्यस्या इष्टेः पञ्चदश सामिधेन्यः । ततः परे याज्यानुवाक्ये । उपहोमार्था ततः परा याज्याविकल्पो वा । सर्वा अग्निदेवत्याः, 'तपूंष्यग्ने' इत्यादिदर्शनात् । वैश्वदेवं काण्डम् । त्रैष्टुभस्सर्वोऽनुवाकः । तत्र प्रथमा—कृणुष्व पाज इति ॥ हे अग्ने कृणुष्व कुरुष्व । कृवि हिंसाकरणयोः व्यत्ययेनात्मनेपदम्, 'धिन्विकृण्व्योरच' इत्युप्रत्ययः, अकारोन्तादेशः । करोतेर्विकरणव्यत्ययेन वा श्नुः । सतिशिष्टो विकरणस्वरो लसार्वधातुकस्वरेण बाध्यते । पाजः बलम् । 'पातेर्जुक' इत्यसुन् । बलेन हि पाल्यते जनः । प्रसितिं न प्रसितिमिव । उपरिष्टादुपचारत्वान्नकार उपमार्थीयः । प्रसितिः प्रसयनात् । प्रकर्षेण सीयते बध्यत इति प्रसितिः बहुसूत्रनिर्मिता मृगग्राहिणी पाश्यानाम, मत्स्यग्रहणं जालं नाम, पक्षिग्रहणं च विसरो नाम प्रसितिरुच्यते । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् । पृथ्वीं विस्तीर्णाम् । यथा लुब्धको मृगग्रहणार्थं पाश्यां करोति वनगहनेषु स्थापयति, यथा वा मत्स्यग्रहणार्थं जालं करोति जले प्रसारयति, यथा पक्षिग्राही तद्ग्रहणार्थं विसरं करोति नदीपुलिनादौ विसारयति, तथा त्वमपि महद्बलं रक्षांसि हन्तुं कृणुष्व अग्रतो विस्तारयेत्यर्थः । अथ तथा कुर्वन्याहि राजेव । केचिदाहुः—

* सं २-२-२

राजे॒वाम॑वाँ॒ इभे॑न । तू॒ष्णीमनु॑

वा॒न् । इभे॑न । तू॒ष्णीम् । अन्विति॑ । प्रसि॑ति॒मि-

आङ्पूर्वो यातिर्द्रष्टव्यः, यागसाधनार्थमागमनस्याभिप्रेतत्वात्, यागोत्तरकालं हि रक्षोहननार्थं गन्तव्यमिति । अत्र ब्रूमः—याहीत्येव समीचीनम् । ननु यागोत्तरकालं गन्तव्यं तेन रक्षोहननार्थम् । मैवं वोचः, न हि देवो विश्वात्मा कुतश्चिदायाति । न क्वचिद्याति । स्तुतिः खल्वियं क्रियते स्वाभिलषितसम्पादनानुरूपा 'याहि, आयाहि, उत्तिष्ठ, प्रत्यातनुष्व, ऊर्ध्वो भव' इत्यादिस्वरूपा । एतैश्च स्तुतिपदैस्तुष्टा देवता पुरुषमभिलषितेन फलेन योजयति । तस्माद्रक्षोहननार्थं त्वरितं यातव्यमायातव्यं वा, यागो निर्वर्तित एव मन्तव्य इत्येवं रूपा स्तुतिर्भवत्येवेति किमश्रुतपदाध्याहारेणेति । किञ्च—यागमागच्छतो देवस्य किं बलादिपरिग्रहणेन । हन्तव्यसकाशं गच्छतो हि बलादिना कार्यम् । तस्माद्यथोक्तं बलमादाय हन्तव्यसकाशं गच्छ राजेव, राजा यथा महतीं सेनां कर्षन् शत्रुदेशं गच्छति । राजा विशेष्यते—अमवानमात्यवान् । अमा वर्तन्त इत्यमाः । अप्रत्ययश्छान्दसः । 'तद्धिताः' इति बहुवचननिर्देशाद्वा । यद्वा—शत्रूणां मनआदिभञ्जनान्यायुधानि अमशब्देनोच्यन्ते । अमवानिति वृद्ध्यभावश्छान्दसः, 'न कम्यमिचमाम्' इति वचनात् । पचाद्यचि वा वृषादिर्द्रष्टव्यः । अमनशब्दस्यैव वान्त्याक्षरलोपः । यथाहुः—'द्वौ चापरौ वर्णविकारनाशौ' इति । इभेन । अत्र नैरुक्ता बहुधा वदन्ति—"इरयान्नेनेडोभयेन भयनिवृत्त्यर्थं प्राप्त इभः इतमपगतं भयमस्येति वा इभः वीतभयः हस्ती वा"* इति ।

*नि. ६-३-३.

प्रसितिं द्रूणानोस्तासि विध्य रक्ष-

ति प्र-सितिम् । द्रूणानः । अस्ता । असि ।

एतदुक्तं भवति ;—यथा राजा अमात्ययुक्तश्शत्रूणां भञ्जनैरायुधादिभिस्तद्वान् इभेन हस्तिना शत्रुवधादिकं साधयितुं युक्तो गच्छति, तथा त्वं महद्बलमादाय शत्रुबलनाशनसमर्थेन रोगादिना तद्वान् इभेन इरापुष्टेन वीतभयेन तद्वान् गजेन वा सह रक्षांसि हन्तुं याहीति । अमवानिति संहितायां नकारस्य यत्वानुनासिकौ पूर्ववत् । तृष्वीं क्षिप्रनामैतत् । प्रकृष्टा सितिस्सेना प्रसितिः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अनुद्रूणानः अनुद्रवन्ननुधावन् । एतदुक्तं भवति—मन्त्रिभिर्बहुलं समस्तं बल*मग्रतः प्रसारयेतीरितां क्षिप्रगामिनीं प्रकृष्टां सेनामग्रतः प्रसारितां द्रवन्तीमनुद्रवन् राजेव याहीति । यद्वा—तृष्वीं क्षिप्रमागच्छन्तीं प्रसितिं परसेनां अनुद्रूणानः अनुक्रमेण हिंसन् याहीति । द्रूञ् हिंसायां क्रैयादिकः, पूर्वस्मिन्पक्षे द्रवतेस्ताच्छीलिकश्चानश्, व्यत्ययेन श्ना धातोश्च दीर्घत्वम् । अथैवं यात्वा रक्षसः राक्षसान् विध्य ताडय । तपिष्ठैः तप्तृतमैः तप्तृशब्दादिष्ठनि 'तुरिष्ठेमेयस्सु' इति तृशब्दस्य लोपः । कस्मादित्थमुच्यत इति चेत्, अस्तासि साधु निरसितासि शत्रूणाम् । यद्वा—शत्रुसम्बन्धिनाममोघानां शस्त्राणामस्ता निरसिता निवारयिता त्वमसि । तस्मात्तपिष्ठैस्त्वदीयैरायुधैः तान्विध्येति । अस्यतेस्साधुकारिणि तृन् । रधादित्वादिड्विकल्प्यते । विध्येति तिङः परत्वान्न निहन्यते । रक्षश्शब्दोयमसुनन्तः । रक्षाहेतुत्वादपादानेऽसुन् । क्षरेर्वा हिंसार्थात्कर्तर्यसुन्या-

*क-वति-मत्तं बल.

सस्तपिष्ठैः । तव भ्रमास आशुया
पतन्त्यनु स्पृश धृषता शोशुचानः ।

विध्य । रक्षसः । तपिष्ठैः । [2]तव । भ्रमासः । आशुया । पतन्ति । अन्विति । स्पृश । धृषता । शोशुचानः ।

द्यन्तविपर्ययः; यथोक्तं 'वर्णागमो वर्णविपर्ययश्च' इति । अयं चार्धर्चादित्वादुभयलिङ्गः । तत्र नपुंसकत्वे 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तत्वम् । यथा—'रक्षसामपहत्यै'* 'रक्षांसि जिघांसन्ति'* इति । पुल्लिङ्गे अस्य त्वन्तोदात्तत्वं भवति; यथा—'रक्षसः पाह्यस्मान्' इत्यादौ । एवमस्यापि पुल्लिङ्गत्वादन्तोदात्तत्वम् । 'नब्विषयस्य' इति नियमेन नित्स्वरो बाध्यते, यथा—'दक्षैरिनन्विधीयत' इति दक्षिणशब्देनान्तोदात्तेन भवितव्यम् । यथा—'दक्षिणा दिक् । इन्द्रो देवता'† इत्यादौ 'दक्षिणस्या दिगाख्यायाम्' इति नियमाद्दिगाख्याया अन्यत्राद्युदात्तत्वम् । यथा 'दक्षिणां प्रतिग्रहीष्यन्'‡ 'आ प्र यच्छ दक्षिणात्'§ इत्यादिषु । एवमत्रापि द्रष्टव्यम् ॥

[2]अथ द्वितीया—तवेति ॥ हे अग्ने तव भ्रमासः भ्रमणशीलाः विष्फुलिङ्गाः । पचाद्यच् 'आज्जसेरसुक्' । आशुया आशवः । 'सुपां सुलुक्' इत्यादिना जसो याजादेशः । पतन्ति निष्पतन्ति । यद्वा—आशु निष्पतन्ति, क्रियाविशेषणत्वान्नपुंसकत्वम् । द्वितीयैकवचनस्य लुगपवादो याजादेशः । अनुस्पृश ये निष्पतन्ति तैर्भ्रमैः रक्षश्शरीराण्यनुक्रमेण स्पृश दहेति यावत् ।

*सं. ६-६-३. †ब्रा. ३-११-५. ‡ब्रा. २-३-२. §सं. १-२-१३⁴

तपूंष्यग्ने जुह्वा पतङ्गानसंन्दितो

तपूंषि । अग्ने । जुह्वा । पतङ्गान् । असंन्दित इत्यसं–दितः । वीति । सृज । विष्वक् ।

धृषता अभिभवित्रा । धृष प्रसहने चुरादिराधृषीयः, व्यत्ययेन शः, 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । भावप्रधानोयं, धर्षकत्वेनेत्यर्थः । शोशुचानः भृशं दीप्यमानः । यङ्लुगन्ताद्व्यत्ययेनात्मनेपदम्, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । इदानीं दहनोपाय उच्यते—तपूंषि तापानौष्ण्यलक्षणान् तपनशीलान् । तपेरुसि प्रत्ययः । पतङ्गान् पतनशीलान् । पतेरङ्गच्प्रत्ययः । उल्काः उज्ज्वलाः महाज्वालाः । पृषोदरादिः । एवमेतत्त्रितयं विष्वग्विसृज इतश्चेतश्च निस्सारय । विषु नाना अञ्चतीति ऋत्विगादिना क्विन्प्रत्ययः । 'न्यधी च' इति चकारस्यानुक्तसमुच्चयार्थत्वात् पूर्वपदप्रकृतिस्वरत्वम् । व्यत्ययेन वाव्ययपूर्वपदप्रकृतिस्वरत्वम् । जुह्वा असन्दितः अयन्त्रितः; अग्निर्हि जुहूं दृष्ट्वा यन्त्रित इव भवति न क्वचिद्याति, न चान्यत्करोति, तामेवाज्यवतीं व्याघ्रियमाणां पश्यन्तया बद्ध इव भवति, तस्मात्तथा माभूरिति प्रार्थयते । जुह्वा विभक्तेः 'उदात्तयणो हल्पूर्वात्' इत्युदात्तस्य 'नोङ्धात्वोः' इति प्रतिषेधे 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वं प्रवर्तते । सम्पूर्वाद्द्यतेः निष्ठायां 'द्यतिस्यतिमास्थामित्तिकिति' इतीत्वम्, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अन्य आह—असन्दितः केनचिदप्यखण्डितप्रसरस्सन् इत्थं कुरु । तत्र कारणमाह—जुह्वा जुहूस्थेनाज्येनेत्यर्थः ॥

वि सृज विष्वगुल्काः । प्रति स्पशो
वि सृज तूर्णितमो भवा पायु-
र्विशो अस्या अदब्धः । यो नो

उल्काः । [3]प्रतीति । स्पशः । वीति । सृज ।
तूर्णितम इति तूर्णि—तमः । भव । पायुः । विशः ।

अथ तृतीया—प्रतीति ॥ अग्न इति चतुर्थपादादिः, अत एव न निहन्यते । हे अग्ने नः अस्माकं यो दूरे स्थितः अघशंसः यो वा अन्ति अन्तिके । 'कादिलोपो बहुळम्' इति कलोपः । अघं पापात्मकं शंसनमभिलाषः कीर्तनं वा यस्य सोघशंसः, वधादिकारी, दुरुक्तवादी वोच्यते । तथा प्रतिस्पशः पाशान् विसृज विस्तारय पाशैस्तं वधानेत्यर्थः । स्पश ग्रहणशोषणयोः, करणे सम्पदादिलक्षणः क्विप् । यद्वा—स्पश बाधने, बाधकान्यायुधादीनि तं प्रति विसृज । तूर्णितमः त्वरिततमस्सन् । त्वरतेः क्तिनि निष्ठावद्भावेन निष्ठान्तत्वे 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इत्यूठ् । किञ्च—भव पायुः पालयिता अस्या विशः प्रजायाः । कस्याः? त्वामनुगतायाः अस्मदादिकायाः न पुनः प्रकृतायाः । अत एवान्वादेशाभावात् 'ऊडिदम्' इति विभक्तेरुदात्तत्वं प्रवर्तते । 'सावेकाचः' इति विशो विभक्तेरुदात्तत्वम् । 'द्व्यचोतस्तिङः' इति सांहितायामाख्यातस्य दीर्घत्वम् । 'कृवापाजिमि' इत्युणप्रत्ययः । अदब्धः अनुपहिंसितः केनापि । किञ्च—माकिः मा कश्चिदपि ते त्वामादधर्षीत् आधर्षयतु, तव कश्चिदपि परिभवं माकार्षीदित्यर्थः । धृष प्रसहने

दूरे अघशꣳसः ॥ २८ ॥ यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् । उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राꣳ ओषतात्तिग्महेते । यो

अस्याः । अदेवः । यः । नः । दूरे । अघशꣳस इत्यघ-शꣳसः ॥ २८ ॥ यः । अन्तीति । अग्ने । माकिः । ते । व्यथिः । एति । दधर्षीत् । उदिति । अग्ने । तिष्ठ । प्रतीति । एति । तनुष्व । नीति । अमित्रान् । ओषतात् । तिग्महेत इति तिग्म-

चुरादिराधृषीयः, द्विविकरणता, शप*श्लुः, ततः परं सिच्, 'नेटि' इति वृद्धिप्रतिषेधः । सिच्येव वा व्यत्ययेन द्विर्वचनम् । व्यथिः व्यथयिता । व्यथेरन्तर्भावितण्यर्थात् 'इन् सर्वधातुभ्यः' इतीन् । ण्यन्तादेव वा 'अच इः' इतीप्रत्यये 'बहुळमन्यत्रापि संज्ञाच्छन्दसोः' इति णिलोपः । यथा—'वर्धन्तु त्वा सुष्टुतयः'[†] इति वृषादिर्द्रष्टव्यः । ते इति 'क्रियाग्रहणं कर्तव्यम्' इति सम्प्रदानत्वाच्चतुर्थी । 'चतुर्थ्यर्थे बहुळं छन्दसि' इति षष्ठी चतुर्थ्यर्थे वा । कर्मणि षष्ठी वा, तेव्यथिरिति सम्बन्धात् । 'युष्मत्तत्ततक्षुष्वन्तः पादम्' इति ते इत्यस्मिन् परतः पूर्वस्य सकारस्य षत्वम् ॥

अथ चतुर्थी—उदग्न इति ॥ हे अग्ने उत्तिष्ठ उत्थाय प्रत्यातनुष्व शत्रून्प्रत्याततेजा भव । तथा च भूत्वा, हे तिग्महेते

*ख-धृषीयः । शप.

†सं. २-२-१२.

नो॒ अरा॑तिꣳ समिधान च॒क्रे नी॒चा तं ध॑क्ष्यत॒सन्न शुष्क॑म् । ऊ॒र्ध्वो भ॑व प्रति॑ वि॒ध्याध्य॒स्मदा॒विष्कृ॑णुष्व दै-

हे॒ते॒ । यः । नः॒ । अरा॑तिम् । स॒मि॒धा॒नेति॑ सं- इ॒धा॒न॒ । च॒क्रे । नी॒चा । तम् । ध॒क्षि॒ । अ॒त॒सम् । न । शुष्क॑म् । [5]ऊ॒र्ध्वः । भ॒व॒ । प्रतीति॑ । वि॒ध्य॒ । अधीति॑ । अ॒स्मत् । आ॒विः । कृ॒णु॒ष्व॒ । दैव्या॑नि ।

---

तीक्ष्णायुध अमित्रानस्मच्छत्रून् न्योषतात् नियमेन दह । उष दाहे । अमेरित्रप्रत्ययः । किञ्च—यो नः अस्माकं अरातिं अरातित्वं अस्मभ्यं वा अरातिं अदानं चक्रे कुरुते, योस्मभ्यं न किञ्चिदपि ददाति तं नीचा न्यग्भूतं धक्षि दह, अतसन्न काष्ठमिव शुष्कम् । दहेर्लेटि 'बहुळं छन्दसि' इति शपो लुक् । न्यक्शब्दाद्व्यत्ययेन तृतीया, 'अञ्चेश्छन्दस्यसर्वनाम-स्थानम्' इति तस्या उदात्तत्वम् । हे सामिधान सामिधेनीसामिद्भि-र्दीप्यमान । पूर्ववच्छपो लुक् ॥

[5]अथ पञ्चमी—ऊर्ध्व इति ॥ हे अग्ने ऊर्ध्वः उत्थितो भव । उत्थाय च प्रतिविध्य प्रत्येकं ताडय । यद्वा—प्रतियोद्धा भव । कस्यार्थे ? अध्यस्मत् अस्मत्त उपरि अस्मत्पक्षे तिष्ठन् अस्मदर्थमित्यर्थः । यद्वा—अस्मत्त* उपरि ये तिष्ठन्त्यस्मान्नच-म्भावयन्तः । तान् प्रतिविध्य प्रत्येकं ताडय । यद्वा—सप्तम्या

---

*ख-ग—यद्वा इत्याहूयसे अस्मत्त

व्यान्यग्ने । अव॑ स्थि॒रा त॑नुहि
यातु॒जूनां॑ जा॒मिमजा॑मि॒ प्र मृ॑णी-

अग्ने॑ । अवेति॑ । स्थि॒रा । त॒नु॒हि॒ । या॒तु॒जूना॑म् ।
जा॒मिम् । अजा॑मिम् । प्रेति॑ । मृ॒णी॒हि॒ । शत्रू॑न् ।

लुक् । अस्मास्वधि प्रतिविध्य अस्मन्निमित्तं प्रतियोद्धा भव । अधिशब्देनापि सप्तम्यर्थ एव द्योत्यते । तदर्थं किं कर्तव्यमिति चेत् आविष्कृणुष्व प्रकाशय दैव्यानि देवस्य तव स्वभूतानि वीर्याणि यानि तवैव सन्ति तानि प्रकाशय । 'देवाद्यञञौ' इति यञ् । 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम् । किञ्च—यातुजूनां यातयितुं क्लेशयितुं प्राणिनो ये जवं* कुर्वन्ति ते यातुजुवः । 'क्विब्वचि' इत्यादिना क्विब्दीर्घौ । आमि छान्दसो नुट् । तेषां यातुधानानां स्थिराणि वीर्याणि अवतनुहि अवाचीनं कुरु नाशय । 'शेश्छन्दसि बहुलम्' इति लुक् । 'उतश्च प्रत्ययाच्छन्दो वा वचनम्' इति हेर्लोपो न क्रियते । एवं त्वदीयानि वीर्याण्याविष्कृत्य यातुधानानां च वीर्याणि शिथिलीकृत्य, पश्चादित्थं प्रवर्तितव्यमित्याह—जामिं चाजामिं च शत्रून्प्रमृणीहि प्रकर्षेण मारय । म्रियतेरन्तर्भावितण्यर्थात् लोटि[टः] व्यत्ययेन श्ना, हेः पित्त्वाभावे ङित्त्वादीत्वम् । यद्वा—मृण हिंसायाम्, लोटि हेश्छान्दस ईडागमः, विकरणस्य लुक् । यत्कृतमेव क्रियते तज्जामि । अत्र प्रमृणीहीत्याख्यातसन्निधेर्मरणविषयं पौनरुक्त्यं विज्ञायते, उपचारेण तद्वति† वृत्तिः । एतदुक्तं भवति;—शत्रून् प्रमृणीहि । किं विशेषेण ? जामिं

*ख-ग—जीवम्.

†तं-ते—तत्त्व

हि शत्रून् । स ते ॥२१॥ जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे

[6]सः । ते ॥ २१ ॥ जानाति । सुमतिमिति सु-मतिम् । यविष्ठ । यः । ईवते । ब्रह्मणे । गातुम् ।

चाजामिं च शत्रुं मारय यः पूर्वं प्रहतस्तमपि प्रहर, हतोयमिति मोपेक्षिष्ठाः; यश्च न प्रहतः कुतश्चित्कारणात्तमपि प्रहर, वराकोयं न हन्तव्य इत्यादि चेतसि माकुथाः । इदमेव कात्स्न्र्यं प्रतिपादयितुं बहुवचनं प्रयुक्तम् । एकेन जामिमारणेन एकेनाजामिमारणेन देवस्य कृतार्थता माविज्ञायीति । यद्वा—द्वे अप्येते क्रियाविशेषणे, व्यत्ययेन 'स्वमोर्नपुंसकात्' इति न क्रियते । पुनरुक्तमपुनरुक्तं च शत्रून् मारयेति ॥

[6]अथ षष्ठी—स त इति ॥ हे अग्ने यविष्ठ युवतम । यद्वा—हविर्देवानाम्मिश्रयितृतम । यौतेः तृजन्तादिष्ठन् । स ते तव जानाति सुमतिं शोभनां कल्याणकारिणीं मतिं स एव तवानुग्रहबुद्धिं यथावत् भजत इति यावत् । यद्वा—स एव त्वत्प्रसादात्सुमतिमात्महितं जानाति, स एवात्महिते प्रवर्तत इति यावत् । कृदुत्तरपदप्रकृतिस्वरत्वम्, 'मन्त्रे वृष' इति मतिशब्दोन्तोदात्तः । क इत्याह—य ईवते गमनवते प्रशस्तगतये कल्याणहेतुभूतागमनाय । यद्वा—गृहमागताय ब्रह्मणे परिवृढाय । तुभ्यं गातुमन्नं हविर्लक्षणं ऐरत् ईरयति ददाति* । ईर क्षेपे, चुरादिराधृषीयः, छान्दसो लुङ् । इङ् गतौ, क्विबन्तात्प्रशंसायां

*ग—प्रेरयाति.

**गातुमैरत् । विश्वान्यस्मै सुदिनानि**
**रायो द्युम्नान्यर्यो वि दुरो अभि**

**ऐरत् । विश्वानि । अस्मै । सुदिनानीति सु-दिनानि । रायः । द्युम्नानि । अर्यः । वीति । दुरः ।**

---

मतुप्, 'छन्दसीरः' इति मतुपो वत्वम् । यद्वा—ईर्वते गमनवते गमनकारिणे तुभ्यं यो गातुम्मार्गमैरत् करोति, मार्गं हविरादिसम्पन्नं प्रवर्तयति अलङ्कृतमिव राजमार्गम् । स एव सुमतिं जानाति । तस्मात्त्वया इत्थमस्यैवोपकर्तव्यमित्याह—अस्मै इत्थं त्वयि श्रद्धां कुर्वते यजमानाय यजमानार्थम् । अन्वादेशविषयत्वादनुदात्तत्वम् । रायो धनानि द्युम्नानि यशांसि दुरो गृहान्, एतानि विश्वान्यपि सुदिनानि शोभनानि दिनान्यभिलक्षीकृत्य, त्वं विद्यौत् विशेषेण द्योतस्व* । यैर्द्युम्नादिभिश्शोभनानि दिनानि क्रियन्ते तानि सुदिनानि । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्, 'नपुंसकमनपुंसकेन' इति नपुंसकस्यैकशेषः । 'ऊडिदम्' इति रायो विभक्तेरुदात्तत्वम् । दुर्वीर्हिंसाकर्मणः क्विपि वलोपः । द्योततेश्छान्दसो लुङ्, 'द्युद्भ्यो लुङि' इति परस्मैपदम्, सिचि वृद्धिः, 'बहुलं छन्दसि' इतीडभावः, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । यथैतानि विश्वान्यपि सुदिनानि भवन्ति, इष्टदिनानि भवन्ति । तथा विद्योतस्व अर्यस्त्वम् । अर्यस्स्वामी, 'अर्यस्स्वामिवैश्ययोः' इति यत्प्रत्ययान्तो निपात्यते । अपरा योजना—विश्वानि द्युम्नानि दीप्तिमन्ति सुदिनानि शोभनदिनानि । अत्यन्तसंयोगे द्वितीया ।

---

*तं—द्योतयस्व.

द्यौत् । सेद॑ग्ने अस्तु सुभग॑स्सुदा-
नुर्यस्त्वा नित्ये॑न ह॒विषा॒ य उ॒क्थैः ।

अ॒भीति॑ । द्यौत् । स॒ः । इत् । अ॒ग्ने॒ । अ॒स्तु॒ ।
सु॒भ॒ग॒ इति॑ सु-भगः॑ । सु॒दा॒नु॒रिति॑ सु-दानुः॑ । यः ।
त्वा॒ । नित्ये॑न । ह॒विषा॑ । यः । उ॒क्थैः । पि॒प्री॑षति ।

यथा शोभनानि विश्वानि दिनानि भवन्ति, तथा तेषु विद्यो-
तस्व । 'परादिश्छन्दसि बहुळम्' इत्युत्तरपदाद्युदात्तत्वम् । दुरोभि
गृहानभिलक्षीकृत्य विश्वानि दिनानि द्योतस्व । रायो धनस्य
स्वामी त्वम् । अन्ये तु वाक्यभेदेन व्याचक्षते—विश्वान्यपि
सुदिनान्यस्मै भवन्ति । द्युम्नानि यशांसि च भवन्ति । रायो
धनस्य स्वामी भवति । गृहानभि विद्योतते, गृहस्थश्च
भवतीति ॥

अथ सप्तमी—सेदिति ॥ हे अग्ने स इत् स एव सुभगोस्तु
सौभाग्यवान् भवतु, सुदानुः शोभनदानश्च । उभयत्रापि
'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । 'सोचि लोपे
चेत्' इति स इत्यस्य संहितायां सोर्लोपः । क इत्याह—यस्त्वा
नित्येन अविच्छिन्नेन यावज्जीवसङ्कल्पनां परिपालयन् हविषा पिप्री-
षति प्रीणयितुमिच्छति ; न कदाचिदपीमां हित्वा यजमानो भवति ।
प्रीञ् तर्पणे । यश्चोक्थैश्शस्त्रैस्त्वां पिप्रीषति स एव । कस्मि-
न्निमित्त इत्याह—स्वायुषि आत्मीये जीवितेऽग्नौ वा निमित्ते ।
निमित्तात्कर्मसंयोगे सप्तमी । आत्मार्थं न परार्थमिति स्वग्रहेण
दर्शयति । कुत्र स्थित इत्यत आह—दुरोणे गृहे स्व इत्ये-

पिप्रीषति स्व आयुषि दुरोणे विश्वे-
दस्मै सुदिना सासदिष्टिः । अर्चामि

स्वे । आयुषि । दुरोण इति दुः–ओने । विश्वा ।
इत् । अस्मै । सुदिनेति सु–दिना । सा । असत् ।
इष्टिः । [8]अर्चामि । ते । सुमतिमिति सु–मतिम् ।
घोषि । अर्वाक् । समिति । ते । वावाता । जर-

व । आत्मीये गृहे स्थितं त्वां पिप्रीषति, न तु ऋत्विजाम् । दुःखेन रक्ष्यत इति दुरोणम् । अवतेरौणादिको नप्रत्ययः, ज्वरत्वरादिना ऊठि गुणः, 'पूर्वपदात्संज्ञायामगः' इति णत्वम्, कृदुत्तरपदप्रकृतिस्वरत्वम् । किञ्चेत्याह—सा तादृशीत्थंभूतेन क्रियमाणा विश्वेत् विश्वैव न पुनरेकैव । इष्टिर्यागः सुदिना शोभनदिना असद्भवति । अस्मै अस्य । षष्ठ्यर्थे चतुर्थी, पूर्ववदुत्तरपदाद्युदात्तत्वम् । यद्वा—अस्य यजमानस्य विश्वान्यपि सुदिनानि भवन्ति । किञ्च—सा तादृशेन क्रियमाणा इष्टिरसद्भवेत् । अतादृशेन क्रियमाणा इष्टिरेव न भवति । तस्मात्स एव सुभगस्सुदानुश्चास्तु । भगो रूपमैश्वर्यं वा । दानुर्दानशीलः दातृत्वं वा । अस्तेर्लेटि 'लेटोडाटौ' इत्यडागमः, 'इतश्च लोपः' ॥

[8]अथाष्टमी—अर्चामीति ॥ हे अग्ने ते तव सुमतिं शोभनां मतिमुपकर्त्रीं बुद्धिमर्चयामि पूजयामि मनसा बहुमन्ये । सुष्ठु मन्यतेनयेति सोपसर्गात्क्तिनि समासे कृदुत्तरपदप्रकृतिस्वरत्वम्, 'मन्त्रे वृष' इति क्तिन उदात्तत्वम् । इयं मदीया गीश्च ते त्वां सजरतां सम्यक्स्तौतु । जरतिस्स्तुतिकर्मा छन्दसि । की-

ते सुमतिं घोष्यर्वाक्सं तें वावातां जरताम् ॥ ३० ॥ इयं गीः । स्वश्वास्त्वा सुरथां मर्जयेमास्मे क्षत्रा-

ताम् ॥ ३० ॥ इयम् । गीः । स्वश्वा इतिं सु-अश्वाः । त्वा । सुरथा इतिं सु-रथाः । मर्जयेम । अस्मे इतिं । क्षत्राणिं । धारयेः । अन्विति । द्यून् ।

दृशी गीः? त्वामेव वावाता पुनःपुनस्त्वामेवोपगच्छन्ती क्षणमपि त्वां हातुमशक्नुवन्ती । वातेर्यङ्लुगन्तान्निष्ठा, व्यत्ययेन धातुस्वरः । त्वां संवावाता त्वां सङ्गच्छन्ती वान्वीयते । यद्वा—त्वामाश्रिता वा अवगच्छन्तीति वा । 'वष्टि वागुरिरल्लोपम्' इत्यवशब्दाकारो लुप्यते, 'अन्येषामपि' इति सांहितिकं दीर्घत्वम् । यद्वा—आद्यन्तविपर्ययो वा अवशब्दस्य; यथा—'श्वात्रोसि'* इत्याशु-शब्दस्य । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—अतिशयेन वननीया । यङ्लुकि छान्दसी रूपसिद्धिः । स्तुतिर्विशेष्यते—घोषि घुष्यत इति घोषि । 'इन्सर्वधातुभ्यः' इतीन्, क्रियाविशेषणत्वान्नपुंसकत्वम् । अर्वाक् अर्वाचीनमस्मा-दृशजनोचितं, यथास्माभिर्घोषयितुं शक्यते तथा घोषयित्वा त्वद्गुणा-नियं स्तौतु । अथ कायिकीं परिचर्यामाह—स्वश्वास्सुरथाश्च सन्तः त्वत्प्रसादेन महाधनाः पुत्रपौत्रादिसहिताश्च सन्तस्त्वामर्चयेम अलङ्कुर्मः, परिचरेमेति यावत् । मृजू शौचालङ्करणयोः, वृद्ध्य-भावश्छान्दसः । शुद्धिकर्मण एव वा शु[वृ?]द्ध्या भाव्यम् । 'आद्युदात्तं

*सं. १-३-३.

णि धारयेरनु द्यून् । इह त्वा भू-
र्या चरेदुप त्मन्दोषावस्तर्दीदिवाꣳ-
समनु द्यून् । क्रीडन्तस्त्वा सुमनं-

[9]इह । त्वा । भूरि । एति । चरेत् । उपेति । त्मन् ।
दोषावस्तरिति दोषा-वस्तः । दीदिवाꣳसम् ।
अन्विति । द्यून् । क्रीडन्तः । त्वा । सुमनस इति

ह्यचच्छन्दसि ’ इति बहुव्रीहिरुत्तरपदाद्युदात्तत्वम् । अस्मे अस्म-
भ्यमेवं वर्तमानेभ्यः क्षत्राणि बलानि धारयेः देहि । यद्वा—
अस्माकं क्षत्राणि धारय । यद्वा—अस्मदर्थं क्षत्राणि धारय ।
‘ सुपां सुलुक् ’ इति शे आदेशः । अनुद्यून् दिनेदिने । लक्ष-
णादिना कर्मप्रवचनीयत्वम् ॥

[9]अथ नवमी—इहेति ॥ इहास्मिन्कर्मणि रक्षोवधलक्षणे त्वामेव भूरि भूयिष्ठं उपाचरेत् उपचरितुमर्हति पुरुषः त्मन् आत्मनि दोषावस्तर्दीदिवांसमनुद्यून् रात्रावहनि च सर्वेषां अन्तर्दीदिवांसं संदीप्यमानम् । ‘ आङोन्यत्रापि दृश्यते ’ इत्यात्मन आकारस्य लोपः । दीप्यतेः क्वसौ ‘ तुजादीनाम् ’ इत्यभ्यासस्य दीर्घत्वम् । छान्दसो वा दीदिविः* दीप्तिकर्मा कृतद्विर्वचन एव । ‘ कार्तकौजपादयश्च ’ इति दोषावस्तारित्यस्य पूर्वपदप्रकृतिस्वरत्वम् । पदसमुदायात्मको वा एको निपातः । ‘ निपाता आद्युदात्ताः ’ इति तस्याद्युदात्तत्वम् । यद्वा—इहास्मिन् लोके त्वामेव भूरि उपाचरेत् पुरुषः आत्मनिमित्तमात्मनोभिमतसम्पादनार्थं

*तं—सो वा देतिः.

सस्सपेमाभि द्युम्ना तस्थिवाꣳसो जनानाम् । यस्त्वा स्वश्वस्सुहिरण्यो अग्न उपयाति वसुमता रथेन ।

सु-मनसः । सपेम । अभीति । द्युम्ना । तस्थिवाꣳसः । जनानाम् । [10]यः । त्वा । स्वश्व इति सु-अश्वः । सुहिरण्य इति सु-हिरण्यः । अग्ने । उपयातीत्युप-याति । वसुमतेति वसु-मता ।

दोषावस्तः दीप्यमानम् । अनुद्यूनित्युपचरणं विशेष्यते अनुदिनमुपाचरेदिति । तस्माद्वयं क्रीडन्तः तृप्यन्तस्सुमनसः अप्रातिकूलमनसः शोभनमनसो वा । त्वा त्वामेव सपेम भजेम । षप समवाये । 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वं सुमनश्शब्दस्य । जनानां द्युम्नानि धनानि यशांसि वा अभितस्थिवांसः अभितिष्ठन्तः त्वत्प्रसादेनात्मसात्कुर्वन्तः त्वत्सम्बन्धिन एव सर्वदा भवेमेति । 'शेश्छन्दसि बहुलम्' इति द्युम्नेत्यत्र शेर्लोपः । 'वस्वेकाजाद्धसाम्' इति तिष्ठतेरिडागमः ॥

[10]अथ दशमी—यस्त्वेति ॥ हे अग्ने स्वश्वः शोभनाश्वः महाधनः याग*योग्य इति यावत् । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । सुहिरण्यः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । य ईदृशस्सन् वसुमता व्रीह्यादिधनवता रथेन त्वामुपयाति तस्य त्राता भवसि सर्वदुरितेभ्यः । किञ्च—तस्य सखा भवसि । कस्य? यस्त्वामानुषक् अनुषक्तं नित्यं आतिथ्यमति-

*ख. ग-महा,

तस्य त्राता भवासि तस्य सखा
यस्त आतिथ्यमानुषग्जुजोषत् ।
महोरुजामि ॥ २१ ॥ बन्धुता

रथेन । तस्य । त्राता । भवासि । तस्य । सखा ।
यः । ते । आतिथ्यम् । आनुषक् । जुजोषत् ।
[11]महः । रुजामि ॥ २१ ॥ बन्धुता । वचोभिरिति
वचः-भिः । तत् । मा । पितुः । गोतमात् ।

---

थिसत्कारम् । यद्वा—अनुषक्तं यथाभिलषितमातिथ्यं जुजोषत् जोषयाति प्रापयाति । जुषेरन्तर्भावितण्यर्थात् लेटि 'बहुलं च्छन्दसि' इति शपश्श्लुः । 'लेटोडाटौ' इत्यडागमः, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । ते इति कर्मणस्सम्प्रदान-त्वात् चतुर्थ्यर्थे षष्ठी । 'अतिथेर्ण्यः' ॥

[11]अथैकादशी—महो रुजामीति ॥ हे अग्ने बन्धुता बन्धुतया बन्धुभावेन । 'सुपां सुलुक्' इति तृतीयाया आकारः । वचो-भिस्स्तुतिभिरुपजातया त्वद्बन्धुतया महः महतः असुरान् ये धनादिना मामतिशेरते तान्रुजामि भञ्जयामि मत्तो न्यक्करोमि । महतेः क्विपि 'सावेकाचः' इति व्यत्ययेन विभक्तेरुदात्तत्वम् । तत्तादृशं ज्ञानं गोतमनाम्नः गोतमसदृशाद्वा मम पितुस्सकाशान्मामन्वियाय अन्वगच्छत् । येन त्वां वाग्भिर्बन्धुत्वाय* [येनेमां वाचं त्वद्बन्धुत्वाय?[ करोमि । यद्वा—वचोभिरिति व्यत्ययेन बहुवचनम् । स्तुतिव-चसा उपजातेन तव बान्धवेन महो रुजामि प्रथमम् । तदनु

---

*तं—वाग्बन्धुत्वाय.

वचोभिस्तन्मा पितुर्गोतमादन्वि-
याय । त्वन्नो अस्य वचसश्चिकिद्धि
होतर्यविष्ठ सुक्रतो दमूनाः । अस्व

अन्वितिं । इयाय । त्वम् । नः । अस्य । वचसः ।
चिकिद्धि । होतः । यविष्ठ । सुक्रतो इति सु—क्रतो
दमूनाः । [12] अस्वप्नज इत्यस्वप्न—जः । तरणयः ।

तस्माद्गोतमात् त्वद्बान्धवहेतुभूतगोतमात् साधुतमात् स्तुतिवचसो हेतुभूतात् पितुरन्नमपि मामियाय एति उपगच्छति तेनैव बान्धवेन । यद्वा—तत्तादृशं वचो गोतमात् पितुस्सकाशान्मामन्वियाय सा स्तुतिशक्तिर्मामुपसङ्क्रान्ता इत्यर्थः । त्वमेव खल्वस्य स्तुतिवचसः अस्मदीयस्य चिकिद्धि जानासि एतत् ज्ञातुं शक्नोषि । कित ज्ञाने, जुहोत्यादिकः । अस्येति स्तोत्ररूपं निर्दिशति, न तु प्रकृतं वचः । तेनान्वादेशाभावः । यद्वा—प्रथमपक्षे एकवचनान्तस्य वचश्शब्दस्याप्रकृतत्वादस्येति प्रथमादेशत्वेनान्वादेशाभावः। तत्र 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । इतरयोस्तु पक्षयोर्व्यत्ययेनान्वादेशाभावः, कृते वानुदात्तत्वाभावः । कस्तव विशेष इत्याह—हे होतः देवानामाह्वातः यविष्ठ युवतम सुक्रतो शोभनप्रज्ञ । 'नामन्त्रिते समानाधिकरणे' इति प्रथमस्याविद्यमानत्वनिषेधात्परमामन्त्रितद्वयं निहन्यते । दमूनाः दान्तमना दानमना वा । पृषोदरादिः । ईदृशस्त्वमेवैतच्चिकिद्धि किमन्येनाज्ञानिना इति ॥

[12]अथ द्वादशी—अस्वप्नज इति ॥ अस्वप्नशीलः । 'स्वपितृषोर्नजिङ्' । पदकारानभिमतत्वात् अन्यथा व्याख्यायते—स्वप्नज-

प्रजस्तरणयस्सुशेवा अतन्द्रासोऽवृ-
का अश्रमिष्ठाः । ते पायवस्सध्रि-
यञ्चो निषद्याग्ने तव नः पान्त्वमूर ।

सुशेवा इति सु-शेवाः । अतन्द्रासः । अवृकाः ।
अश्रमिष्ठाः । ते । पायवः । सध्रियञ्चः । निषद्येति
नि-सद्य । अग्ने । तव । नः । पान्तु । अमूर ।

न्मानो न भवन्तीत्यस्वप्रजाः । 'सुपां सुलुक्' इति जसस्स्वा-देशः, सातिशिष्टत्वादव्ययपूर्वपदप्रकृतिस्वरत्वम् । तरणयः दुरि-ततरणहेतवः । तरतेरनिप्रत्ययः । सुशेवाः सुसुखाः । 'शेवा-यह्वा' इति निपात्यते । अतन्द्रासः अलसत्वरहिताः । 'आज्ज-सेरसुक्' । अवृकाः वृकत्वं हिंस्रत्वं तद्रहिताः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अश्रमिष्ठाः अखेदयितृतमाः । श्रमु खेदे, तृजन्तात् 'तुश्छन्दसि' इतीष्ठन्, 'तुरिष्ठेमेयस्सु' इति लोपः । एवंस्वभावास्ते तादृशाः हे अग्ने तव पायवः जगत्पालनशीलाः रश्मयः । 'कृपावाजि' इत्युण्प्रत्ययः । सध्रिय-ञ्चस्सहाञ्चन्तः सम्भूयकारिणः । 'सहस्य सध्रिः' । निषद्य अस्म-द्यज्ञे निषीदन्तो भूत्वा सर्वे अस्मद्यज्ञमागत्य त्वयि निषण्णास्त्वा-मुद्दीपयन्तः नः अस्मान् पान्तु रक्षन्तु । हे अमूर अमोहन-शील । मुर्छा मोहसमुच्छ्राययोः, क्विपि 'राल्लोपः', ततो मत्व-र्थीयोऽप्रत्ययः । मोहनशीलो मूरः ततोन्योऽमूरः । यद्वा— मूङ् बन्धने, औणादिको रक् । अमूर अबन्धनीय अनिग्राह्य । यद्वा—अमतेरूरन् प्रत्ययः । अमूरः अप्रतिहतगतिः ॥

ये पा॒यवो॑ मामते॒यं ते॑ अग्ने॒ पश्य॑-
न्तो अ॒न्धं दु॑रि॒तादर॑क्षन् । र॒रक्ष॒
तान्त्सु॒कृतो॑ वि॒श्ववे॑दा दि॒प्सन्त॒ इद्रि॒-

[13]ये । पा॒यव॑ः । मा॒म॒ते॒यम् । ते॒ । अ॒ग्ने॒ । पश्य॑न्तः । अ॒न्धम् । दु॒रि॒तादिति॑ दुः॒-इ॒तात् । अर॑क्षन् । र॒रक्ष॑ । तान् । सु॒कृत॒ इति॑ सु॒-कृत॑ः । वि॒श्ववे॑दा॒ इति॑ वि॒श्व-वे॑दाः । दि॒प्सन्त॑ः । इत् । रि॒पव॑ः । न ।

---

[13]अथ त्रयोदशी—ये पायव इति ॥ हे अग्ने ते तव ये पायवो रश्मयः अन्धं चक्षुर्हीनं मामतेयं, ममता नाम काचिदृषिपत्नी तस्या अपत्यं मामतेयम् । 'स्त्रीभ्यो ढक्' । तमन्धं पश्यन्तः दुरितात् श्वभ्रपतनलक्षणात् अरक्षन् प्रकाशप्रदानेन दुरितहीनमकुर्वन् । दुरितशब्दः प्रवृद्धादिर्द्रष्टव्यः । तान्रश्मीन् सुकृतस्तथा शोभनं कर्म कृतवतः विश्ववेदास्त्वं विश्वस्य वेदयिता । 'गतिकारकयोरपि' इत्यसुन् । विश्वानि वेदांसि वा यस्य तादृशो भवान् तान्ररक्ष, रक्षतेः परोक्षे लिट्, आदरेण परिगृह्य पालयेति । 'छन्दसि लुङ्लङ्लिटः' इति लिट् । परोक्ष एव ररक्ष विशेषेण परिजग्राहेत्यर्थः । कथं ररक्षेत्याह—यथा रिपवो राक्षसादयः दिप्सन्त इत् रिपुं दम्भितुमिच्छन्तः परिभवितुमिच्छन्त एव सन्तः नैव देभुः न परिबभूवुः । ततः प्रभृति तथा ररक्षेति । दम्भेस्सनि 'सनीवन्तर्ध' इतीडागमः । 'दम्भ इच्च' इतीकारः । अभ्यासलोपः । अपभावश्छान्दसः । दम्भेर्हल्ग्रहणस्य जातिवाचित्वात् 'हलन्ताच्च' इति सनः कित्त्वम् । देभुरिति 'दम्भे-

पवो ना हं ॥ ३२ ॥ देभुः । त्वया
वयꣳ सधन्यंस्त्वोतास्तव प्रणीत्य-
श्याम वाजान् । उभा शꣳसा

ह ॥ ३२ ॥ देभुः । [14]त्वया । वयम् । सधन्य
इति सध—न्यः । त्वोताः । तव । प्रणीतीति
प्र—नीती । अश्याम । वाजान् । उभा । शꣳसा ।

---

श्चेति वक्तव्यम्' इति लिटः किन्वादुपधालोपः । दभिः प्रकृ-
त्यन्तरं वा । 'अन्येषामपि दृश्यते' इति नशब्दस्य संहि-
तायां दीर्घत्वम् ॥

[14]अथ चतुर्दशी—त्वयेति ॥ हे अग्ने त्वया सधन्यस्सह-
नेतारौ द्वयं त्वं च वयं च सहाभिमतानि नयाम इत्यर्थः ।
'सधमादस्थयोः' इति विधीयमानस्सधादेशो व्यत्ययेनात्रापि
भवति, 'एरनेकाचः' इति यणादेशः, 'उदात्तस्वरितयोर्यणः'
इति विभक्तिस्स्वर्यते । त्वोताः त्वया ऊताः रक्षिताः । छान्दसी
रूपसिद्धिः, 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्,
बहुविकारत्वादनवग्रहः । तव प्रणीती प्रणीत्या प्रणयनेन अनु-
ज्ञानेन परिचरणेन वा वयं वाजानन्नानि अश्याम भक्षीमहि ।
'सुपां सुलुक्' इति प्रणीतिशब्दात्परस्यास्तृतीयायाः पूर्वसवर्ण-
दीर्घत्वम्, 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । किञ्च—
हे सत्यताते सत्यकारिन् । व्यत्ययेन तातिल्प्रत्ययः । यद्वा—तनोतेः
क्तिनि छान्दसं दीर्घत्वम् । हे सत्यविस्तार । उभा शंसा उभौ
शंसनीयौ अर्थावैहिकमामुष्मिकं च । 'सुपां सुलुक्' इत्याकारः ।

सूदय सत्यतातेनुष्ठुया कृणुह्यह्र
याण । अया ते अग्ने समिधा
विधेम प्रति स्तोमꣳ शस्यमानं

सूदय । सत्यताते इति सत्य-ताते । अनुष्ठुया । कृणुहि । अह्रयाण । [15]अया । ते । अग्ने । समिधेति सं-इधा । विधेम । प्रतीति । स्तोमम् ।

---

तौ सूदय आनय । षूद क्षरणे । अनुष्ठुया अनुक्रमेण स्थितौ कृणुहि कुरु । 'उतश्च प्रत्ययाच्छन्दो वा वचनम्' इति हेर्लुगभावः । अनुक्रमेण स्थापनमनुष्ठु । 'अपदुस्सुषु स्थः' इति विधीयमानः कुप्रत्ययो व्यत्ययेनानुपूर्वादपि भवति, सुषामादित्वात् षत्वम्, ततः परस्यास्तृतीयायाः 'सुपां सुलुक्' इति याजादेशः । अह्रयाण भक्तानां अह्रेपयितः, विजयकरत्वात् । जिह्रेतेर्व्यत्ययेन शपो लुक्, 'छन्दस्युभयथा' इति चानशः आर्धधातुकत्वात् ङित्त्वाभावः । व्यत्ययेन वा शपि पुगभावः ॥

[15]अथ पञ्चदशी—अयेति ॥ हे अग्ने अया अनया समिधा समिन्धनेन सामिधेनीकृत्येन । इदमस्तृतीयायाः 'सुपां सुलुक्' इति याजादेशः, त्यदाद्यत्वम्, 'अतो गुणे' इति पररूपत्वं, हलि लोपश्च, 'अनाप्यकः' इति व्यत्ययेन न प्रवर्तते । ते त्वां विधेम परिचरेम । पूर्ववत्कर्मणस्सम्प्रदानत्वम् । स्तोमं स्तोत्रं शस्यमानं प्रतिगृभाय प्रतिगृहाण । 'छन्दसि शायजपि' इति शायच्, 'हृग्रहोर्भः' इति भत्वम् । अशसः अशंसनान्

गृभाय । दहाशसो रक्षसः पाह्य-
स्मान्द्रुहो निदो मित्रमहो अवद्यात् ।
रक्षोहणं वाजिनमा जिघर्मि
मित्रं प्रथिष्ठमुप यामि शर्म ।

शस्यमानम् । गृभाय । दह । अशसः । रक्षसः । पाहि । अस्मान् । द्रुहः । निदः । मित्रमह इति मित्र—महः । अवद्यात् । [16]रक्षोहणमिति रक्षः—हनम् । वाजिनम् । एति । जिघर्मि । मित्रम् ।

---

हिंसाद्वारा । रक्षसः राक्षसान् । पूर्ववन्नञ्विषयत्वाभावादाद्युदात्तत्वा-भावः । किञ्च—अस्मान् पाहि रक्ष । कस्मादित्याह—द्रुहः द्रोहा-त्परकर्तृकात् । निदः । निन्दतेः क्विप् । निन्दायाः परकर्तृकायाः । अवद्यात् परिवादात् परकर्तृकात् अस्मान्पाहि । उभयत्र 'सावे-काचः' इति विभक्तेरुदात्तत्वम्, तृतीयस्य तु 'अवद्यपण्य' इति निपातनात्, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । हे मित्रमहः सर्वस्य मित्रवदुपकारकं महस्तेजो यस्य स तादृशः ॥

[16]अथ पुरोनुवाक्या—रक्षोहणमिति ॥ 'रक्षोघ्नी याज्यानुवाक्ये भवतः'* इति च ब्राह्मणम् । रक्षसां हन्तारं वाजिनमन्नवन्तं अन्नस्य दातारं आजिघर्मि. अनेन हविषा आभिमुख्येन संदीप-यामि । घृ क्षरणदीप्त्योः । जुहोत्यादिकः, 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । मित्रं सर्वेषां सुहृद्भूतम् । मिदो दुःखा†त्त्रायकं

---

*सं. २-२-२. †क. ख. ग-मितेर्दुःखा.

शिशानो अग्निः क्रतुभिस्समिद्धस्स
नो दिवा ॥ ३३ ॥ स रिषः पातु
नक्तम् । वि ज्योतिषा बृहता

प्रथिष्ठम् । उपेति । यामि । शर्म । शिशानः ।
अग्निः । क्रतुभिरिति क्रतु–भिः । समिद्ध इति
सं–इद्धः । सः । नः । दिवा ॥३३॥ सः । रिषः ।
पातु । नक्तम् । [17]वीति । ज्योतिषा । बृहता । भाति ।

---

प्रथिष्ठं पृथुतमम् । यद्वा—प्रथयितृतमम् । प्रथितृशब्दात् 'तुश्छन्दसि' इतीष्ठन्, 'तुरिष्ठेमेयस्सु' इति तृलोपः । ईदृशं तं शर्म शरणमुपयामि रक्षकं भजे । स च क्रतुभिः समिद्धः प्रज्ञाभिस्सन्दीप्तः अस्मदीयैर्वा यजनैः प्रवृद्धतेजाः । अग्निः अङ्गनादिगुणयुक्तः । शिशानस्तीक्ष्णीभवन् । श्यतेर्व्यत्ययेनात्मनेपदम्, 'बहुलं छन्दसि' इति शपश्श्लुः, अभ्यासस्येत्वम्, 'अभ्यस्तानामादिः' आद्युदात्तत्वम् । ईदृशस्स नः अस्मान् दिवा च नक्तं च रिषः पातु दुःखाद्रक्षतु । हिंस्राद्वा रक्षःप्रभृतेरस्मान्पातु । पूर्ववद्विभक्तेरुदात्तत्वम् 'सावेकाचः' इति ॥

[17]अथ याज्या—वीति ॥ अयमग्निर्बृहता ज्योतिषा महता तेजसा इत्थंभूतस्सन् विभाति विशेषेणाभाति महानेनेनास्मदीयेन हविषा । 'बृहन्महतोरुपसङ्ख्यानम्' इति तृतीयाया उदात्तत्वम् । किञ्च—विश्वानि महित्वा माहात्म्यानि । 'शेश्छन्दसि' इति लोपः ।

भा॒त्य॒ग्निरा॒विर्विश्वा॑नि कृणुते महि॒-
त्वा । प्रादे॑वीर्मा॒याः स॑हते दु॒रेवा॒-
शिशी॑ते॒ शृङ्गे॒ रक्ष॑से वि॒निक्षे॑ ।

अ॒ग्निः । आ॒विः । विश्वा॑नि । कृ॒णु॒ते॒ । म॒हि॒त्वेति॑ महि॒-त्वा । प्रेति॑ । अदे॑वीः । मा॒याः । स॒ह॒ते॒ । दु॒रेवा॒ इति॑ दुः-एवाः॑ । शिशी॑ते । शृङ्गे॒ इति॑ ।

आविष्कृणुते आविष्कुर्वीत । किञ्च—अदेवीः अदेवनशीलाः आसुरीर्मायाः प्रसहते अभिभवेत् । दुरेवाः दुःखेनैतव्याः दुष्प्रधर्षा इति यावत् । एतेर्वः*, कृदुत्तरपदप्रकृतिस्वरत्वम् । किञ्च—शृङ्गे शृङ्गस्थानीये प्रधाने आत्मीये ज्वाले शिशीते† तीक्ष्णीकुरुते । श्यतेर्व्यत्ययेन आत्मनेपदम्, पूर्ववच्छपश्श्लुः, इत्वं चाभ्यासस्य, 'तास्यनुदात्तेत्' इति लसार्वधातुकानुदात्तत्वे 'अनुदात्ते च' इत्याद्युदात्तत्वम् । किमर्थं शिशीत इत्याह—रक्षसे विनिक्षे रक्षोविनाशार्थम् । पूर्ववत्कर्मणस्सम्प्रदानत्वम् । विनिक्षे—णिक्षि चुम्बने, 'कृत्यार्थे तवैकेन्' इति केन्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् । ज्वालाभ्यां रक्षसश्चुम्बनं दाह एव, रक्षसो दाहार्थं शृङ्गे तीक्ष्णीकरोत्विति । यद्वा—णिजेश्शोधनकर्मणः 'तुमर्थे सेसेनसे' इति क्सेप्रत्ययः, 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । सानि वा व्यत्ययेन गुणाभावः । विनाशे बन्धनं विनाशनमेव ॥

*ख. ग—दुरुपसृष्टादेतेरौणादिको यत्प्रत्ययः.

†ख-ग—ज्वाले । शृणोतेरशृङ्गे हिंस्रभूते शत्रुजाते शिशीते.

उत स्वानासो दिवि षन्त्वग्नेस्ति-
ग्मायुधा रक्षसे हन्तवा उ । मदे

रक्षसे । विनिक्ष इति वि-निक्षे । [18]उत । स्वाना-
सः । दिवि । सन्तु । अग्नेः । तिग्मायुधा इति
तिग्म-आयुधाः । रक्षसे । हन्तवै । उ । मदे ।

---

[18]अथ याज्याविकल्पः, उपहोमार्था वा—उतेति ॥ स्वानासः स्वनं कुर्वन्तः हविःप्रक्षेपसमुपजनितमहाशब्दाः । स्वनतेर्व्यत्ययेन कर्तरि घञ्, आज्जसेरसुक्, 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । ईदृशाः अग्नेः रश्मयः उत दिवि दिव्यपि सन्तु सर्वत्राकाशे विजृम्भन्ताम् । छान्दसं षत्वम् । 'ऊडिदम्' इति विभक्ते-रुदात्तत्वम् । स्वाना इति रश्मिनामेति केचित् । तिग्मायुधाः तीक्ष्णायुधाः । तिग्मं तैक्ष्ण्यमेव आयुधस्थानीयं शत्रूणां वेधक-त्वात् येषां ते तव रश्मयः दिव्यपि प्रकाशन्ताम् । किमर्थं ? रक्षसे हन्तवै रक्षोवधार्थम् । हन्तेः कृत्यार्थे भावे तवैप्रत्ययः । प्ररुजन्तु प्रकर्षेण भक्षयन्तु हवींषि । रुजो भङ्गे तौदादिकः । यद्वा—भामाः क्रोधनशीलाः रुत्वा [क्त्वा ?] अस्य रश्मयः प्ररुजन्तु प्रक-र्षेण रक्षःप्रभृत्यापि भक्षयन्तु । मदेचित् मदायैवास्य । यद्वा—उपमानार्थश्चिच्छब्दः । महस्मे [मध्याह्ने] वर्तमानस्यास्य यथा रश्मयो विश्वं दहन्ति, एवमस्मद्रिपून् भक्षयन्त्विति । एवमस्म-द्विषये प्रवर्तमानमेनमग्निं अदेवीः अदेव्यः आसुर्यः परिबाधः पीडाः न वरन्ते न वृण्वन्तु न प्राप्नुवन्तु । वृञो वृङो वा

चिदस्य प्र रुजन्ति भामा न वरन्ते
परिबाधो अदेवीः ॥ ३४ ॥

चित् । अस्य । प्रेति । रुजन्ति । भामाः । न । वरन्ते । परिबाध इति परि—बाधः । अदेवीः ॥३४॥

अघशꣳसस्य ते जरताꣳ रुजामि ह
द्विचत्वारिꣳशच्च ॥१४॥

आप उन्दन्त्वाकूत्यै दैवीमियन्तेवस्व्यस्यꣳशुना ते सोमन्त उदायुषा प्र व्यवस्वामेरातिथ्यमꣳशुरꣳशुर्विचार्यनी भेसि युक्ष्ते कृणुष्व पाजश्चतुर्दश ॥ १४ ॥

आपो वस्व्यसि या तवेयङ्गीश्चतुस्त्रिꣳशत् ॥ ३४ ॥
आप उन्दन्त्वदेवीः ॥

हरिः ओम् तत्सत्.

---

व्यत्ययेन शप् । परिपूर्वाद्बाधतेस्सम्पदादिलक्षणस्त्रियां क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये प्रथमे काण्डे द्वितीयप्रपाठके चतुर्दशोनुवाकः.

प्रथमकाण्डे द्वितीयप्रपाठकः समाप्तः.

देवस्य त्वा सवितुः प्रसवेऽश्विनो-
र्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे-
भ्रिरसि नारिरसि परिलिखितꣳ

[1] देवस्य । त्वा । सवितुः । प्रसव इति प्र-सवे । अश्विनोः । बाहुभ्यामिति बाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । एति । ददे । [2] अभ्रिः । असि । नारिः ।

---

## अथ तृतीयः प्रपाठकः.

[1] अतः परमध्वरकाण्डं सोमार्थेयम् । तत्रौदुम्बर्यवटपरिलेखनार्थमभ्रिमादत्ते—देवस्य त्वेति ॥ व्याख्यातं चैतत् * । हे अभ्रे त्वामाददे इति सावित्रस्यैवायं शेषः ॥

[2] तामभिमन्त्रयते—अभ्रिरसीति ॥ अभ्रिः कठिनमपि प्रदेशं भित्त्वानुप्रवेष्टुं समर्थासि, एवंनाम तीक्ष्णासीत्यर्थः । अभ्र गतौ, 'इन्सर्वधातुभ्यः' इतीन्प्रत्ययः । यद्वा—अपो बिभर्तीत्यभ्रिः, यागसाधनद्वारेण वृष्टिहेतुत्वात्, तीक्ष्णीकरणाय कर्मकारेण पायितोदकत्वाद्वा । अप्छब्द उपपदे बिभर्तेः 'अचः' इतीप्रत्ययः, बहुलवचनाद्गुणो न क्रियते, स्वरानवग्रहौ चिन्त्यौ । व्यत्ययो वा । कथं पुनरियं तीक्ष्णेति ज्ञायते? इत्याह—नारिरसि । नॄ नये, 'पुंसि संज्ञायां घः' । नरः नेता निपुणः कर्मकारः, तस्यापत्यमसि, तेनोत्पादितत्वात् । यद्वा—'नयतेष्टिलोपश्च' इति ऋप्रत्यये ना, तस्यापत्यमिति बाह्वादेराकृतिगणत्वात् इञ्प्रत्ययः ।

---

*सं—१-१-४८.

रक्षः परिलिखिता अरातय इदम-
हꣳ रक्षसो ग्रीवा अपि कृन्तामि
योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म इद-
मस्य ग्रीवा अपि कृन्तामि दिवे
त्वान्तरिक्षाय त्वा पृथिव्यै त्वा

असि। [3]परिलिखितमिति परि—लिखितम् । रक्षः। परिलिखिता इति परि—लिखिताः । अरातयः । इदम् । अहम् । रक्षसः । ग्रीवाः । अपीति । कृन्तामि । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इदम् । अस्य । ग्रीवाः । अपीति । कृन्तामि । [4]दिवे । त्वा । [5]अन्तरिक्षाय । त्वा । [6]पृथिव्यै ।

---

एवं वा—यद्यपि तीक्ष्णतया हिंसिकासि, तथापि त्वं मम नारिरसि अरिर्न भवसि मित्रमेवासि । 'सुप्सुपा' इति प्रतिषेधवचनो नशब्दस्समस्यते, सानुबन्धकश्चेन्नलोपेन भाव्यम्, अव्ययपूर्वपदप्रकृतिस्वरत्वं व्यत्ययेन, 'अव्यये नञ्कुनिपातानाम्' इति वचनात् । शान्त्यर्थं चैवमियमुच्यते, 'वज्र इव वा एषा यदभ्रिरभ्रिरसि नारिरसीत्याह शान्त्यै'* इति ब्राह्मणम् ॥

[3]तयावटं परिलिखति—परिलिखितमिति ॥ अपिकृन्तामीत्यन्तो मन्त्रो व्याख्यातः† ॥

[4—6]अग्रादारभ्यौदुम्बरीं प्रोक्षति—दिवे त्वेति ॥ बर्हिःप्रोक्षणे

---

*सं—६-२-१०. †सं—१-२-५७.

शुन्धंतां लोकः पितृषदंनो यवोऽ-
सि यवयास्मद्द्वेषः ॥ १ ॥ यवया-

त्वा । [7]शुन्धंताम् । लोकः । पितृषदंन इतिं पितृ-
सदंनः । [8]यवंः । असि । यवयं । अस्मात् ।

---

व्याख्यातम् * द्युलोकादिस्थित्यर्थं त्वां प्रोक्षामीत्यु.दुम्बर्या अग्रमध्य-मूलानि पृथक्पृथक्प्रोक्ष्यन्ते । 'परस्तादर्वाचीम्'† इत्यादि ब्राह्मणम् ॥

[7]अवटे अपोवनयति—शुन्धतामिति ॥ पितरस्सीदन्त्यस्मिन्निति पितृषदनः । अधिकरणे ल्युट्, कृदुत्तरपदप्रकृतिस्वरत्वम्, लित्स्वरेण सदनशब्द आद्युदात्तः, सुषामादित्वात्षत्वम् । ईदृ-शोयं लोकः अवटाख्योवकाशश्शुन्धताम् शुद्धो भवतु । व्यत्यये-नात्मनेपदम्, 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वे धातु-स्वरः । 'क्रूरमिव वा एतत्करोति यत्खनत्यपोवनयति शान्त्यै'† इति ब्राह्मणम् ॥

[8]अवटे यवान्प्रक्षिपति—यवोसीति ॥ यावयति अपनयति क्षुधमिति यवः । यौतेः पृथग्भावकर्मणोन्तर्भावितण्यर्थात् 'पुंसि संज्ञायां घः', वृषादित्वादाद्युदात्तत्वम् । बहुलग्रहणाद्वा कर्तरि 'ऋदोरप्' इत्यप् । जात्याख्यायामेकवचनम् । ईदृशस्त्वमस्मत् अस्मत्तः द्वेषः द्वेष्यं रक्षःप्रभृति यवय अपनय विनाशय । यौतेर्णिचि 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धिर्न क्रियते, तिङः परत्वान्न निहन्यते । यद्वा—द्विषेः 'अन्येभ्योपि दृश्यते'

---

*सं—१-१-११४. †सं—६-२-१०.

रांतीः पितॄणाꣳ सदंनमस्युद्दिवꣳ स्तभानान्तरिंक्षं पृण पृथिवीं दृꣳह

द्वेषः ॥ १ ॥ युवयं । अरांतीः । [9]पितॄणाम् । सदंनम् । असि । [10]उदिति । दिवम् । स्तभान । एति । अन्तरिंक्षम् । पृण । पृथिवीम् । दृꣳह ।

इति विच् । द्वेषः द्वेष्टॄन्विनाशय । किञ्च—अरातीः अदातॄन् शत्रूंश्च यवय । रातिः कर्तरि क्तिनि क्तिचि वा नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् । अस्मदीयांश्च शत्रून्नाशयेत्यर्थः । अपदात्परत्वादिदमाख्यातं न निहन्यते । ' ऊर्ग्वै यवः ' इत्यादि ब्राह्मणम्* ॥

[9]तस्मिन्व्यतिषज्य बर्हिर्मुष्टिं निदधाति—पितॄणामिति ॥ सीदन्त्यस्मिन्निति सदनं आसनम् । अधिकरणे ल्युट्, लित्स्वरेणाद्युदात्तत्वम् । पितॄणामासनमसि । ' नामन्यतरस्याम् ' इति षष्ठीबहुवचनस्योदात्तत्वम्, ' छन्दस्युभयथा ' इति ' नामि ' इति दीर्घत्वं न क्रियते । ' पितृदेवत्यं ह्येतत् '* इत्यादि ब्राह्मणम् ॥

[10]औदुम्बरीमुच्छ्रयति—उद्दिवमिति ॥ हे औदुम्बरि दिवं दिविष्ठानुत्तभान उत्तम्भय धारय । स्तन्भुस्सौत्रो धातुः, ' स्तन्भु स्तुन्भु ' इति श्नाप्रत्ययः । ' हलश्श्नश्शानज्झौ ' इति शानजादेशः । तथा अन्तरिक्षमन्तरिक्षस्थान् पृण प्रीणय । पृण प्रीणने

*सं.-६-२-१०,

द्युतानस्त्वा मारुतो मिनोतु मित्रा-

11 द्युतानः । त्वा । मारुतः । मिनोतु । मित्रावरुण-
योरिति मित्रा-वरुणयोः । ध्रुवेण । धर्मणा ।

---

इति तौदादिकः । तथा पृथिवीं पृथिवीस्थान् दृंह वर्धय । दृह दृहि वृद्धौ । पृथिवीशब्दो ङीषन्तोन्तोदात्तः ॥

11 प्राचीनकर्णामौदुम्बरीम्मिनोति—द्युतानस्त्वेति द्विपदया विराजा जगत्या वा ॥ द्योतनशीलो द्युतानः । द्युतेस्ताच्छीलिकश्चानश् । 'बहुलं छन्दसि' इति शपो लुक् । यद्वा—'युधिबुधिदृशां किच्च' इति विधीयमान आनच्प्रत्ययो बहुलवचनाद्द्युतेरपि भवति । सर्वथा सार्वधातुकत्वाभावात् 'अनुदात्तेतः' इति लसार्वधातुकानुदात्तत्वस्याप्रवृत्तेः 'चितः' इत्यन्तोदात्तत्वमेव प्रवर्तते । हे औदुम्बरि द्युतानो मारुतस्त्वां मिनोतु अवटे प्रक्षिपतु; द्युताननामा वा मारुतस्त्वां मिनोतु । 'द्युतानो ह स्म वै'* इत्यादि ब्राह्मणम् । डु मिञ् प्रक्षेपणे, सौवादिकः । मरुच्छब्दात्प्रज्ञादित्वात् स्वार्थिकोण्प्रत्ययः । मित्रावरुणसम्बन्धिना ध्रुवेण नित्येन धर्मणा कर्मणा धारणेन वा त्वां मिनोतु । 'देवताद्वन्द्वे च' इति मित्रावरुणशब्दे पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । 'उदरं वै सदः'* इत्यादि ब्राह्मणम् ॥

---

*सं—६-२-१०.

वरुणयोर्ध्रुवेण धर्मणा ब्रह्मवनिं
त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ राय-
स्पोषवनिं पर्यूहामि ब्रह्म दृꣳह
क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं

[12]ब्रह्मवनिमिति ब्रह्म—वनिम् । त्वा । क्षत्रवनिमिति क्षत्र—वनिम् । सुप्रजावनिमिति सुप्रजा—वनिम् । रायस्पोषवनिमिति रायस्पोष—वनिम् । परीति । ऊहामि । [13]ब्रह्म । दृꣳह । क्षत्रम् । दृꣳह । प्रजामिति प्र—जाम् । दृꣳह । रायः । पोषम् ।

---

[12]पुरीषेणौदुम्बरीं प्रदक्षिणं पर्यूहति—ब्रह्मवनिमिति ॥ ब्रह्म ब्राह्मणान्वनति सम्भजत इति ब्रह्मवनिः । 'छन्दसि वनसनरक्षिमथाम्' इतीन्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् । एवं क्षत्रवनिं सुप्रजावनिं रायस्पोषवनिमिति । 'षष्ठ्या आक्रोशे' इत्यनाक्रोशेपि बहुलवचनात् षष्ठ्या अलुक्, 'षष्ठ्याः पतिपुत्र' इति विसर्जनीयस्य सत्वम् । एवंगुणां त्वामौदुम्बरीं परितस्सर्वत ऊहामि स्थापयामि, पुरीषेणावटं पूरयित्वा स्थिरां करोमीत्यर्थः । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति परस्मैपदम् ॥

[13]मैत्रावरुणदण्डेन संहन्ति—ब्रह्म दृंहेति ॥ हे मैत्रावरुणदण्ड ब्राह्मणादीन् दृंह वर्धय । प्रजाशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । रैशब्दात्परस्याः षष्ठ्याः 'ऊडिदम्' इत्यादिनोदात्तत्वम् ॥

दृꣳह घृतेन॑ द्यावापृथिवी आ पृ॑णेथा॒मिन्द्र॑स्य॒ सदो॑ऽसि विश्वज॒नस्य॑ छा॒या परि॑ त्वा गिर्वणो॒

दृꣳह । [14]घृतेन॑ । द्या॒वा॒पृ॒थि॒वी॒ इति॑ द्यावा–पृ॒थि॒वी॒ । एति॑ । पृ॒णे॒था॒म् । [15]इन्द्र॑स्य । सद॑ः । अ॒सि॒ । [16]वि॒श्व॒ज॒नस्येति॑ विश्व–ज॒नस्य॑ । छा॒या । [17]परीति॑ । त्वा॒ । गि॒र्व॒णः॒ । गिर॑ः । इ॒माः । भ॒व॒न्तु॒ ।

[14]औदुम्बरीविशाखयोर्मध्ये विशाखाग्रयोर्वा हिरण्यं निधाय स्रुवेणाभिजुहोति—घृतेनेति ॥ हे द्यावापृथिवीस्थानीये औदुम्बरीमूलाग्रे घृतेनात्मानमापृणेथां प्रीणयतम् । द्यावापृथिव्यावेव वा उदकेन प्रीणयतम् । 'द्यावापृथिवी एव रसेनानक्ति'* इति ब्राह्मणम् । पृणातेर्व्यत्ययेनात्मनेपदम् ॥

[15]मध्यमं छदिर्निदधाति—इन्द्रस्येति ॥ इन्द्रस्य सदः सदनं गृहं असि । 'ऐन्द्रं हि देवतया सदः'* इति ब्राह्मणम् ॥

[16]पार्श्वयोश्छदिर्निदधाति—विश्वजनस्येति ॥ विश्वजनस्य सर्वजनस्य छाया गृहमसि । 'विश्वजनस्य ह्येषा छाया'* इति ब्राह्मणम् । छायाशब्दो गृहनामसु निरुक्तकारैः पठ्यते ॥

[17]सदः परिश्रयति—परित्वेति चतुष्पदयानुष्टुभा ॥ इन्द्रदेवत्यत्वादिन्द्रत्वेन सद उच्यते । हे गिर्वणः गीर्भिः स्तुतिभिर्वन-

*सं—६-२-१०.

गिर॑ इ॒मा भ॑वन्तु वि॒श्वतो॑ वृ॒द्धायु॒मनु॑
वृ॒द्धयो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑य॒ इन्द्र॑स्य

वि॒श्वत॑ः । वृ॒द्धायु॒मिति॑ वृ॒द्ध—आ॒यु॒म् । अन्विति॑ । वृ॒द्ध॑यः । जुष्टा॑ः । भ॒व॒न्तु॒ । जुष्ट॑यः । [18] इन्द्र॑स्य ।

नीय सम्भजनीय । असुनन्तस्यामन्त्रितत्वादनुदात्तत्वम् । इमा वक्ष्यमाणास्स्तोत्रशस्त्रादिलक्षणा गिरः त्वां परिभवन्तु व्याप्नुवन्तु विश्वतस्सर्वतः । परिभवतिः व्याप्तिकर्मा । यद्वा—'लक्षणेत्थंभूताख्यान' इति भागे लक्षणे वा द्योत्ये परेः कर्मप्रवचनीयत्वम् । इमा गिरस्त्वां परिभवन्तु तव भागात्मना भवन्त्यस्त्वामेव भजन्तामिति यावत् । यत्र त्वं तत्र भवन्त्विति वा । किञ्च—वृद्धायुर्दीर्घायुः । 'छन्दसीणः' इत्युण्प्रत्ययान्तेन बहुव्रीहिः । ईदृशं त्वामनु वृद्धयस्समृद्धयो भवन्तु । अनोर्लक्षणे भागे वा कर्मप्रवचनीयत्वम् । यत्र त्वं तत्र समृद्धयो भवन्त्विति यावत् । त्वामेव भजन्तामिति वा । सदसि हि सर्वाः स्तुतयः क्रियन्ते सर्वाश्च समृद्धयस्सम्पद्यन्ते । अपि च जुष्टयस्सेवा अस्माभिः क्रियमाणास्तव जुष्टा इष्टा भवन्तु । 'नित्यं मन्त्रे' इति जुष्टशब्द आद्युदात्तः ॥

[18]दक्षिणद्वार्बाहौ कुशमुष्टिमुपनिगृह्य दर्भेण स्पन्द्यां प्रवर्तयति—इन्द्रस्येति ॥ 'विष्णोस्स्यूरसि'* इत्यनेनेदं व्याख्यातप्रायम् । सदस ऐन्द्रत्वादत्रैवमुच्यते ॥

*सं—१-२-१३.[13]

स्यूर॒सीन्द्र॑स्य ध्रु॒वम॑स्यै॒न्द्रम॒सीन्द्रा॑-
य त्वा ॥ २ ॥
र॒क्षो॒हणो॑ वल॒ग॒हनो॑ वैष्ण॒वान्

स्यूः । अ॒सि॒ । [19]इन्द्र॑स्य । ध्रु॒वम् । अ॒सि॒ ।
[20]ऐ॒न्द्रम् । अ॒सि॒ । इन्द्रा॑य । त्वा॒ । ॥ २ ॥

द्वेषं इ॒मा अ॒ष्टाद॑श च ॥ १ ॥

[1]र॒क्षो॒ह॒ण॒ इति॑ रक्षः॒—हनः॑ । व॒ल॒ग॒ह॒न॒ इति॑

---

[19]ग्रन्थिं करोति—इन्द्रस्येति ॥ इदमपि 'विष्णोर्ध्रुवमसि '* इत्यनेन व्याख्यातम् ॥

[20]सदोभिमृशति—ऐन्द्रमसीति ॥ इन्द्रो देवतास्य ऐन्द्रं त्वमसि । तादृशं त्वामिन्द्राय इन्द्रार्थमभिमृशामीति शेषः । 'ऐन्द्रं हि देवतया सदः '† इत्यादि ब्राह्मणम् । 'वैष्णवमसि विष्णवे त्वा '* इत्यनेन चेदं गतप्रायम् ॥

इति तृतीये प्रथमोनुवाकः.

---

[1]उपरवान्खनति पूर्वयोर्दक्षिणमेवाग्रे—रक्षोहण इति ॥ हन्तेः 'बहुलं छन्दसि ' इति क्विप्, 'एकाजुत्तरपदे णः ' इति

---

*सं. १-२-१३.[14—15] †सं. ६-२-१०.

खनामीदमहं तं वलगमुद्वपामि
यन्नस्समानो यमसमानो निचखा-

वलग-हनः । वैष्णवान् । खनामि । [2]इदम् ।
अहम् । तम् । वलगमिति वल-गम् । उदिति ।
वपामि । यम् । नः । समानः । यम् । असमानः ।

णत्वम् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्युपधालोपो न क्रियते । कृदुत्तरपदप्रकृतिस्वरत्वम् । वलो नामासुरमुख्यः, तद्गामिनस्तद्भृत्या वलगाः । यद्वा—वृणोतीति वलो मेघः । कपिलकादित्वाल्लत्वम् । स इव छादयन्तो ये गच्छन्ति ते वलगाः असुरविशेषाः । यद्वा—जीर्णकटपटादिखण्डसम्भृताः अस्थिनखरोम पादपांसुप्रभृतयः प्राणिनां मारणार्थं ये भूमौ निखन्यन्ते ते वलगाः । ते हि प्राणिनां बाधकतया वलगामिनो वलवल्लक्ष्या भवन्ति । 'अन्यत्रापि दृश्यते' इति गमेर्डः । तेषां हन्तारो वलगहनः । ईदृशान्विष्णुदेवत्यानुपरवान् खनामि । 'वैष्णवा हि देवतयोपरवाः'* इति ब्राह्मणम् । देवानां नासिकादिप्राणस्थानीया उपरवाः । 'शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवाः'* इति ब्राह्मणम् । ते च खन्यमाना रक्षांसि वलगांश्च निघ्नन्तीति । 'असुरा वै निर्यन्तः'* इति ब्राह्मणम् ॥

[2]पांसूनुद्वपति—इदमहमिति ॥ इदमिति क्रियाविशेषणम् । तं वलगमहमिदमुद्वपामि उद्धृत्य बहिः प्रक्षिपामि । कमित्याह—नः अस्माकं समानस्तुल्यः यं वलगं निचखान । 'तिङि चोदात्तवति'

*सं. ६-२-११.

नेदमेनमधरं करोमि यो नस्समा-
नो योसमानोरातीयति गायत्रेण

निचखानेति नि—चखान । इदम् । एनम् ।
अधरम् । करोमि । यः । नः । समानः । यः ।
असमानः । अरातीयति । गायत्रेण । छन्दसा ।
[3]अवबाढ इत्यव—बाढः । वलग इति वल—गः ।

इति गतेरनुदात्तत्वम्, 'उदात्तवता तिङा' इति समासः । यं चास्माकमसमानः अतुल्यः ऊनः उत्कृष्टो वा वलगं निचखान, तमुद्वपामीति । 'द्वौ वाव पुरुषौ यश्चैव समानो यश्चासमानः'* इत्यादि ब्राह्मणम् । किञ्च—एनमहमधरं अधोगतिं करोमि । इदमिति पूर्ववत्क्रियाविशेषणम् । कमित्याह—योस्माकं समानो यश्चासमानो जनः अरातीयति अरातिरिवाचरति । यद्वा—अस्मानरातीयति यस्समानोसमानो वा । 'उपमानादाचारे' इति क्यच् । गायत्रेण छन्दसा उद्वपामि । गायत्र्येव गायत्रम् । 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थे उपसङ्ख्यानम्' इत्यण्प्रत्ययः । एवं दक्षिणपूर्वमारभ्य सर्वेभ्य उद्वपति । त्रैष्टुभेन जागतेनानुष्टुभेनेति विशेषोन्यत्र ॥

[3]यजमानस्याधस्तात्पदपांसूनुद्वपति—अवबाढ इति ॥ यजमानस्य पादयोरधस्तात् बाढो बद्धो वलगोस्तु । बाढ प्रयत्ने, 'क्षुब्धस्वान्त' इत्यत्र निपातितः, 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

*सं. ६-२-११.

छन्द॒सार्वबाढो वल्ग॒ः किमत्र॑ भ॒द्रं
तन्नौ॑ स॒ह वि॒राड॑सि सपत्न॒हा
स॒म्राड॑सि भ्रातृव्य॒हा स्व॒राड॑स्य-
भिमाति॒हा विश्वा॒राड॑सि॒ विश्वा॑सा-

[4]किम् । अत्र॑ । [5]भ॒द्रम् । [6]तत् । नौ॒ । स॒ह । [7]वि॒राडिति॑ वि-राट् । अ॒सि॒ । स॒प॒त्न॒हेति॑ सपत्न-हा । [8]स॒म्राडिति॑ सं-राट् । अ॒सि॒ । भ्रा॒तृ॒व्य॒हेति॑ भ्रातृव्य-हा । [9]स्व॒राडिति॑ स्व-राट् । अ॒सि॒ । अ॒भि॒मा॒ति॒हेत्य॑भि-माति-हा । [10]वि॒श्वा॒राडिति॑ विश्व-राट् । अ॒सि॒ ।

[4]उपरवान्क्रमेणावमृशतोऽध्वर्युयजमानौ । ते चाधस्तात्संतृण्णाः । 'तस्मात्संतृण्णा अन्तरतः प्राणाः'* इति ब्राह्मणम् । बहिरसंतृण्णाः । 'न सम्भिनत्ति तस्मादसंभिन्नाः प्राणाः'* इति ब्राह्मणम् । पूर्वयोर्दक्षिणमेवाध्वर्युरवमृशत्युत्तरं यजमानः । अथ यजमानः पृच्छति—अध्वर्यो किमत्रेति ॥

[5]इतर आह—भद्रमिति ॥ भद्रं भजनीयं कल्याणम् । भदि कल्याणे, रन्प्रत्ययः, उपधालोपश्च ॥

[6]यजमान आह—तन्नौ सहेति ॥ तद्भद्रमावयोस्सहैवास्तु । अथाध्वर्युः पृच्छति—यजमान किमत्रेति । भद्रमित्यादि यथायथम् । एवं सर्वत्र ॥

[7—10]उपरवानभिमृशति सर्वानेवानुपूर्वं—विराडिति ॥ विविधं

*सं—६-२-११.

नाष्ट्राणाꣳ हन्ता ॥ ३ ॥ रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान्-

विश्वासाम् । नाष्ट्राणाम् । हन्ता ॥ ३ ॥ [11]रक्षो-हण इति रक्षः-हनः । वलगहन इति वलग-ह-

राजतीति विराट् । 'सत्सूद्विष' इति क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम् । सपत्नाश्शात्रवस्तेषां हन्ता । 'बहुलं छन्दसि' इति क्विप् । यस्मात्त्वं विविधं दीप्यसे तस्मात्सपत्नहा । सङ्गतं दीप्यत इति सम्राट् । 'मो राजि समः क्वौ' इति मस्य मः । यस्मादेवं तस्मात्त्वं भ्रातृव्यहा । भ्रातृव्यास्सपत्नाः । 'व्यन् सपत्ने' इति व्यन्प्रत्ययः । तेषां हन्ता बाह्याभ्यन्तरभेदेन नित्यानित्यभेदेन वा शत्रूणां पृथगभिधानम् । स्वायत्तं दीप्यस इति स्वराट् । यस्मादेवं तस्मात्त्वं अभिमातिहा । अभिमातिः पाप्मा । मन्यतेः क्तिनि नित्यमप्यनुनासिकलोपं बाधित्वा व्यत्ययेन 'अनुनासिकस्य क्विझलोः' इति दीर्घत्वम् । ततः 'अनुदात्तोपदेश' इत्यादिना-नुनासिकलोपः । तस्या हन्ता । महाबलेन हि पाप्मा निहन्तुं शक्यते । विश्वेषु लोकेषु राजतीति विश्वाराट् । 'विश्वस्य वसुराटोः' इति दीर्घः । यस्मादेवं तस्माद्विश्वासां नाष्ट्राणां नाशयितॄणां दैवादिप्रवृत्तीनां हन्ता नाशयिता त्वमसि । नशेर्ण्य-न्तात् 'दादिभ्यश्छन्दसि' इति त्रन्प्रत्ययः, 'तितुत्रतथ' इती-ट्प्रतिषेधः, णिलोपे उदात्तनिवृत्तिस्वरेण त्रन उदात्तत्वम्, 'व्रश्च' इत्यादिना षत्वम् ॥

[11]उपरवान्प्रोक्षति—रक्षोहण इति ॥ युष्मान् प्रोक्षामीति सम्बन्धः ॥

क्षोहणों वलगहनोवं नयामि वैष्ण-
वान् यवोंसि यवयास्मद्द्वेषों यवया-
रांती रक्षोहणों वलगहनोवं स्तृणा-

नः । प्रेति । उक्षामि । वैष्णवान् । [12]रक्षोहण इति रक्षः-हनः । वलगहन इति वलग-हनः । अवेति । नयामि । वैष्णवान् । [13]यवः । असि । यवयं । अस्मत् । द्वेषः । यवयं । अरातीः । [14]रक्षोहण इति रक्षः-हनः । वलगहन इति वलग-हनः । अवेति । स्तृणामि । वैष्णवान् ।

---

[12]उपरवेष्वपोवनयति—रक्षोहण इति ॥ एवंविधान् युष्मान्, अधस्तादपोवनयामि प्रापयामि अद्भिस्संयोजयामि । अवनयतिस्वभावादद्भिरेव गम्यते । नयतेश्च द्विकर्मकत्वाद्युष्मानपोवनयामीति भवति, युष्मास्वपोवनयामीति यावत्; यथा—'अजां नयति ग्रामम्' इति । 'तस्मादार्द्रा अन्तरतः प्राणाः'* इति ब्राह्मणम् ॥

[13]तेषु यवान्प्रस्कन्दयति—यवोसीति ॥ व्याख्यातम्† । 'प्राणेष्वेवोर्जं दधाति'* इति ब्राह्मणम् ॥

[14]उपरवान् बर्हिषावस्तृणाति—रक्षोहण इति ॥ युष्मानवस्तृणामीत्यधस्ताच्छादयामीत्यर्थः । शिष्टं स्पष्टम् । 'तस्माल्लोमशा अन्तरतः प्राणाः'* इति ब्राह्मणम् ॥

---

*सं. ६-२-११. †सं—१-१-१४.

मि वैष्ण॒वान्र॑क्षो॒हणो॑ वलग॒हनो॒भि जु॑होमि वैष्ण॒वान्र॑क्षो॒हणौ॑ वलग॒ह- ना॒वुप॑ दधा॒मि वैष्ण॒वी र॑क्षो॒हणौ॑

[15]र॒क्षो॒हण॒ इति॑ रक्षः-हनः॑ । व॒ल॒ग॒हन॒ इति॑ वल- ग-हनः॑ । अ॒भीति॑ । जु॒हो॒मि॒ । वै॒ष्ण॒वान् । [16]र॒क्षो॒- ह॒णा॒विति॑ रक्षः-हनौ॑ । व॒ल॒ग॒ह॒ना॒विति॑ वलग- हनौ॑ । उपेति॑ । द॒धा॒मि॒ । वै॒ष्ण॒वी इति॑ । [17]र॒क्षो॒- ह॒णा॒विति॑ रक्षः-हनौ॑ । व॒ल॒ग॒ह॒ना॒विति॑ वलग-

---

[15]हिरण्यमन्तर्धाय स्रुवाहुत्या उपरवानभिजुहोति—रक्षोहण इति ॥ युष्मानभिजुहोमीति युष्मानाज्येन व्याघारयामीति । 'प्राणेष्वेव तेजो दधाति '* इति ब्राह्मणम् ॥

[16]अधिषवणफलके उपदधाति—रक्षोहणाविति ॥ एवंगुणे युवामुपदधामीति । वैष्णवी वैष्णव्यौ । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । 'हनू ( एते यज्ञस्य यदधिषवणे '* इत्यादि ब्राह्मणम् ॥

[17]अधिषवणफलके प्रदक्षिणं पुरीषेण पर्यूहति—रक्षोहणाविति ॥ युवां पर्यूहामीति पुरीषेण परितः पूरयित्वा द्रढयामीति । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति परस्मैपदम् ॥

---

*सं. ६-२-११.

वलगहनौ पर्यूहामि वैष्णवी रक्षो-
हणौ वलगहनौ परि स्तृणामि
वैष्णवी रक्षोहणौ वलगहनौ वैष्ण-

हनौ । परीति । ऊहामि । वैष्णवी इति । [18]रक्षो-
हणाविति रक्षः-हनौ । वलगहनाविति वलग-
हनौ । परीति । स्तृणामि । वैष्णवी इति । [19]रक्षो-
हणाविति रक्षः-हनौ । वलगहनाविति वलग-
हनौ । वैष्णवी इति । [20]बृहन् । असि । बृहद्ग्रावेति

---

[18]एते बर्हिषा परिस्तृणाति—रक्षोहणाविति ॥ युवां परिस्तृ-
णामीति ॥

[19]एते अभिमृशति—रक्षोहणौ वलगहनौ वैष्णवी इति ॥

[20]फलके ग्राव्णोद्वादयति—बृहन्निति ॥ हे ग्रावन् बृहन्महा-
नसि वीर्येण । शतृवद्भावात् 'उगिदचाम्' इति नुम् । न परं
वीर्येण, अपि तु शरीरेणापि बृहन्नसीत्याह—बृहद्ग्रावा महा-
पाषाणः । अवयवभूता ग्रावाणोपि गृह्यन्ते । यद्वा—गृणन्तीति
ग्रावाणः शब्दकारिणोवयवाः, बृहन्तो ग्रावाणो यस्य । गॄ
निगरणे, क्वनिप्, आडागमः । यस्मादेवं तस्मादिन्द्रार्थं बृहतीं
वाचं वद, यथेन्द्र इमां वाचं श्रुत्वा आगच्छति । शतृवद्भा-
वात् 'उगितश्च' इति ङीप् । 'बृहन्महतोरुपसङ्ख्यानम्' इति
नद्या उदात्तत्वम् । 'शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा

वी बृहन्नंसि बृहद्ग्रांवा बृहतीमिन्द्रा-
य वाचं वद ॥ ४ ॥
विभूरंसि प्रवाहंणो वह्निरसि हव्य-

बृहत्-ग्रावा । बृहतीम् । इन्द्राय । वाचम् ।
वद ॥ ४ ॥

हन्तेन्द्राय द्वे चं ॥ २ ॥

[1]विभूरिति वि-भूः । असि । प्रवाहंण इति

---

उपरवा हनू अधिषवणे जिह्वा चर्म ग्रावाणो दन्ताः' *इत्यादि ब्राह्मणम् । एतदुक्तं भवति—शिरस्स्थानीये हविर्धाने प्राणस्थानीयेषूपरवेषु हनूस्थानीयाभ्यामधिषवणफलकाभ्यां परिगृहीते जिह्वास्थानीये चर्मणि दन्तस्थानीयैः ग्रावभिः खादनस्थानीयमभिषवं कृत्वा मुखस्थानीये आहवनीये हुत्वा प्रत्यग्गत्वा उदरस्थानीये सदसि भक्षयन्तीति । 'यो वै विराजो यज्ञमुखे'* इत्यादि च ॥

इति तृतीये द्वितीयोनुवाकः.

---

[1]अथ धिष्ण्यनिवपनमन्त्राः । 'चात्वालाद्धिष्णियानुपवपति'† इत्यादि ब्राह्मणम् । तत्राग्नीध्रीयादयोष्टौ न्युप्यन्ते । आहवनीयादयोष्टावनुदिश्यन्ते । 'न्यन्ये धिष्णिया उप्यन्ते नान्ये'†

---

*सं. ६-२-११. †सं. ६-३-१.

इत्यादि ब्राह्मणम् । तत्राग्नीध्रीयं निवपति चात्वालात्पुरीषं सिकता इति गृहीत्वा परिमण्डलं धिष्ण्यं करोति—विभूरिति ॥

'रौद्रेणानीकेन' इत्यादि सर्वत्रानुषज्यते । आधेयाग्निधर्मा आधारेषूपचर्यन्ते । विविधं भवितासीति विभूः । 'आग्नीध्राद्धिष्णियान्विहरति'* इति सर्वधिष्ण्यादित्वाद्विभूरित्युच्यते । 'भुवस्संज्ञान्तरयोः' इति क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम् । यत एवंविधोऽसि तस्मात्प्रवाहणस्त्वं प्रकर्षेण हविषां वाहयिता स्वात्मनान्यैश्च धिष्ण्याधारैरग्निभिः । वहतेर्ण्यन्ताद्बहुलवचनात्कर्तरि करणे वा ल्युट्, कृदुत्तरपदप्रकृतिस्वरत्वम्, 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्, 'कृत्यचः' इति णत्वम् । यद्वा—वाहृ प्रयत्ने, तस्माल्ल्युट् । यज्ञार्थं प्रकर्षेण व्याप्रियमाण इति यावत् । रौद्रेण क्रूरेण अनीकेन सैन्येन । रौद्रमिव रौद्रम् । यथा रौद्रगणः क्रूरो भवति एवमन्यदपि यत्क्रूरं तद्रौद्रम् । 'संज्ञायां च' इत्युत्पन्नस्य कनः देवपथादित्वाल्लुप्, 'संज्ञायामुपमानम्' इत्याद्युदात्तत्वम् । 'स्फिगन्तस्योपमेयनामधेयस्य' इति वा । हे अग्ने अग्न्याधार मां पाहि रक्ष, पिपृहि पूरय च मां कामैः । पॄ पालनपूरणयोः अनुदात्त उदात्तेत् जुहोत्यादिकः, 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । यद्वा—पिपृहि तृप्य अस्मासु सानुग्रहो भव । पृ प्रीतौ भौ[सौ ?]वादिकः उदात्तेत्, 'बहुलं छन्दसि' इति शपश्श्लुः, 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । मा च मा हिंसीः । अत्र 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते, अपदात्परत्वाद्द्वितीया न निहन्यते, तृतीया तु निहन्यत एव ॥

---

*सं—६-३-१.

वाहनश्श्वात्रोसि प्रचेतास्तुथोसि

प्र–वाहनः । [2]वह्निः । असि । हव्यवाहन इति हव्य–वाहनः । [3]श्वात्रः । असि । प्रचेता इति प्र–चेताः । [4]तुथः । असि । विश्ववेदा इति विश्व–

[2]होतुर्धिष्ण्यं निवपति—वह्निरसीति ॥ वहतिरावाहने वर्तते । 'वहिश्रि' इत्यादिना निप्रत्ययः; तत्र हि निदित्युच्यते । वह्निरसि देवानामावाहकोसि, आह्वातासीति यावत् । आहूय तेभ्यो हव्यानां हविषां वोढा प्रापयिता चासि । 'हव्येऽनन्तः पादम्' इति ञ्युट्, कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[3]मैत्रावरुणस्य धिष्ण्यं निवपति—श्वात्रोसीति ॥ आशुशब्दस्य पूर्वापरवर्णविपर्ययः; आशु त्राता श्वात्रः । मित्रमेव तथा करोति । 'आतोनुपसर्गे कः' इति कः क्रियाविशेषणानामपि कर्मत्वात्, थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । यद्वा—आशु सर्वदा गच्छतीति श्वात्रः । मित्रमेव तथा करोति । सर्वथा व्युत्पत्त्यनवधारणान्नावगृह्यते । अत सातत्यगमने, 'दादिभ्यश्छन्दसि' इति त्रन्प्रत्ययः, 'त्रिचक्रादीनामन्तः' इत्यन्तोदात्तत्वम्, 'तितुत्र' इतीड्प्रतिषेधः । प्रकृष्टश्चेतयतीति प्रचेताः । चिती संज्ञाने, 'गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वं च' इति तस्मादसुन्प्रत्ययः, पूर्वपदप्रकृतिस्वरत्वं च । प्रचेता वरुणः । एवं मित्रावरुणसम्बन्धिनो मैत्रावरुणस्य धिष्ण्यं ताभ्यामभेदेन स्तूयते ॥

[4]ब्राह्मणाच्छंसिनो धिष्ण्यं निवपति—तुथोसीति ॥ तुथो-नामाग्निः दक्षिणाविभागकृत् । 'तुथो ह स्म वै विश्ववेदा

विश्ववेदा उशिगसि कविरङ्घारि-

वेदाः । [5]उशिक् । असि । कविः । [6]अङ्घारिः । असि ।

देवानां दक्षिणा विभजति '* इति ब्राह्मणे तुथः प्रसिद्धः । स एव त्वमसीति स्तूयते विभागसामर्थ्यं प्रकटयितुम् । अयमपि हि ब्राह्मणानि विभज्य शंसति । तु इति सौत्रो धातुः वृद्धिकर्मा, 'पातृतुदि' इत्यादिना पिबत्यादिभ्यो विधीयमानः स्थक्प्रत्ययो बहुलवचनादस्मादपि भवति । महानित्यर्थः । यद्वा—स्तौतेस्स्थक्याद्यवर्णलोपः; यथोक्तम्—'द्वौ चापरौ वर्णविकारनाशौ' इति । स्तुत्य इत्यर्थः । विश्वं वेत्ति विन्दतीति वा विश्ववेदाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति कारकपूर्वादसुन्प्रत्ययः, तत्र पूर्वपदप्रकृतिस्वरग्रहणस्य बहुव्रीहिस्वरस्योपलक्षणत्वात् 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । सर्वधनो वा ॥

[5]पोतुर्धिष्ण्यं निवपति—उशिगसीति ॥ पोतारौ देवकवी । यथा—'मन्द्रा पोतारा कवी प्रचेतसा'† इति । अतोस्यापि तद्रूपेण स्तुतिः । उशिक् कमनीयः स्पृहणीयः । वश कान्तौ, 'वशः किच्च' इतीजिप्रत्ययः । कविः क्रान्तदर्शनः सूक्तिमार्गाणां द्रष्टा । कु शब्दे, 'अच इः' इतीप्रत्ययः ॥

[6]नेष्टुर्धिष्ण्यं निवपति—अङ्घारिरिति ॥ द्वावेतावग्निविशेषौ । यथा—'स्वान भ्राजाङ्घारे बम्भारे'‡ इति । तावत्र स्तूयेते । अङ्घमानाः स्वमार्गप्रच्युता अरयो यस्य सोङ्घारिः । अङ्घमाना-

*सं. ६-६-१. †ब्रा. ३-६-२. ‡सं. १-२-७[10]

रसि बम्भारिरवस्युरसि दुवस्वा-
ञ्छुन्ध्यूरसि मार्जालीयस्सम्राडसि

बम्भारिः। [7]अवस्युः। असि। दुवस्वान्। [8]शुन्ध्यूः।

---

रिरङ्गारिः, शानचो लोपः । यद्वा—पचाद्यजन्तस्समस्यते । एवं बम्भ्रम्यमाणारिर्बम्भारिः । भ्रमेर्यङ्लुगन्तात्पचाद्यच्, रेफमकारयोर्लोपः । विनष्टैश्वर्यतया व्याकुलत्वं बम्भ्रम्यमाणत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्, 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः । अस्मिन्पक्षे वृषादित्वात्पूर्वपदस्याद्युदात्तत्वं द्रष्टव्यम् । यद्वा—बम्भ्रमदरिर्बम्भारिः इति शत्रन्तस्समस्यते, स च 'अभ्यस्तानामादिः' इति आद्युदात्तः ॥

[7]अच्छावाकस्य धिष्ण्यं निवपति—अवस्युरिति ॥ वातविशेषवचनावेतौ । यथा 'अवस्यवे त्वा वाताय स्वाहा । दुवस्वते त्वा वाताय स्वाहा '* इति । तत्सम्बन्धित्वेनास्य स्तुतिः । अव रक्षणे, अवतेरसुन्प्रत्ययः, तदिच्छति सर्वेषामिति 'छन्दसि परेच्छायामपि' इति क्यचि 'क्याच्छन्दसि' इत्युप्रत्ययः । दुवस्यतिः परिचारकर्मा । कण्ड्वादिः, प्रातिपदिकत्वपक्षे 'तदस्यास्त्यस्मिन्' इति मतुप् । परिचरणवान् सर्वैः परिचर्य इत्यर्थः । वृषादित्वादाद्युदात्तत्वम् । निपातो वायं द्रष्टव्यः ॥

[8]मार्जालीयं निवपति—शुन्ध्यूरिति ॥ शुन्ध्यूः शोधयिता, पात्रप्रक्षाळनस्थानत्वात् । 'यजिमनिशुन्धि' इत्यादिना युच्प्र-

---

*तै. आ. ४-९.

कृशानुः परिषद्यो॑ऽसि पव॑मानः

असि । मार्जालीयः । [9]सम्राडिति सं-राट् । असि । कृशानुरिति कृश-अनुः । [10]परिषद्य इति परि-सद्यः । असि । पव॑मानः ।

---

त्ययः । वर्णव्यत्ययेन दीर्घत्वम् । मृज्यन्ते पात्राणीति मार्जालीयः । 'स्थाचतिमृजेरालज्वालयालीयचः' इत्यालीयच्प्रत्ययः, 'उपोत्तमं रिति' इत्युपोत्तमस्योदात्तत्वम् । त्वयि कृतमार्जनानां पात्राणां शोधयितासीत्यर्थः । एवमष्टौ न्युप्यन्ते ॥

[9]अथाष्टावनुदिश्यन्तेनुक्रमेण सङ्कीर्त्यन्ते उपतिष्ठमानेन । आहवनीयमुपतिष्ठते—सम्राडिति ॥ सम्यग्राजतीति सम्राट् । 'सत्सूद्विष' इत्यादिना क्विप्, 'मो राजि समः क्वौ' इति मकारः, कृदुत्तरपदप्रकृतिस्वरत्वम् । कृशा अल्पा अनवः प्राणिनो यस्मिन् स कृशानुः, यस्मिन्सम्यग्राजति सर्वे प्राणिनः स्वल्पवीर्यशरीरैश्वर्या भवन्ति तादृशोसीत्यर्थः । कृश अल्पीभावे, इगुपधलक्षणः कः । भूमृशीप्रभृतिभ्यो विधीयमान उप्रत्ययो बहुलवचनादनितेरपि भवति ॥

[10]आस्तावमुपतिष्ठते—परिषद्योसीति ॥ परितस्सीदन्त्यस्मिन्निति परिषद्यः । 'शकि सहोश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वात् 'कृत्यल्युटो बहुलम्' इति बहुलवचनाद्वा अधिकरणे यत्प्रत्ययः, 'सदिरप्रतेः' इति षत्वम्, कृदुत्तरपदप्रकृतिस्वरत्वम्, 'यतोऽनावः' इत्याद्युदात्तत्वम् । पवमानश्शोधनं कुर्वन् । 'पूङ्यजोश्शानन्' इति शानन्प्रत्ययः, पूङ् पवने भौवादिकः । बहिष्पवमानसम्बन्धाद्वा पवमान इत्युच्यते ॥

प्रतक्वा॑सि॒ नभ॑स्वा॒नसं॑म्मृष्टोसि
हव्य॒सूद॑ ऋ॒तधा॑मासि॒ सुव॑ज्र्यो॒ति॒-

[11]प्रतक्वेति॒ प्र-त॒क्वा॑ । अ॒सि॒ । नभ॑स्वान् । [12]अस॑-
म्मृष्ट॒ इत्यसं॑-मृ॒ष्टः॒ । अ॒सि॒ । ह॒व्य॒सू॒द॒ इति॑ ह॒व्य॒-
सू॒दः॒ । [13]ऋ॒तधा॒मेत्यृ॒त-धा॒मा । अ॒सि॒ । सुव॑ज्र्यो

[11]चात्वालमुपतिष्ठते—प्रतक्वेति ॥ तकतिर्गतिकर्मा । प्रकृष्टं गतिर्गमनं प्रतक् । तत्र हि ऋत्विग्यजमाना बर्हि*र्मार्जनार्थं गच्छन्ति । तदस्यास्तीति प्रतक्वा । 'छन्दसीवनिपौ' इति वनिप् प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा—प्रकर्षेण गच्छन्ति ऋत्विग्यजमाना इति प्रतक्वा । 'अन्येभ्योपि दृश्यन्ते' इति वनिप्प्रत्ययः । नभस्वान् उद्धृतपुरीषत्वेनावकाशवान् ॥

[12]पशुश्रपणमुपतिष्ठते—असम्मृष्ट इति ॥ असम्मृष्टः अविनाशितः । मृश आमर्शने, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । रक्षःप्रभृतिभिरपरामृष्टोसीति यावत् । हव्यानां हृदयादीनां सूदः पाचकः । षूद क्षरणे, पाकविशेषः क्षरणम्, कर्मण्यण्, 'कूलसूदस्थलकर्षाःसंज्ञायाम्' इत्युत्तरपदाद्युदात्तत्वम् ॥

[13]सदसो द्वारि तिष्ठन्नौदुम्बरीमुपतिष्ठते—ऋतधामेति ॥ ऋतं सत्यं यज्ञो वा तत् धाम स्थानं यस्यास्सा ऋतधामा । यद्वा—ऋतं साम तद्धाम यस्याः, तन्मूले हि साम गीयते, 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ऋतशब्दो

*क-हवि.

ब्र॒ह्म॒ज्योति॑रसि सु॒व॑र्धा॒मा॒जो॑ऽस्येक॑-

ति॒रिति॑ सुवः॑—ज्योति॑ः । [14]ब्र॒ह्म॒ज्योति॑रि॒ति॑ ब्र॒ह्म॑—
ज्योति॑ः । अ॒सि । सु॒व॑र्धा॒मेति॑ सु॒वः॑—धा॒मा । [15]अ॒जः ।

निष्ठान्तोन्तोदात्तः । सुवः स्वर्ग आदित्यो वा । तत्रस्थं ज्योतिर्दीप्तिः यस्यास्सा सुवर्ज्योतिः, उच्छ्रितत्वात् । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वाचोत्तरपदलोपश्च' इति समासः । 'न्यङ्स्वरौ स्वरितौ' इति स्वश्शब्दस्स्वर्यते ॥

[14]ब्रह्मसदनमुपतिष्ठते—ब्रह्मज्योतिरिति ॥ ब्रह्म ज्योतिर्दीप्तिर्यस्य स ब्रह्मज्योतिः धिष्ण्यः । 'बृंहेर्नलोपश्च' इति मन्प्रत्ययान्तो ब्रह्मशब्दः । यद्वा—द्योतत इति ज्योतिः । 'द्युतेरिसिन्नादेश्च जः' इतीसिन्प्रत्ययः । द्योतमानो ब्रह्मा यत्र स ब्रह्मज्योतिर्द्योतमानब्रह्मेति यावत् । आहिताग्न्यादित्वात्परनिपातः । ब्रह्मसदने हि ब्रह्मा द्योतते । स्वर्गाव*स्थानमिवावस्थानं यस्मिन् स सुवर्धामा । उपमानपूर्वपदस्य बहुव्रीहिसमासः । यद्वा—सुष्ठु अर्यते गम्यत इति स्वः । अर्तेर्विच्चि गतिसमासः । सुखमुच्यते, सुखनामसु हि 'सुवः सुखम्' इति निरुक्तकाराः पठन्ति । सुखं धाम स्थानं यत्र तादृशं, तत्र हि ब्रह्मा सुखमास्ते ॥

[15]अत्रैव तिष्ठन् गार्हपत्यमुपतिष्ठते—अजोसीति ॥ जायन्ते उत्पद्यन्तेस्मादाहवनीयादय इत्यजः । 'जनेर्डश्च' इति† जनेर्डप्रत्ययः, टिलोपः, धातोश्चाडागमः । यद्वा—न जायत इत्यजः,

*तं—सुवः स्वर्ग इव धाम. †क—हे ढो द्वेति. तं—'जनेर्डोड्वा' इति.

पादहिरसि बुध्नियो रौद्रेणानीकेन

असि । एकंपादित्येकं—पात् । [16]अहिः । असि ।

नित्य इति यावत् । 'अन्येष्वपि दृश्यते' इति डः, न ञ्युपपदत्वात्कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा—अजन्ति गच्छन्त्यस्मादाहवनीयादय इत्यजः । अज गतिक्षेपणयोः, 'घञर्थे कविधानम्' इति कः, बहुलवचनाद्विभावाभावः । ण्यन्ताद्वा पचाद्यच्, 'बहुलं संज्ञाच्छन्दसोः' इति णिलुक् । आहवनीयादीनां गमयिता अजः । एकः पादोस्येत्येकपात् । 'सङ्ख्यासुपूर्वस्य' इत्यन्तलोपस्समासान्तः, पूर्वपदप्रकृतिस्वरत्वम्, 'इण्भीकापा' इत्यादिना कन्प्रत्ययान्त एकशब्दः । एको ह्यस्य पादो देवानां यष्टा देवयण्णामा, यथोक्तम्—'आ देवयजं वह'* इति । पद्यते प्रतिपद्यते हवींषीति पादः । 'पदरुजविशस्पृशो घञ्' इति घञ् । अग्नेरंशाः पादाः 'अपाग्नेग्निमामादं जहि निष्क्रव्यादं सेधा देवयजं वह'* इत्यंशान्तरनिवारणात् हव्यानां वोढुरेकपात्त्वम् ॥

[16]पुराणगार्हपत्यमुपतिष्ठते, यं प्रहास्यन्तो भवन्ति—अहिरसीति॥ आगत्य हन्तीत्यहिः, अयं खल्वग्निस्स्वकार्यं प्रत्यागत्य तद्विरोधिनमामादं हन्ति । यथा 'अपाग्नेग्निमामादं जहि'* इति । 'आङि श्रिहनिभ्यां ह्रस्वश्च' इतीञ्प्रत्ययः, स च डित्, 'उदात्तश्च' इत्यनुवृत्तेः कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा आङ उदात्तत्वं ह्रस्वत्वं च । अहिरसि यजमानस्याभिमतसम्पादनाय तावदागच्छसि, तद्विरोधिनश्च हन्सीत्यर्थः । यद्वा—न हन्तीत्यहिः, अहिंसकोसी-

*सं. १-१-७[2]—४

पाहि माग्ने पिपृहि मा मा मा
हिꣳसीः ॥ ५ ॥
त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योन्य-

बुध्नियः । रौद्रेण । अनीकेन । पाहि । मा । अग्ने । पिपृहि । मा । मा । मा । हिꣳसीः ॥ ५ ॥

अनीकेनाष्टौ च ॥ ३ ॥

[1]त्वम् । सोम । तनूकृद्भ्य इति तनूकृत्-भ्यः ।

---

त्यर्थः । केवलादेव हन्तेर्बहुलवचनादयमिन्प्रत्ययः डिच्च । अहिरहन्ता । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बुध्नं मूलकारणं सर्वकर्मणाम् । स्वार्थे यत्, छान्दस इकारोपजनः । यद्वा—बुद्धिर्बुध्नं, तत्र भवो बुध्न्यः, सर्वदा श्रद्धावतां हृद्गतोसीत्यर्थः । 'भवे छन्दसि' इति यत्, 'यतोऽनावः' इत्याद्युदात्तत्वं बाधित्वा व्यत्ययेन 'तित्स्वरितम्' इति स्वरितत्वम् । रौद्रेणेत्यादि व्याख्यातं* सर्वत्रानुषज्यते ॥

इति तृतीये तृतीयोनुवाकः.

---

[1]स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये वैसर्जनं जुहोति—त्वं सोमेति यजुरन्तया त्रिपदया गायत्र्या ॥ तनूश्शरीरम् । 'कृषिचमि' इत्यादिना ऊप्रत्ययः । तां कृन्तन्ति छिन्दन्तीति तनूकृन्ति । 'क्विप्च' इति क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम् ।

---

*सं. १-३-३.[1]

कृतेभ्य उरु यन्तासि वरूथꣳ

द्वेषोभ्य इति द्वेषः-भ्यः । अन्यकृतेभ्य इत्यन्य-कृतेभ्यः । उरु । यन्ता । असि । वरूथम् । स्वाहा ।

द्विषन्तीति द्वेषांसि । अन्यैर्दुरात्मभिरभिचारादिप्रवृत्तैः कृतान्यन्यकृतानि । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । यानि शरीरमपि नाशयन्ति तेभ्यो रक्षःप्रभृतिभ्यो यन्ता तत्पीडापगमद्वारेण रक्षकः । हे सोम ईदृशस्त्वमेव खलु नः उरु महत्वरूथं गृहं धनं वा, वरणीयत्वात् । 'जृवृभ्यामूथन्' इत्यूथन्प्रत्ययः । धनानि लिप्समानो हि स्तुत्यं तद्रूपेण स्तौति ; तस्मान्महद्धनं मे देहीतिभावः । 'उरुणस्कृधीति वावैतदाह'* इति ब्राह्मणम् । ईदृशाय तुभ्यं स्वाहा सुहुतमिदमस्त्विति प्रदानार्थो निपातः । कथमत्र 'तनूकृद्धचेषः'* इति ब्राह्मणमुपपद्यते ? उच्यते—तनूकृतामपि रक्षःप्रभृतीनामेष हि तनूकृत् ; तस्मात्किमनेन कर्तुं न शक्यत इति प्रतिपाद्यते । यद्वा—करोतेरेव क्विप् । तत्र हि बहवस्तनूकृतश्शरीरस्योत्पादयितारः । प्रजानां पिता रेतस्सिञ्चति प्रजनने । सोमस्सिक्तं रेतो दधाति, यथा—'सोमो वै रेतोधाः'† इति । त्वष्टा वै रेतसस्सिक्तस्य रूपाणि विकरोतीति । अयमर्थः—हे सोम त्वं खलु तनूकृद्भ्योपि तनूकृतोनुप्रविश्य स्थितोसि । अत्र प्रासादात्प्रेक्षत इतिवल्ल्यब्लोपे कर्मणि पञ्चमी । त्वमपि तनूकृतां मध्ये कश्चिदेक इत्यर्थः । यद्वा—'सुपां सुपो भवन्ति' इति सोर्भ्यसादेशः, यथा—'तनूकृद्धचेषः'* इति ब्राह्मणम् । यस्मादेवं तस्मादन्यै-

*सं—६-३-२. †सं—२-१-१.

स्वाहा जुषाणो अप्तुराज्यस्य वेतु स्वाहायन्नो अग्निर्वरिवः कृणोत्व-

[2]जुषाणः। अप्तुः। आज्यस्य। वेतु। स्वाहा। [3]अयम्। नः। अग्निः। वरिवः। कृणोतु। अयम्। मृधः।

युष्मद्व्यतिरिक्तैः दुरात्मभिः कृतानि यानि द्वेषांसि युष्मत्कृततनूविरोधीनि ज्वरादीनि व्यसनानि तेभ्यो यन्ता त्वमेवा*स्माकमुरु वरूथमिति। 'सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि'† इत्यादि ब्राह्मणम्॥

[2]अवान्तरदीक्षां विसृज्य स्रुवेणाप्तुं प्रस्कन्दयति—जुषाण इति विराजा यजुरन्तया एकपदया॥ अप्तुः बिन्दुः। विभक्तिव्यत्ययः। आज्यस्याप्तुं वेतु पिबतु। कः? जुषाणः प्रीयमाणः। ताच्छीलिकश्चानश्, 'बहुलं छन्दसि' इति शं बाधित्वा शपो लुक्, लसार्वधातुकानुदात्तत्वाभावात् 'चितः' इत्यन्तोदात्तत्वम्। यद्वा—आप्तव्योप्तुः। 'आप्नोतेर्ह्रस्वश्च' इत्याप्नोतेस्तुप्रत्ययः। आप्तव्योयं सोमः प्रीयमाण आज्यस्य वेतु पिबतु। 'क्रियाग्रहणं कर्तव्यम्' इत्याज्यस्य सम्प्रदानत्वम्, 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी। 'देवान्वै सुवर्गं लोकं यतो रक्षांस्यजिघांसन्'† इत्यादि ब्राह्मणम्। स्वाहेति पूर्ववत्॥

[3]पूर्वया द्वारा शालाया उपनिष्क्रामति—अयं न इति चतुष्पदया त्रिष्टुभा॥ अयमग्नीषोमाख्यः प्रणीयमानोग्निर्वरिवः कृणोतु अभीष्टानि धनानि ददातु। कृवि हिंसाकरणयोः, 'धिन्वि-

*ख. ग.—त्वमेवम. †सं—६-३-२.

यं मृधः पुर एतु प्रभिन्दन्न् । अयꣳ
शत्रूञ्जयतु जर्हृषाणोयं वाजं जय-
तु वाजसातौ । उरु विष्णो वि
क्रमस्वोरु क्षयाय नः कृधि । घृतं

पुरः । एतु । प्रभिन्दन्निति प्र-भिन्दन्न् । अयम् ।
शत्रून् । जयतु । जर्हृषाणः । अयम् । वाजम् ।
जयतु । वाजसाताविति वाज-सातौ । [4] उरु ।
विष्णो इति । वीति । क्रमस्व । उरु । क्षयाय ।

कृण्व्योरच' इत्युप्रत्ययः । किञ्च—अयं मृधस्सङ्ग्रामान् प्रभिन्दन् प्रकर्षेण विनाशयन् पुरोग्रत एतु गच्छतु । ततश्चायमग्निरस्माकं शत्रून् जयतु । जर्हृषाणः जयेन भृशं हृष्टान्तःकरणः । हृषेर्यङ्लुगन्ताद्व्यत्ययेनात्मनेपदम्, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । किञ्च—अयमग्निर्वाजमन्नं जयतु अस्मदर्थमात्मवशं करोतु। क्व? वाजसातौ । 'ऊतियूति' इत्यादिना निपातनात् सनोतेः कर्मणि क्तिन्, 'जनसन' इत्यात्वम् । वाजो लभ्यते यस्मिन् तस्मिन् वाजसातौ* सङ्ग्रामे वाजं जयतु । वाजशब्दो वृषादित्वादाद्युदात्तः ॥

[4]आहवनीये स्रुवाहुतिं जुहोति—उरु विष्णो इति चतुष्पदयानुष्टुभा ॥ हे अग्ने विष्णो व्यापक । 'विषेः किच्च' इति नुप्रत्ययः । उरु विक्रमस्व महाविक्रमो भव सर्वत्राप्रतिहतो

*ग—वाजार्थे.

घृतयोने पिब प्रप्र यज्ञपतिं तिर ।
सोमो जिगाति गातुवित् ॥ ६ ॥

नः । कृधि । घृतम् । घृतयोन इति घृत-योने । पिब । प्रप्रेति प्र-प्र । यज्ञपतिमिति यज्ञ-पतिम् । तिर । [5]सोमः । जिगाति । गातुविदिति गातु-

भव । 'वृत्तिसर्गतायनेषु क्रमः' इत्यात्मनेपदम् । किञ्च—नः अस्माकं क्षयाय निवासाय निवासस्य । 'षष्ठ्यर्थे चतुर्थी वक्तव्या', 'क्षयो निवासे' इत्याद्युदात्तत्वम् । उरु कृधि बहुधनादिकं देहि, अरिक्त*मस्माकं निवासं कुर्वित्यर्थः । 'कः करत्करतिकृधिकृतेष्वनदितेः' इति संहितायां नसस्सकारस्य सकारो व्यत्ययेन न प्रवर्तते । उक्तं च प्रातिशाख्ये 'न सक्रघकारपरे'† इति । अपिच—हे घृतयोने अपां योने, 'अग्नेरापः'‡ इति । इदं हूयमानं घृतमाज्यं पिब । अपिच—यज्ञपतिं यजमानं प्रतिर वर्धय । प्रपूर्वस्तिरतिर्वृद्धिकर्मा । 'प्रसमुपोदः पादपूरणे' इति प्रशब्दस्य द्विर्वचनम्, 'अनुदात्तं च' इति द्वितीयः प्रशब्दोनुदात्तः । 'पत्यावैश्वर्ये' इति प्रकृतिस्वरत्वेन यज्ञशब्दोन्तोदात्तः, 'यजयाच' इति नङ्प्रत्ययान्तत्वात् ॥

[5]ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं प्रपादयति—सोमो जिगातीति त्रिपदया गायत्र्या ॥ गातुर्मार्गः । गाङ् गतौ, 'कमिमनिजनि' इत्यादिना तुप्रत्ययः । गातुं वेत्ति

*क, ग—अतिरिक्त. †तै, प्रा—८-२६. ‡तै. उ—२-१.

दे॒वाना॑मेति निष्कृ॒तमृ॒तस्य॒ योनि॑-
मा॒सद॑मादि॑त्या॒स्सदो॒ऽस्यादि॑त्या॒स्सद॒

वित् ॥ ६ ॥ दे॒वाना॑म् । एति॒ । नि॒ष्कृ॒तमिति॑
निः—कृ॒तम् । ऋ॒तस्य॑ । योनि॑म् । आ॒सद॒मित्या॑—
सद॑म् । [6]आदि॑त्याः । सदः॑ । अ॒सि॒ । [7]अदि॑त्याः ।

विन्दतीति वा गातुवित् । क्विपि कृदुत्तरपदप्रकृतिस्वरत्वम् । इष्ट-शोयं सोमो जिगाति गच्छति । गा स्तुतौ छन्दसि इति जुहो-त्यादिकः उदात्तेत्, 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । इहत्वयं गतिकर्मा, गतिकर्मसु हि जिगातीति निरुक्तकाराः पठन्ति । कं देशं गच्छतीत्याह—देवानामिति । देवानामासदं, आ समन्तात्सीदन्त्यस्मिन्नित्यासदः । 'घञर्थे कविधानम्' इति कः, 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । निष्कृतम लङ्कृतम् । प्रवृद्धादेराकृतिगणत्वादुत्तरपदान्तोदात्तत्वम् । ऋतस्य सत्यस्य यज्ञस्य वा योनिमुत्पत्तिस्थानं हविर्धानमेति प्रपद्यते । 'सौम्यर्चा प्र पादयति'* इत्यादि ब्राह्मणम् ॥

[6]दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति—अदित्या इति ॥ अदितिर्देवमाता तस्यास्सदोऽस्यासनमसि । सीदन्त्यस्मिन्निति सदः ॥

[7]कृष्णाजिने राजानमासादयति—अदित्या इति ॥ अदित्या-स्सदोभूतमेतत्कृष्णाजिनं हे सोम आसीद अधितिष्ठ । प्रागेव† व्याख्यातमिदं मन्त्रद्वयम् ॥

*सं. ६-३-२. †सं. १-२-८.[3—4]

आ सींदैष वों देव सवितस्सोम-
स्तꣳ रंक्षध्वं मा वों दभदेतत्त्वꣳ
सोंम देवो देवानुपांगा इदमहं मंनु-

सदः । एतिं । सीद । [8]एषः । वः । देव । सवितः । सोमः । तम् । रक्षध्वम् । मा । वः । दभत् । एतत् । [9]त्वम् । सोम । देवः । देवान् । उपेतिं । अगाः । इदम् । अहम् । मनुष्यः । मनुष्यान् ।

[8]राजानं देवताभ्यस्सम्प्रयच्छति—एष व इति ॥ हे देव सवितः सर्वस्य प्रेरक, एष सोमः वः युष्मभ्यं देवेभ्यो न्यासभूतः परिधीयते । यद्वा—युष्माकमेष सोमः, युष्मत्पानार्थत्वात् ; अतो युष्मभ्यमेव परिधीयत इति भावः । सवितुः प्राधान्यात्तन्मुखेन देवेभ्यः परिधीयते । तं च सोमं हे सवितः यस्त्वं ये चान्ये देवाः ते यूयं रक्षध्वम् । व्यत्ययेनात्मनेपदम् । रक्षतश्च युष्मान् कश्चिदपि हिंस्त्रो मा दभत् मा हिंसीत् । दम्भेर्लुङि व्यत्ययेन च्लेरङ् । ' यजमानो वा एतस्य पुरा गोप्ता भवति '* इत्यादि ब्राह्मणम् ॥

[9]राजानमुपतिष्ठते—एतत्त्वमिति ॥ एतत् एतस्मिन्काले । इदमित्यपि तथा । उभयत्र ' सुपां सुलुक् ' इति सप्तम्या लुक् । हे सोम एतस्मिन्काले देवस्त्वं देवानुपागाः उपसंप्राप्तोसि । अस्मिन्कालेहमपि मनुष्यो मनुष्यानुपागाम् । क्रियाविशेषणं

*सं—६-२-२.

ष्यो॑ मनु॒ष्या॑न्त्स॒ह प्र॒जया॑ स॒ह रा॒यस्पोषे॑ण॒ नमो॑ दे॒वेभ्य॑स्स्व॒धा

स॒ह । प्र॒जयेति॑ प्र—जया॑ । स॒ह । रा॒यः । पोषे॑ण । [10]नमः॑ । दे॒वेभ्यः॑ । [11]स्व॒धेति॑ स्व—धा । पि॒तृभ्य॒ इति॑

---

चोभयम् । सर्वत्र प्रायेणास्मद्विषय इदं शब्दः, युष्मद्विषय एतच्छब्दः, यथा—'एषा सा त्वयि'* 'इयं सा मयि'* इति। उपागामित्यत्र 'गातिस्था' इति सिचो लुक् । 'देवो ह्येष सन्'† इत्यादि ब्राह्मणम् । किं केवल एव मनुष्यानुपैति ? नेत्याह—प्रजया सह रायो धनस्य पोषेण च सह मनुष्यानुपागामिति । 'यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमानस्स्यात्'† इत्यादि ब्राह्मणम् । प्रजाशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः, 'उपसर्गे च संज्ञायाम्' इति डप्रत्ययः । 'ऊडिदम्' इत्यादिना रैशब्दात् षष्ठ्या उदात्तत्वम् ॥

[10]प्राञ्चमञ्जलिं करोति—नमो देवेभ्य इति ॥ अस्त्विति शेषः । 'नमस्कारो हि देवानाम्'† इति ब्राह्मणम् ॥

[11]अञ्जलिं दक्षिणां न्यञ्चति‡—स्वधा पितृभ्य इति ॥ स्वमात्मानं दधातीति स्वधा । 'आतोनुपसर्गे कः', थाथादिस्वरेणान्तोदात्तत्वम् । अन्नमुच्यते । स्वधा पितृभ्योस्तु । 'स्वधाकारो हि पितृणाम्' †इति ब्राह्मणम् ॥

---

*सं. १-३-४[14] †सं. ६-३-२. ‡ख—दक्षिणं करोति.

पितृभ्य इदमहं निर्वरुणस्य पाशा-
त्सुवरभि ॥ ७ ॥ वि ख्येषं वैश्वानरं
ज्योतिरग्ने व्रतपते त्वं व्रतानां व्रत-
पतिरसि या मम तनूस्त्वय्यभूदि-

पितृ-भ्यः । [12]इदम् । अहम् । निरिति । वरुण-
स्य । पाशात् । [13]सुवः । अभि ॥ ७ ॥ वीति ।
ख्येषम् । वैश्वानरम् । ज्योतिः । [14]अग्ने । व्रतपत
इति व्रत-पते । त्वम् । व्रतानाम् । व्रतपतिरिति
व्रत-पतिः । असि । या । मम । तनूः । त्वयि ।

[12]उपनिष्क्रामति—इदमिति ॥ क्रियाविशेषणम् । निरित्युपसर्गसामर्थ्यात् गच्छामीति योग्यं क्रियापदमध्याह्रियते । अहं वरुणस्य पाशादिदं निर्गच्छामि । वरुणस्य पाशादिव ममेदं निर्गमनम् । शालायां बद्ध इव [बद्धस्येव] स्थितस्य इदानीं निर्गमादेवमुच्यते । 'वरुणपाशादेव निर्मुच्यते'* इति ब्राह्मणम् ॥

[13]आहवनीयमीक्षते—सुवरिति ॥ स्वर्गसाधनत्वेन स्तुतिः । विश्वेषां नराणां ज्योतिष्टं नयतीति वैश्वानरं द्योतमानमाहवनीयमाभिमुख्येन पश्यामीति । व्याख्यातम्† । ख्यातेराशिषि लिङि, 'लिङ्याशिष्यङ्' 'अतो येयः' ॥

[14]यजमानमवान्तरदीक्षां विसर्जयति—अग्ने व्रतपत इति ॥ हे अग्ने व्रतपते त्वं हि सर्वेषां व्रतानां सम्बन्धी व्रतपतिरसि ।

*सं. ६-२-२. †सं. १-१-४.[13]

यᳪ᳭ सा मयि या तव तनूर्मय्य-
भूदेषा सा त्वयि यथायथन्नौ व्रत-
पते व्रतिनोर्व्रतानि ॥ ८ ॥

अभूत् । इयम् । सा । मयि । या । तव । तनूः । मयि । अभूत् । एषा । सा । त्वयि । यथायथमिति यथा–यथम् । नौ । व्रतपत इति व्रत–पते । व्रतिनोः । व्रतानि ॥ ८ ॥

गातुविद्भ्येकत्रिᳪ᳭शच्च ॥ ४ ॥

व्याख्यातं चेदं* पूर्वम् । अतस्त्वत्प्रसादादेवाहं व्रती सम्पन्नः । इदानीं तु विसृष्टदीक्षे मयि या मम तनूः पूर्वं त्वय्यभूत् सेयमिदानीं मय्येवास्तु । या च तव तनूः पूर्वं मय्यभूत्सैषे दानीं त्वय्येवास्तु । 'युष्मदस्मदोर्ङसि' इति तवममशब्दावाद्युदात्तौ । पूर्वं हि 'या मम तनूरेषा सा त्वयि या तव तनूरियं सा मयि'* इत्याभ्यां तन्वोर्विनिमयः कृतः । इदानीं तु यथायथं गृह्यते । एवं गृहीतस्वस्वतन्वोरावयोर्व्रतिनोः व्रतानि कर्माणि यथायथं भवन्तु । 'यथास्वे यथायथम्' इति निपात्यते । मदीयानि ममैव सन्तु, त्वदीयानि तथा तवैव च सन्त्वित्यर्थः । पूर्वं हि 'सह नौ व्रतपते व्रतिनोर्व्रतानि'* इति परस्परकृतत्वं व्रतानामभ्युपगतं, यन्मया कृतं तत्त्वयापि कृतम्, यत्त्वया कृतं तन्मयापीति । इदानीं तु यथायथं व्यवस्थाप्यन्ते । 'अग्ने व्रतपत आत्मनः पूर्वा तनूरादेयेत्याहुः'† इति ब्राह्मणम् ॥

इति तृतीये चतुर्थोऽनुवाकः ॥

*सं. १-२-११.[4] †सं. ६-३-२.

अत्यन्यानगान्नान्यानुपांगामुर्वाक्त्वा
परैरविदम्परोवरैस्तन्त्वा जुषे वैष्णु-

[1]अतीति । अन्यान् । अगाम् । न । अन्यान् ।
उपेति । अगाम् । अर्वाक् । त्वा । परैः ।

[1]अतः परं पाशुकं काण्डं सोमार्थमेव । यूपार्थं वृक्षमुप-तिष्ठते—अत्यन्यानिति द्वादशाक्षरत्रिपदया महाबृहत्या । ताण्डिन एतां सतोबृहतीमाहुः, ऊर्ध्वबृहतीं बह्वृचाः ॥ हे वृक्ष अन्या-नितरान्कांश्चिद्वृक्षानहमत्यगां अतिक्रम्य गतोस्मि । के पुनस्ते? ये यूपार्हाः पलाशादयः 'समे जातमशाखानम्'* इत्यादिलक्षण-हीनाः । तानुपगम्यैव वैगुण्यदर्शनेन अत्यजम् । अथान्यान्कांश्चि-द्वृक्षान्नोपागां नैवोपगतोस्मि । के पुनस्ते? ये अयूपार्हा निम्बा-दयः । सोहं यूपार्हं लक्षणवन्तं च त्वामेवाविदं लब्धवानस्मि । लृदित्वादङ् । अस्य गुणवत्त्वमाह—परैरिति । परैरुत्कृष्टैस्सम-जातत्वादिभिर्लक्षणैरर्वाक् अविदूरे वर्तमानं सर्वलक्षणयुक्तमिति यावत् । अवरैर्निकृष्टैर्विषमजातत्वादिभिरसल्लक्षणैः परः परस्ताद्दूरे वर्तमानं असल्लक्षणैरस्पृष्टमित्यर्थः । 'विभाषा परावराभ्याम्' इत्यतसुचि तकारस्य छान्दसो लोपः । यद्वा—पूर्वादिभ्यो विधीयमानोसिप्रत्ययो बहुलवचनात्परशब्दादपि भवति, तत्र प्रत्य-यस्वरेणान्तोदात्तत्वम्, परशब्दो हि 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तः, शिडिति सर्वनामान्युच्यन्ते । 'एकान्याभ्यां समर्थाभ्याम्' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । तं तादृशं त्वा देवयज्यायै देवयागार्थं जुषे सेवे गृह्णामीत्यर्थः । वैष्णवं

*आप. श्रौ—७-१-१७.

वन्देवयज्यायै देवस्त्वा सविता मध्वानक्त्वोषधे त्रायस्वैनꣳ स्वधिते

अविदम् । पुरः । अवरैः । तम् । त्वा । जुषे । वैष्णवम् । देवयज्याया इति देव-यज्यायै । [2]देवः । त्वा । सविता । मध्वा । अनक्तु । [3]ओषधे । त्रायस्व । एनम् । [4]स्वधित इति स्व-धिते । मा ।

विष्णुदेवत्यं, 'वैष्णवो वै देवतया यूपः'* इति । 'छन्दसि निष्टक्र्यं' इत्यादिना देवयज्याशब्दो यप्रत्ययान्तो निपातितः । 'अति ह्यन्यानेति नान्यानुपैति'* इत्यादि ब्राह्मणम् ॥

[2]यूपमाज्येनानक्ति—देवस्त्वेति ॥ हे वृक्ष देवस्सविता सर्वस्य प्रेरकस्त्वां मध्वा मदनीयेन मधुरेणाज्येन अनक्तु स्निग्धं करोतु । 'फलिपाटिनमिमनिजनाङ्गुक्पटिनाकिधतश्च' इति मन्यतेरुप्रत्ययः, धकारश्चान्तादेशः, तत्र च उरित्यनुवर्तते । 'जसादिषु वा वचनं छन्दसि प्राङ्णौ चङ्युपधायाः' इति नाभावाभावः । मधुशब्देन चाज्यमुच्यते, 'तेजसैवैनमनक्ति'* इति ब्राह्मणदर्शनात् । 'तेजो वा आज्यम्'† इति ॥

[3]ऊर्ध्वाग्रं बर्हिरनूच्छ्रयति—ओषधे त्रायस्वैनमिति ॥ हे ओषधे बर्हिरेनं यूपार्थं वृक्षं त्रायस्व रक्ष यागसाधनत्वापादनेन वृक्षत्वान्मोचयित्वा उत्तमां गतिं गमय ॥

[4]स्वधितिना तिर्यञ्चं प्रहरति—स्वधिते मैनं हिंसीरिति ॥ हे

*सं. ६-३-३. †सं. ६-३-४.

ते मैनꣳ हिꣳसीर्दिवमग्रेण मा लेखीरन्तरिक्षम्मध्येन मा हिꣳसीः पृथिव्या सम्भव वनस्पते शतव-

एनम् । हिꣳसीः । [5]दिवम् । अग्रेण । मा । लेखीः । अन्तरिक्षम् । मध्येन । मा । हिꣳसीः । पृथिव्या । समिति । भव । [6]वनस्पते । शतवल्श इति

स्वधिते त्वमप्येनं मा हिंसीः उत्तमामेव गतिं गमय । व्याख्यातौ च प्रागेवैतौ मन्त्रौ* । 'अनक्षसङ्गं वृश्चेत्'† इत्यादि ब्राह्मणम् ॥

[5]पतन्तमनुमन्त्रयते—दिवमग्रेणेति ॥ आत्मीयेनाग्रेण दिवं मा लेखीः मा विदारीः । 'नेटि' इति वृद्धिप्रतिषेधः । तथात्मीयेन मध्येनान्तरिक्षं मा हिंसीः । पृथिव्या च सम्भव संयुज्यस्व पृथिवीमपि मा प्रहासीः; प्रमाणानतिरेकस्सम्भवः; पृथिवीमतिक्रम्य मा गाः । यथा त्वदीयैरग्रमध्यमूलैर्विदारणाभिघातविपाटनकारिभिः लोकत्रयं न नश्यति तथा पतेत्यर्थः । पृथिवीशब्दो ङीषन्तोन्तोदात्तः, तेन 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । 'इमे वै लोकाः'† इत्यादि ब्राह्मणम् ॥

[6]आव्रश्चने हिरण्यं निधाय सम्परिस्तीर्याभिजुहोति—वनस्पत इति त्रिष्टुभैकपदया ॥ बर्हिराच्छेदनाभिमर्शनेन व्याख्यातप्रायमिदम्‡ । पारस्करादिर्वनस्पतिशब्दः । 'तस्मादाव्रश्चनात्'† इति ब्राह्मणम् ॥

*सं. १-२-१.[2-3] †सं. ६-३-३. ‡सं. १-१-२.[3]

ल्शो वि रोह सहस्रवल्शा वि
वयꣳ रुहेम यन्त्वा यꣳ स्वधिति-
स्तेतिजानः प्रणिनाय महते सौभ-

शत-वल्शः । वीति । रोह । [7]सहस्रवल्शा इति
सहस्र-वल्शाः । वीति । वयम् । रुहेम । [8]यम् ।
त्वा । अयम् । स्वधितिरिति स्व-धितिः । तेति-
जानः । प्रणिनायेति प्र-निनाय । महते । सौभ-

[7]आत्मानं प्रत्यभिमृशति—सहस्रवल्शा इति त्रिष्टुभैकपदया ॥ इदमपि प्रागेव व्याख्यतम् * ॥

[8]अन्वग्रं शाखाः प्रसूयति—यं त्वेति द्विपदया त्रिष्टुभा ॥ तेतिजानो निशितधारोयं स्वधितिः । तिज निशातने, यङ्लुगन्ताल्लटो व्यत्ययेनात्मनेपदं शानच्, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । यं त्वा यूपार्थं वृक्षं प्राणिनाय प्रकर्षेण नयति शाखाः प्रसाध्य विशिष्टं रूपं प्रापयति । 'छन्दसि लुङ्लङ्लिटः' इति लिट् । किमर्थं? महते सौभगाय सुभगत्वाय सुश्रीकत्वाय । उद्गात्रादिषु 'सुभगं मन्त्रे' इति पाठात् भावे अञ्प्रत्ययः । स खलु त्वमसीति शेषः । सत्वमस्मद्यज्ञं साधयेति वा ॥

*सं. १-१-२.९

गायाच्छिन्नो रायस्सुवीरः ॥ १ ॥
पृथिव्यै त्वान्तरिक्षाय त्वा दिवे

गाय । [9]अच्छिन्नः । रायः । सुवीर इति सु-
वीरः ॥ १ ॥

यन्दर्श च ॥ ५ ॥

[1]पृथिव्यै । त्वा । [2]अन्तरिक्षाय । त्वा । [3]दिवे ।

---

[9]चतुरङ्गुलमग्रं चषालाय प्रच्छेदयति—अच्छिन्न इति ॥ अच्छिन्नः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । रायः धनानि देहीति शेषः । यद्वा—अच्छिन्नो धनस्य सुवीरश्च भवेत्यध्याहारः । 'ऊडिदम्' इत्यादिना तृतीयादेर्विभक्तेरुदात्तत्वं व्यत्ययेन न क्रियते । ईदृशस्त्वमेव नो रायः । शोभना वीराः पुत्रपौत्रादयोऽस्य यजमानस्य येन भवन्ति स सुवीरः । 'वीरवीर्यौ च' इत्युत्तर-पदाद्युदात्तत्वम् । यस्मात्त्वया यजमानस्य आयुष्मन्तः पुत्रादय उत्पद्यन्ते, तस्मात्तेषामभिवृद्ध्यर्थं अविच्छेदेन धनानि देहीति ॥

इति तृतीये पञ्चमोनुवाकः.

---

[1—3]यूपं पराञ्चं प्रोक्षति—पृथिव्यै त्वेति ॥ व्याख्यातम्* । प्रोक्षामीति शेषः । पृथिव्यादीनां स्थित्यर्थं त्वां प्रोक्षामीति ॥

---

*सं. १-१-११.[4]

त्वा शुन्धतां लोकः पितृषदनो
यवोसि यवयास्मद्द्वेषो यवयारातीः
पितॄणाꣳ सदनमसि स्वावेशोस्य-

त्वा । [4]शुन्धताम् । लोकः । पितृषदन इति पितृ-सदनः । [5]यवः । असि । यवय । अस्मत् । द्वेषः । यवय । अरातीः । [6]पितॄणाम् । सदनम् । असि । [7]स्वावेश इति सु-आवेशः । असि । अग्रेगा

[4]अवटेऽपोऽवनयति—शुन्धतामिति ॥ व्याख्यातम्* ॥

[5]यवान्प्रस्कन्दयति—यवोसीति ॥ व्याख्यातमेव* । 'ऊर्ग्वै यवो यजमानेन यूपस्सम्मितः'† इत्यादि ब्राह्मणम् ॥

[6]बर्हिर्हस्तं व्यतिषज्यावस्तृणाति—पितृणामिति ॥ व्याख्यात-मेव* । 'यद्बर्हिरनवस्तीर्य मिनुयात्पितृदेवत्यो निखातस्स्यात्'† इति ब्राह्मणम् ॥

[7]यूपशकलमवास्यति—स्वावेश इति ॥ सुष्ठु आविश्यते स्थीय-तेस्मिन्निति स्वावेशः । अधिकरणे घञ्, थाथादिसूत्रेणोत्तरपदा-न्तोदात्तत्वम् । यूपस्य सुखासनमसीत्यर्थः । नेतारो यागस्य निर्वोढारः यूपशकलाः । 'छन्दस्युभयथा' इति 'नामि' इति दीर्घाभावः, 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । तेषां मध्ये अग्रेगास्त्वमसि अग्रे प्रथमं यूपात् गच्छति परापततीत्य-

*सं. १-३-१.[7—9] †सं. ६-३-४.

अग्रेगा नेतॄणां वनस्पतिरधि त्वा

इत्यग्रे–गाः । नेतॄणाम् । वनस्पतिः । अधीति ।

---

अग्रेगाः । 'यः प्रथमश्शकलः परापतेत्तमप्याहरेत्'* इति गृहीतत्वात् । यद्वा—नेतॄणामग्रे गच्छतीत्यग्रेगाः, मुख्य इत्यर्थः प्रथमपतितत्वादेव । यद्वा—नेतॄणां मध्ये अग्रे गच्छति यागसाधनत्वं यूपादपि पूर्वमुपयुज्यमानत्वादवटप्रवेशेन । 'जनसनखनक्रमगमो विट्' इति विट्प्रत्ययः, 'विड्वनोरनुनासिकस्यात्' इत्यात्वम्, 'तत्पुरुषे कृति बहुलम्' इत्यलुक्, कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा—यूपस्य ये नेतारः परिष्कर्तारः प्रथमशकलस्स्वरुश्चषालमिति, तेषां मध्ये अग्रे प्रथमं यूपं गच्छतीति । किञ्च—वनस्पतिविकारो यूपः, विकृतौ प्रकृतिशब्दः । पारस्करप्रभृतित्वात्सुट्, 'उभे वनस्पत्यादिषु युगपत्' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । स त्वामधि स्थास्यति त्वयि स्थास्यति, यूपस्यापि धारकोऽसीत्यर्थः । 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मसंज्ञा । तस्य वित्तात् तद्विजानीहि तं ते महिमानमवगन्तुमर्हसीति । 'क्रियाग्रहणं कर्तव्यम्' इति सम्प्रदानत्वात् 'चतुर्थ्यर्थे बहुलं छन्दसि' इति चतुर्थ्यर्थे षष्ठी । 'यूपशकलमवास्यति स तेजसमेवैनं मिनोति'‡ इति ब्राह्मणम् । 'स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परापतति'* इत्यादिब्राह्मणेन तस्य तेजस्त्वमवगन्तव्यम् ॥

---

*सं—६-३-३.

†ख—...त्वम् । तस्यत्वामन्त्रितत्वं व्यत्ययेन सुः । स.

‡सं—६-३-४.

स्थास्यति तस्यं वित्ताद्देवस्त्वा सवि-
ता मध्वानक्तु सुपिप्पलाभ्यस्त्वौ-
षधीभ्य उद्दिवꣳ स्तभानान्तरिक्ष-

त्वा । स्थास्यति । तस्यं । वित्तात् । [8]देवः । त्वा । सविता । मध्वा । अनक्तु । [9]सुपिप्पलाभ्य इति सु-पिप्पलाभ्यः । त्वा । ओषधीभ्य इत्योषधि-भ्यः । [10]उदिति । दिवम् । स्तभान । एति । अन्तरिक्षम् ।

---

[8]यूपस्याग्रमनक्ति—देवस्त्वेति ॥ व्याख्यातम्* ॥

[9]चषालं प्रतिमुञ्चति—सुपिप्पलाभ्य इति ॥ व्याख्यातमेव† । शोभनफलानामोषधीनामर्थाय त्वां चषालं यूपस्याग्रे प्रतिमुञ्चामीति शेषः । 'तस्माच्छीर्षत ओषधयः फलं गृह्णन्ति'‡ इति ब्राह्मणम् ॥

[10]यूपमुच्छ्रयति—उद्दिवमिति ॥ व्याख्यातम्§ । अतष्टः प्रदेश उपरः, 'मूलतोऽतष्टमुपरम्'¶ इति । उपरमते तक्षण-मस्मिन्निति 'उपसर्गे च संज्ञायाम्' इति जनेर्विधीयमानो डप्रत्ययः बहुलवचनाद्रमेरपि भवति, कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् , व्युत्पत्त्यनवधारणाच्च नावगृह्यते । तेन पृथिवीं दृंह दृढां कुरु ॥

---

*सं. १-३-५[2] †सं—१-२-२.[14] ‡सं. ६-३-४.
§सं. १-३-१.[10] ¶आप. श्रौ. ७-३-१.

स्पृण पृथिवीमुपरेण दृꣳह ते ते
धामान्युश्मसि ॥ १० ॥ गमध्ये
गावो यत्र भूरिशृङ्गा अयासः ।

पृण । पृथिवीम् । उपरेण । दृꣳह । [11]ते । ते ।
धामानि । उश्मसि ॥ १० ॥ गमध्यै । गावः ।
यत्र । भूरिशृङ्गा इति भूरि-शृङ्गाः । अयासः ।

[11]यूपं वैष्णवीभ्यामृग्भ्यां कल्पयति स्थापयति—ते ते धामानि ........विष्णोः कर्माणि पश्यतेति ॥ तत्र प्रथमा चतुष्पदा त्रिष्टुप् । द्वितीया त्रिपदा गायत्री । 'वैष्णव्यर्चा कल्पयति वैष्णवो वै देवतया '* इत्यादि ब्राह्मणम् । 'द्वाभ्यां कल्पयति '* इत्यादि च । वैष्णवत्वाद्यूपो विष्णुरूपेण स्तूयते । त इति द्वितीयाबहुवचनस्य 'सुपां सुलुक्' इति शे आदेशः, प्रगृह्यत्वाभावो व्यत्ययेन, लिङ्गविभक्तिव्यत्ययेन वा । हे विष्णो तव तानि धामानि स्थानानि गमध्ये गन्तुं यजमानो गच्छेदिति यावत् । तुमर्थे अध्येन्प्रत्ययः, अध्यैप्रत्ययस्य वा वर्णव्यत्ययेन एकारः । तव तानि धामानि गन्तुं उश्मसि उश्मः कामयामहे । वष्टेर्ग्रहिज्यादिना सम्प्रसारणम्, 'इदन्तो मसिः', 'अन्येषामपि दृश्यते' इति तस्य संहितायां दीर्घः । कानीत्याह—यत्र येषु धामसु गावो रश्मयः भूरिशृङ्गाः बह्वाः, अयासः गमनशीलाः । एतेः पचाद्यच्, 'आज्जसेरसुक्' । यत्र बहुमुखा

*सं. ६-३-४.

अत्राह तदुरुगायस्य विष्णोः पर-

अत्र । आह । तत् । उरुगायस्येत्युरु–गायस्य ।
विष्णोः । परमम् । पदम् । अवेति । भाति ।

रश्मयो विसर्पन्तीति । यद्वा—यत्र गावो गन्तारो जनाः । 'गमेर्डो' इति डोप्रत्ययः । भूरिशृङ्गाः महादीप्तयो भवन्तीति । दीप्तिनामसु हि शृङ्गाणीत्यव्यायान्ते* पठ्यते । पुनश्च विशेष्यन्ते—अयासः अनपायाः अप्रच्युताः । यातेरसुनि याः, नञ्बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । धामानि पुनर्विशेष्यन्ते—अत्राह अत्रैव । अहेत्यवधारणे । येष्वेव धामसु उरुगायस्य उरुभिर्महात्मभिर्गीयत इत्युरुगायः । गायतेः कर्मणि घञ्, थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । भूरेः महतो महाबलस्य विष्णोः विश्वं व्याप्नुवतः । 'विषेः किच्च' इति नुप्रत्ययः, तत्र हि निदिति वर्तते । यस्त्वं महाबलो महात्मभिस्स्तूयमानो विश्वं व्याप्नुवन्नभूः 'विचक्रमाणस्त्रेधोरुगायः'† इति मन्त्रप्रसिद्धः तस्य तव तत्तादृशविक्रमकृत् परममुत्तमं पदं‡ तदप्येष्वेव धामसु अवभाति दीप्यते, तस्मात्तानि धामानि गन्तुमुश्म इति । एवं प्रत्यक्षकृतोयं मन्त्रः । द्वितीयस्तेशब्दोस्मिन्पक्षे युष्मदादेशः । यद्वा—परोक्षकृत एवायम् । ते ते इति वीप्सा । तानि तानि धामानि गन्तुमुश्मः । 'नित्यवीप्सयोः' इति शेप्रत्ययान्तस्य द्विर्वचनम्, 'अनुदात्तं च' इति द्वितीयस्यानुदात्तत्वम् । स्पष्टमन्यत् ॥

*निरु. १-१७. †सं. १-२-१३.१ ‡क—पदं स्वरूपं.

मम्पदमव भाति भूरेः । विष्णोः
कर्माणि पश्यत यतो व्रतानि पस्पृ-
शे । इन्द्रस्य युज्यस्सखा । तद्विष्णोः

भूरेः । [12]विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पृशे । इन्द्रस्य । युज्यः । सखा । [13]तत् ।

[12]अथ द्वितीया ॥ विष्णोः कर्माणि चरितानि पश्यत हे जनाः । कीदृशानीत्याह—यतः यैः । 'इतराभ्योऽपि दृश्यन्ते' इति तृतीयान्तात्तसिः । व्रतानि युष्मदीयानि कर्माणि यैः कर्मभिः पस्पशे स्पृशति बध्नातीति वा युष्मासु । स्पश बाधनादौ स्वारितेत्, 'छन्दसि लुङ्लङ्लिटः' इति लिट् । शर्पूर्वाः खयश्शिष्यन्ते इति पकारशेषः । पुनश्च विशेष्यते—इन्द्रस्य युज्यः योग्यस्सखा । योगो युक् । सम्पदादित्वाद्युजेः क्विप् । युजि साधुर्युज्यः । 'तत्र साधुः' इति यत्, 'यतोऽनावः' इत्याद्युदात्तत्वम् । यद्वा—युञ्जाना युजः योगिनः । 'सत्सूद्विष' इत्यादिना क्विप् । तत्र भवः । दिगादिर्द्रष्टव्यः । तादृशस्यास्य तादृशानि कर्माणि पश्यतेति ॥

[13]चपालमीक्षते—तद्विष्णोरिति त्रिपदया गायत्र्या ॥ 'विष्णोः परमं पदमवभाति भूरेः'* इति यत्पूर्वोक्तं तदेव हि विष्णोः परमं पदं सदा सर्वदा सूरयः मेधाविनः पश्यन्तीति । कीदृशं? दिवि चक्षुरिवाततम् । सर्वेषां चक्षुस्स्थानीयं सूर्यमण्डलमिह चक्षुरुच्यते । आततं समन्ताद्विस्तारितप्रकाशं, सर्वत्र प्रकाशत्वात् ।

*सं. १-३-६[11]

परमम्पदꣳ सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् । ब्रह्मवनिन्त्वा
क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोष-
वनिम्पर्यूहामि ब्रह्म दꣳह क्षत्र-
न्दꣳह प्रजां दꣳह रायस्पोषं दꣳह

विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः । दिवि । इव । चक्षुः । आततमित्या–ततम् । [14]ब्रह्मवनिमिति ब्रह्म–वनिम् । त्वा । क्षत्रवनिमिति क्षत्र–वनिम् । सुप्रजावनिमिति सुप्रजा–वनिम् । रायस्पोषवनिमिति रायस्पोष–वनिम् । परीति । ऊहामि । [15]ब्रह्म । दꣳह । क्षत्रम् । दꣳह । प्रजामिति प्र–जाम् । दꣳह ।

'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । दिवि सूर्यमण्डल-मिव यदात्मप्रकाशस्वरूपं तत्सूरयस्सदा हृदि पश्यन्ति । तस्मा-त्त्वमपि विष्णोः परमपदस्थानीयं चषालं पश्येति ॥

[14]प्रदक्षिणं पुरीषेण पर्यूहति—ब्रह्मवनिमिति ॥ व्याख्यातम्* ॥

[15]मैत्रावरुणदण्डेन संहन्ति—ब्रह्म दꣳहेति ॥ व्याख्यातमेव* ॥

*सं. १-३-१[12—13]

परि॒वीर॑सि॒ परि॑ त्वा॒ दैवी॒र्विशो॑ व्ययन्ता॒म्परी॒मꣳ रा॒यस्पोषो॒ यज॑-

रा॒यः । पोष॑म् । इ॒ह । [16]प॒रि॒वीरिति॑ परि॒-वीः । अ॒सि॒ । परीति॑ । त्वा॒ । दैवीः॑ । विशः॑ । व्य॒य॒न्ता॒म् । परीति॑ । इ॒मम् । रा॒यः । पोषः॑ । यज॑मानम् ।

[16]रशनया त्रिः प्रदक्षिणं परिव्ययति—परिवीरसीति ॥ परिवी यत इति परिवीः । 'अन्येभ्योपि दृश्यते' इति कर्मणि क्विप्, यजादित्वात्सम्प्रसारणम्, 'हलः' इति दीर्घः, कृदुत्तरपदप्रकृतिस्वरत्वम् । परितो रशनया वेष्टनीयोसि हे यूप । अतस्त्वां दैवीः दैव्यो विशः देवानां स्वभूताः प्रजाः मरुदादयः, 'मरुतो वै देवानां विशः'* इति । 'देवाद्यञञौ' इति देवशब्दादञ्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । परिव्ययन्तां सर्वतोऽनया रशनया वेष्टयन्तु । इमं च यजमानं रायो धनस्य पोषः मनुष्याश्च परिवेष्टयन्तु, आढ्यः प्रजानामुपजीव्यश्च भवत्वित्यर्थः । 'ऊडिदम्' इत्यादिना रैशब्दात् षष्ठ्या उदात्तत्वम्, 'षष्ठ्याः पतिपुत्र' इति विसर्जनीयस्य सत्वम्, 'अनुपदेशात्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरेण यजमानशब्द आद्युदात्तः । 'उर्वै रशना'† इत्यादि ब्राह्मणम् ॥

*सं. २-२-५. †सं. ६-३-४.

मानम्मनुष्यां अन्तरिक्षस्य त्वा
सानावर्व गूहामि ॥ ११ ॥
इषे त्वोपवीरस्युपो देवान्दैवीर्विशः

मनुष्याः । [17]अन्तरिक्षस्य । त्वा । सानौ ।
अवेति । गूहामि ॥ ११ ॥

उश्मासि पोषमेकान्न विंशतिश्च ॥ ६ ॥

[1]इषे । त्वा [2]उपवीरित्युप—वीः । असि । उपो

[17]मध्यमे रशनागुणे स्वरुमवगूहति—अन्तरिक्षस्य त्वेति ॥ मध्यमत्वसाधर्म्यात् अन्तरिक्षस्थानीयस्य मध्यमस्य रशनागुणस्य स्थाने त्वामवगूहामि सुगुप्तं स्थापयामि हे स्वरो । कीदृशे स्थाने ? सानौ समुन्नते स्वस्थानत्वादेव समुच्छ्रिते । यद्वा—सननीयः सानुः मध्यमेन गुणेन सम्भक्ते प्रदेशे 'दृसनिजनि' इत्यादिना सनो ञुण्प्रत्ययः । 'ऊदुपधाया गोहः' इत्यूकारः ॥

इति तृतीये षष्ठोनुवाकः.

---

[1]बर्हिषी आदत्ते—इषे त्वेति ॥ व्याख्यातम्* । इह तु पशुलक्षणमन्नम् । तदर्थं तदुपाकरणार्थं त्वामादद इति शेषः । जातावेकवचनम् । 'इषे त्वेति बर्हिरादत्ते'† इति ब्राह्मणम् ॥

[2]पशुमुपाकरोति—उपवीरिति ॥ उपवीयते उपसङ्क्रम्यते उपाक्रियत इत्युपवीः । वेतेः क्विप् । हे पशो देवेभ्यस्त्वमुपाकृतो-

*सं. १-१-१¹ †सं. ६-३-६.

प्रागुर्वह्नीरुशिजो बृहस्पते धारया

इति॑ । दे॒वान् । दैवीः॑ । विशः॑ । प्रेति॑ । अ॒गुः॒ । वह्नीः॑ । उ॒शिजः॑ । बृह॑स्पते । धा॒रय॑ । वसू॑नि ।

सीत्यर्थः । 'उप ह्येनानाकरोति'* इति च ब्राह्मणम् । तत्र हि देवानां समीपे आभिमुख्येनैनान् पशून्करोति । जातावेकवचने बहुवचनम् । तस्मात्त्वदीया अवयवा अवदानभावमापन्ना देवानग्नीषोमादीन् उपप्रागुः उपप्रयन्तु प्रकर्षेणोपगच्छन्तु । उपो इति निपातसमुदाय उपशब्दस्यार्थे वर्तते । 'छन्दसि लुङ्लङ्लिटः' इति लुङ्, 'इणो गा लुङि' इति गादेशः, 'गातिस्था' इत्यादिना सिचो लुक् । कथम्भूता इत्याह—दैवीर्विशः देवानामिमा दैव्यः । 'देवाद्यञञौ' इत्यञ्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । विशः प्रजाः दैव्यः प्रजा भूत्वा देवानुपगच्छन्त्वित्यर्थः । 'दैवीर्ह्येता विशस्सतीर्देवानुपयन्ति'* इति च ब्राह्मणम् । यद्वा—दैवीर्विशः इति द्वितीया, देवान्दैवीश्च विशः उपगच्छन्तु । किञ्च—वह्नीरुशिजः यज्ञस्य वोढारः ऋत्विजो वह्नयः । 'वहिश्रिश्रुयुद्रुग्ला' इत्यादिना वहेर्निप्रत्ययः, निदिति हि तत्रोच्यते, 'तस्माच्छसो नः' इति नत्वं न क्रियते 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति । उशिजः कामनावन्तः भक्षणरुचयः । यद्वा—कमनीयाः स्पृहणीया इत्यर्थः । शेषभक्षणादिना तानप्युपगच्छन्तु । 'ऋत्विजो वै वह्नय उशिजः'* इत्यादि ब्राह्मणम् । 'वशेः किच्च' इति वष्टेरिजिप्रत्ययः । अतः परं विराडेकपदा । हे बृहस्पते त्वमपि

*सं. ६-३-६.

वसूनि हव्या ते स्वदन्तां देव त्वष्टर्व-

हव्या । ते । स्वदन्ताम् । देव । त्वष्टः । वसु ।

---

वसूनि धनानि पशुलक्षणानि यजमानार्थं धारय । 'ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनवरुन्धे'* इति ब्राह्मणम् । यद्वा—ब्रह्मा बृहस्पतिः । हे ब्रह्मन् अवदानलक्षणानि वसूनि धनानि धारय अवधारयेत्यर्थः । ब्रह्मा हि कर्मणामध्यक्षः । आमन्त्रितस्याविद्यमानत्वात् धारयेति न निहन्यते, 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । हे पशो ते तव हव्या हव्यान्यवदानलक्षणानि । 'शेश्छन्दसि बहुलम्' इति लुक् । स्वदन्तां स्वादूनि भवन्तु । ष्वद आस्वादने अनुदात्तेत् भौवादिकः । देव त्वष्टः । 'नामन्त्रिते समानाधिकरणे' इति पूर्वस्याविद्यमानत्वनिषेधाद्द्वितीयं निहन्यते । त्वमपि क्षीरादीनां सर्वेषां वासहेतुं पशुलक्षणं धनं रण्व रमय सर्वेषां स्पृहणीयरूपं कुरु । 'त्वष्टा वै पशूनां मिथुनानां रूपकृद्रूपमेव पशुषु दधाति'* इति ब्राह्मणम् । रवि गतौ, इदित्त्वान्नुम्, इह त्वयं रमत्यर्थे वर्तते । यद्वा—वसु वरिष्ठं रूपं रण्व रमय । पशून्वरिष्ठं हि वासयति । 'शृस्पृस्निहि' इत्यादिना वसेरुप्रत्ययः, निदिति तत्रानुवर्तते । यद्वा—पशुलक्षणं धनं यजमाने रण्व रमय स्थिरीकुरु । यजमानं वा प्रापय । हे रेवतीः रेवत्यः क्षीरादिधनवत्यः पशवः । 'पशवो वै रेवतीः पशूनेवास्मै रमयति'* इति ब्राह्मणम् । रैशब्दान्मतुपि 'रयेर्मतौ बहुलम्' इति सम्प्रसारणम्, 'संज्ञायाम्' इति मतुपो वत्वम्, पाष्ठिक-

---

*सं. ६-३-६.

सुं रण्व रेवती रमध्वमुग्नेर्जनि-
त्रमसि वृषणौ स्थ उर्वश्यस्या-

रण्व । रेवतीः । रमध्वम् । [3]अग्नेः । जनित्रम् ।
असि । [4]वृषणौ । स्थः । [5]उर्वशी । असि । [6]आयुः ।

आमन्त्रिताद्युदात्तत्वम्, तस्याविद्यमानत्वाद्रमध्वमिति न निहन्यते, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यूयमपि रमध्वम् अस्मिन्यजमाने अनुरक्ता भवध्वम् । अस्मत्सम्बन्धिपशुरनेन हिंस्यत इति युष्माकं विरतिर्माभूदित्यर्थः ॥

[3]अधिमन्थनशकलं निदधाति—अग्नेर्जनित्रमसीति ॥ अग्नेर्जनित्रं जनकं प्रजननस्थानीयमसि हे शकल । 'अशित्रादिभ्य इत्रोत्रौ' इति जनेरित्रप्रत्ययः ॥

[4]वृषणावन्वञ्चौ निदधाति—वृषणौ स्थ इति ॥ हे शकलौ वृषणौ वृषणस्थानीयौ यागस्य युवां स्थः । यागद्वारेण वा वर्षितारौ कामानां स्थः । 'कनिन्युवृषि' इत्यादिना वृषेः कनिन्प्रत्ययः । वृषणशब्दाद्द्विवचने 'वा षपूर्वस्य निगमे' इति दीर्घाभावः ॥

[5]अरणी आदत्ते अधरोत्तरौ क्रमेण—उर्वश्यस्यायुरसि पुरूरवाः इत्येताभ्याम्, यथाहुः—'उर्वशीत्यधरारणिमादत्ते, पुरूरवा इत्युत्तरारणिम्' इति ॥ हे अधरारणे उर्वश्यसि । 'घृतेनाक्ते'* इत्यादिनिदर्शनात्त्रिलिङ्गोऽप्यरणिशब्दश्छन्दसि । उरु महान्तमस्याधारत्वेनाश्नुते व्याप्नोतीत्युर्वशी । अश्नुतेः कर्मण्यण्, 'संज्ञा-

*सं. १-३-७

युरसि पुरूरवा घृतेनाक्ते वृषणं दधा-

आसि । पुरूरवाः । [7]घृतेन । अक्ते इति । वृषणम् ।

पूर्वको विधिरनित्यः ' इति वृद्धिर्न क्रियते । यद्वा—परोक्षवृत्त्येदमुच्यते । यथा 'तं वा एतं षड्ढूतं सन्तं । षड्ढोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः '* इति । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् ॥

[6]अथोत्तरारणिमादत्ते—आयुरसीति ॥ एति विश्वं क्षणेन कर्मणा† इत्यायुः । आयन्ते प्राप्यन्तेभिमतानीति वा आयुः अग्निरुच्यते । 'छन्दसीणः' इत्युण्प्रत्ययः । तद्वती उत्तरारणिः आयुरुच्यते, 'आत्मा वै पुत्रनामासि' इति पितापुत्रयोरभेदेन निर्देष्टुं शक्यत्वात् । उर्वशीपुरूरवसोः आयुर्नामपुत्रो बभूव, तद्रूपेणारण्योरग्निस्स्वरूपेण वा क्रियते । तत्राधरारणिरुर्वशी माता, उत्तरारणिः पुरूरवाः पिता, अग्निरायुः पुत्र इति । 'उर्वश्यस्यायुरसीत्याह मिथुनत्वाय '‡ इति ब्राह्मणम् । तस्मात्पितापुत्रयोरैकशब्द्यम् । यद्वा—ईर्यतेनयाग्निरित्यायुः उत्तरारणिरग्नेरानयनहेतुरिति यावत् । तादृशी त्वमसि हे उत्तरारणे । अपि च—पुरूरवाः पुरु बहु राति मन्थनवेळायां शब्दं करोतीति पुरूरवाः । पुरुपूर्वाद्रातेरसुनि उपपदस्य दीर्घत्वं निपात्यते पुरूरवा इति, कृदुत्तरपदप्रकृतिस्वरत्वम् । 'परादिश्छन्दसि बहुलम्' इति वा उत्तरपदाद्युदात्तत्वम् ॥

[7]आज्यस्थाल्यामरणी समनक्ति—घृतेनेति त्रिष्टुभैकपदया ॥ घृते-

*तै.ब्रा. २-३-११. †ख—आयुरसीति ॥ विश्वं कणेन रक्षति. ‡सं. ६-३-५.

थां गायत्रं छन्दोनु प्र जांयस्व त्रैष्टुभं जागंतं छन्दोनु प्र जांयस्व भवं- तम् ॥ १२ ॥ नस्समंनसौ समों-

दधाथाम् । [8]गायत्रम् । छन्दः । अनु । प्रेति । जायस्व । [9]त्रैष्टुभम् । [10]जागंतम् । छन्दः । अनु । प्रेति । जायस्व । [11]भवंतम् ॥ १२ ॥ नः । समंनसाविति स–मनसौ । समोंकसाविति सं–

नाक्ते । वृ क्षरणे । वृषणं वर्षितारं कामानां अग्निं वृष्टिप्रदं वा दधाथां धारयतं धत्तं वा । 'वृषणं होते दधाते ये अग्निम्'* इति ब्राह्मणम् । पूर्ववद्दीर्घाभावः ॥

[8–10]प्रजातीर्वाचयते—गायत्रमिति ॥ हे अग्ने मथ्यमानस्त्वं गायत्रं छन्दोनुप्रजायस्व, गायत्रं हि छन्दोनूच्यमानं श्रुत्वा त्वं जायसे । 'अनुर्लक्षणे' इत्यनोः कर्मप्रवचनीयत्वम्, यथा 'शाकल्यस्य संहितामनुप्रावर्षत्' इति । 'छन्दोभिरेवैनं प्र जनयति'* इति ब्राह्मणम् । एवं त्रैष्टुभं छन्दोनुप्रजायस्वेत्यनुकम्प्यते । अत्र 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसङ्ख्यानम्' इति स्वार्थे प्रत्ययः । तत्र गायत्रशब्दात्प्राग्दीव्यतीयोण्, इतराभ्यामुत्सादित्वादञ्, 'उपसङ्ख्यानम्' इति प्राग्दीव्यतीयत्वात् ॥

[11]जातमग्निमाहवनीये प्रहरति—भवतन्न इति पङ्क्त्या पञ्चपदया वस्वष्टकतुदशाक्षरया ॥ योग्निः पुरा भवत्याहवनीये, यश्चेदानीं

*सं. ६-३-५.

कसावरेपसौं । मा यज्ञꣳ हिꣳसिष्टं
मा यज्ञपतिं जातवेदसौ शिवौ

ओकसौ । अरेपसौ । मा । यज्ञम् । हिꣳसिष्टम् ।
मा । यज्ञपतिमिति यज्ञ-पतिम् । जातवेदसाविति
जात-वेदसौ । शिवौ । भवतम् । अद्य । नः ।

मथित्वा प्रणीयते, हे तौ द्वावग्नी भवतं भूयास्तं नः अस्माकं समनसौ समानमनस्कौ अविप्रतिपन्नमनस्कौ । 'समानस्य छन्दसि' इति सभावः । समोकसौ सहसमवेतौ समाननिवासाविति यावत् । उच समवाये, सम्पूर्वादसुन्प्रत्ययः, बहुलवचनात्कुत्वम् । समुच्येते इति समोकसौ । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—सम्शब्दस्य समानार्थवृत्तेर्बहुव्रीहिः । सम्भावो वा समानस्य छान्दसः । अरेपसौ अपापौ पापाभिनिवेशरहितौ । "नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यस्मादरेपसौ तस्माद्यज्ञमिमं मा हिंसिष्टम् । मा च यज्ञपतिं यजमानम् । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । हे जातवेदसौ जातप्रज्ञानौ जातधनौ वा । वेत्तेर्विन्दतेर्वा असुन् । यद्वा—जातं विश्वं वित्तो विन्दत इति वा कारकपूर्वादसुन्, पूर्ववत्प्रकृतिस्वरत्वम्, इह तु आष्टमिकमाद्युदात्तत्वम् । तादृशौ युवां अद्य अस्मिन्कर्मकाले नः अस्माकं शिवौ शान्तौ भवतम् । 'सद्यः परुत्' इत्यत्र इदमोद्यशब्दो निपात्यते । 'अग्निः पुरा भवत्यग्निं मथित्वा प्र हरति'* इत्यादि ब्राह्मणम् ॥

*सं. ६-३-५.

भवतम॒द्य नः । अ॒ग्नावृ॒ग्निश्च॑रति॒
प्रवि॑ष्ट॒ ऋषी॑णां पु॒त्रो अ॑धिरा॒ज ए॒षः ।

[12]अ॒ग्नौ । अ॒ग्निः । च॒र॒ति॒ । प्रवि॑ष्ट॒ इति॒ प्र-वि॒ष्टः । ऋषी॑णाम् । पु॒त्रः । अ॒धि॒रा॒ज इत्य॑धि-रा॒जः । ए॒षः । स्वा॒हा॒कृत्येति॑ स्वाहा-कृत्य॑ । ब्रह्म॑णा ।

[12]प्रहृत्य स्रुवेणाभिजुहोति—अग्नावग्निरिति चतुष्पदया त्रिष्टुभा ॥ अग्नौ आहवनीये प्रविष्टो मथित्वा तत्र प्रहृतोयमग्निश्चरति चरतु भक्षयतु इदमाज्यम् । 'प्रहृत्य जुहोति जातायैवास्मा अन्नमपि दधाति'* इति च ब्राह्मणम् । चरतेः पञ्चमो लकारः । प्रविष्ट इति 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । ऋषयो ज्ञातारः ऋत्विजः । ऋषन्तीति ऋषयः, 'इगुपधात्कित्' इतीन्, वृषादिर्द्रष्टव्यः । तेषां पुत्रः; ते ह्येनं जनयन्ति । अधिराज एषः अधिकं राजत इत्यधिराजः । पचाद्यच्, कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा—अध्यारूढो राजा अधिराजः दीप्तिमतामुत्तमः । 'राजाहस्सखिभ्यष्टच्' । स्वाहाकृत्य स्वाहाकारं कृत्वा । यद्वा—स्वाहुतिस्स्वाहेति जुहोतेस्स्वाङुपसृष्टादौणादिको डाप्रत्ययः । ब्रह्मणा मन्त्रेण शोभनामाहुतिं कृत्वा, इमामाज्याहुतिं ते तुभ्यं जुहोमीति। स्वाहाशब्दस्योर्यादित्वाद्गतिसंज्ञा । गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा—ब्रह्म बृहत् इदमाज्यं जुहोमि । 'तृतीया च होश्छन्दसि' इति तृतीया । त्वं च तथा हुतस्सन् देवानां भागधेयं भागं मिथुया मा कः मिथ्या मा कः मा कार्षीः; मिथ्याकरणं स्तेयम् । 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । 'भागरूपनामभ्यो

*सं. ६-३-५.

स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा
देवानांम्मिथुया कंर्भागधेयंम्॥१३॥
आ ददृ ऋतस्यं त्वा देवहविः

ते । जुहोमि । मा । देवानांम् । मिथुया । कः ।
भागधेयमितिं भाग-धेयंम् ॥ १३ ॥
भवंतमेकांत्रिꣳशच्च ॥ ७ ॥
[1]एतिं । ददे । [2]ऋतस्यं । त्वा । देवहविरितिं

धेयः ' इति स्वार्थे धेयप्रत्ययः । यद्वा—मिथःकरणं मिथुयाकरणं परस्परसङ्करो भागानां, यथा वायव्यमिन्द्राय प्रदीयते, तथा ऐन्द्रं वायव इति, तथा मा कार्षीः । ' अव्ययादाप्सुपः ' इति लुकं बाधित्वा ' सुपां सुलुक् ' इत्यादिना विभक्तेर्याजादेशः ॥

इति तृतीये सप्तमोनुवाकः.

---

[1]अथ पशुरशनामादत्ते—आ ददृ इति ॥ गृह्णामीत्यर्थः । अस्य शेषभूतस्सावित्रो ' देवस्य त्वा ' इत्यादिना व्याख्यात*एव ॥

[2]तया अक्ष्णया पशुमभिनिदधाति—ऋतस्य त्वेति ॥ हे देव-हविः देवानां हविर्भूत पशो, ऋतस्य सत्यस्य यज्ञस्य वा पाशेन बन्धिकयानया रशनया त्वामालभे बध्नामि । यद्वा—ऋतस्य यज्ञस्यार्थाय त्वां पाशेन बध्नामि । ' सत्यं वा ऋतम् '† इत्यादि ब्राह्मणम्, ' अक्ष्णया परि हरति '† इत्यादिं च ॥

*सं. १-१-४[4] †सं. ६-३-६.

पाथो॑ना रं॒भे घर्.॒षा मानु॑षान॒द्भ्य-

दे॒व-ह॒विः॒ । पाथो॑न । ए॒ति॒ । र॒भे॒ । [3]धर्षं॑ । मानु॑-
षान् । [4]अ॒द्भ्य इत्य॑त्-भ्यः । त्वा॒ । ओष॑धीभ्य॒

[3]तेन यूपे पशुं नियुनक्ति—धर्षा मानुषानिति ॥ मनुष्येभ्य आगता उपद्रवा मानुषाः । अत्र 'हलस्तद्धितस्य' इति यलोपः; वृषादित्वादाद्युदात्तत्वम् । उत्सादिर्वा द्रष्टव्यः । तान् धर्ष अभिभव, यागसाधनत्वेन देवत्वप्राप्त्या मानुषोपद्रवरहितो भवेत्यर्थः । धृष प्रसहने, चौरादिक उदात्तेदानुदात्तेत्योः । प्रसहनमभिभवः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । यद्वा—मनुष्या एव मानुषाः । 'मनोर्जातौ' इत्यञ् । तान् धर्ष देवत्वप्राप्त्यैव ॥

[4]पशुं प्रोक्षति—अद्भ्यस्त्वेति ॥ तादर्थ्ये चतुर्थी, आप ओषधयश्च भूयासुरित्येवमर्थम् । हे पशो त्वां प्रोक्षामि प्रकर्षेण सिञ्चामि । पशोरपामोषधीनां कार्यत्वात्कार्यकारणयोश्चाभिन्नत्वात् कार्यभूतपशुप्रोक्षणेन तत्कारणानां सिद्धिरिति भावः । 'अद्भ्यो ह्येष ओषधीभ्यस्सम्भवति यत्पशुः'* इति च ब्राह्मणम् । यद्वा—अद्भ्य ओषधीभ्यश्च जातं त्वां प्रोक्षामि; कारणेन हि कार्याणां शुद्धिः । पवित्रेणोत्पूतत्वादोषधिसम्बन्धोऽप्यस्ति । 'ऊडिदम्' इत्यादिना अद्भ्यः परस्या विभक्तेरुदात्तत्वम् । ओषधिशब्दस्य दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । ओषशब्दो घञन्त आद्युदात्तः ॥

*सं. ६-३-६.

स्त्वौषधीभ्यः प्रोक्षाम्यपां पेरुरसि
स्वात्तञ्चित्सदेवꣳ हव्यमापो देवी-

इत्योषधि—भ्यः । प्रेति । उक्षामि । [5]अपाम् ।
पेरुः । असि । [6]स्वात्तम् । चित् । सदेवमिति स—

---

[5]पाययति—अपां पेरुरसीति ॥ हे पशो अपां पेरुः पातासि त्वं, ततः इमाः पिबेति गम्यते । यद्वा—असीति पञ्चमो लकारः, अपां पाता भव । पूर्ववदङ्गचोविभक्तेरुदात्तत्वम् । पा पाने, 'मापो रुरिच्च' इति पिबतेरुप्रत्ययः इकारश्च, पेरुः । 'एष ह्यपां पाता'* इत्यादि ब्राह्मणम् । पानेन चान्तश्शुद्धिः क्रियते 'पाययत्यन्तरत एवैनम्मेध्यं करोति'* इति च ब्राह्मणम् ॥

[6]अधस्तादुपोक्षति—स्वात्तमिति द्विपदया गायत्र्या ॥ स्वात्तमास्वाद्यमानं स्वादुभूतमित्यर्थः । स्वाद आस्वादने । 'आदितश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वादाश्वस्तादिवदिडभावः । चिदित्यप्यर्थे, एवार्थे वा; पूर्वमेव स्वादुं सन्तमेनं हव्यं पशुं स्वदत आस्वादयत स्वादुतमं कुरुत । ष्वद स्वर्द आस्वादने अनुदात्तेत्, तस्मात् ण्यन्ताल्लोटि 'बहुलं संज्ञाच्छन्दसोः' इति णेर्लुक् । 'अणावकर्मकात्' इति परस्मैपदम्, स्वदमानस्य पशोश्चित्तवत्त्वात् । 'स्वदयत्येवैनम्'* इति च ब्राह्मणम् । हे आपो देवीः देव्यः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । अत्र आप इति पादादित्वान्न निहन्यते, षाष्ठिकमामन्त्रिताद्युदात्तत्वं प्रवर्तते ।

---

*सं. ६-३-६.

स्वदंतैनꣳ सन्ते प्राणो वायुना

देवम् । हव्यम् । आपः । देवीः । स्वदत । एनम् । सम् इति । ते । प्राण इति प्र—अनः । वायुना ।

'विभाषितं विशेषवचने बहुवचनम्' इति तस्याविद्यमानत्वनिषेधाद्देवीरिति निहन्यते । 'आमन्त्रितं पूर्वमविद्यमानवत्' इति तयोर्द्वयोरप्यविद्यमानत्वेन पादादिभूतं स्वदतेति तिङन्तं न निहन्यते । एनादेशोनुदात्त एव । हव्यं पशुर्विशेष्यते—सदेवं देवसहितं देवाधिष्ठितम् । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्य' इति सभावः । सदेवत्वस्यानाशास्यत्वात् तेन 'प्रकृत्याशिष्यगोवत्सहल' इति प्रकृतिभावाभावः । पुनश्च विशेष्यते—हव्यं हविर्भूतम् । जुहोतेः 'अचो यत्' इति यत्, उञ्छादिर्द्रष्टव्यः । यद्वा—हवमर्हतीति हव्यम् । 'छन्दसि च' इति यत्प्रत्ययः ॥

'जुह्वा पशुं समनक्ति ललाटे ककुदि श्रोण्यां च—सन्ते प्राण इति पुरउष्णिहा त्रिपदया द्वादशावस्त्वष्टाक्षरया ॥ तत्र ललाटे समनक्ति—सन्ते प्राणो वायुना गच्छतामिति । हे पशो त्वदीयः प्राणो वायुः वायुना बहिष्ठेन भूतात्मना सह सङ्गच्छतामेकीभवतु । 'समोगमृच्छि' इत्यात्मनेपदम् । 'वायुदेवत्यो वै'* इत्यादि ब्राह्मणम् ॥

*सं. ६-३-७.

गच्छताꣳ सं यजत्रैरङ्गानि सं यज्ञ-
पतिराशिषा घृतेनाक्तौ पशुं त्रायेथाम्

गच्छताम् । [8]सम् इति । यजत्रैः । अङ्गानि । [9]सम् इति ।
यज्ञपतिरिति यज्ञ-पतिः । आशिषेत्या-शिषा ।
[10]घृतेन । अक्तौ । पशुम् । त्रायेथाम् । [11]रेवतीः ।

[8]ककुदि समनक्ति—सं यजत्रैरिति ॥ त्वदीयान्यङ्गानि हृदयादीनि यजत्रैर्यागैस्सङ्गच्छन्तां यागसाधनानि भवन्तु । यद्वा—यागसाधनैस्सङ्गच्छन्तां यागसाधनमध्ये वर्तन्ताम् । गच्छन्तामिति लौकिको वाक्यशेषः, अनुषङ्गस्याभावात् । 'अमिनक्षियजिवधिपतिभ्योऽत्रन्' इति यजेरत्रन्प्रत्ययः । 'विश्वरूपो वै त्वाष्ट्र उपरिष्टात् पशुमभ्यवमीत्'* इत्यादि ब्राह्मणम् ॥

[9]दक्षिणस्यां श्रोण्यां समनक्ति—सं यज्ञपतिरिति ॥ यज्ञपतिर्यजमान आशिषा प्रार्थनापदेन सङ्गच्छताम् । लौकिक एव वाक्यशेषः, लौकिकेन बहुवचनेन वैदिकस्य व्यवहितत्वात् । 'पत्यावैश्वर्ये' इति यज्ञपतिशब्दे पूर्वपदस्य प्रकृतिस्वरत्वम् । आङ्पूर्वाच्छासेः क्विपि इत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[10]स्वधितिं स्वरुं च जुह्वामङ्क्त्वा ताभ्यां पशुं समनक्ति—घृतेनेति ॥ हे स्वरो स्वधिते घृतेन प्रयाजशेषेणानेन अक्तौ सन्तौ पशुं त्रायेथां समञ्जनेन रक्षतम् । 'वज्रो वै स्वधितिर्वज्रो यूपशकलः'* इत्यादि ब्राह्मणम् ॥

*सं. ६-३-७.

थाः॒ रेव॑तीर्य॒ज्ञप॑तिं प्रि॒य॒धा विंशा-
तोरो॑ अन्तरि॑क्ष स॒जूर्दे॒वेन॑ ॥ १४ ॥

य॒ज्ञप॑ति॒मिति॑ य॒ज्ञ-प॒तिम् । प्रि॒य॒धेति॑ प्रि॒य-धा । एति॑ । वि॒श॒त॒ । उरो॒ इति॑ । अ॒न्त॒रि॒क्ष॒ । स॒जूरिति॑ स-जूः । दे॒वेन॑ ॥ १४ ॥ वाते॑न ।

[11]पशुमुदञ्चन्नीयमानमनुमन्त्रयते—रेवतीर्यज्ञपतिमिति यजुरादिकया उरो अन्तरिक्षेति पञ्चपद्या स्कन्नेशवसुमुनिस्वराक्षरया ॥ क्षीरादिरयिमन्तः पशवो रेवतीशब्देनोच्यन्ते । 'पशवो वै रेवतीः'* इति च ब्राह्मणम् । 'रयेर्मतौ बहुलम्' इति सम्प्रसारणम्, 'संज्ञायाम्' इति मतुपो वत्वम्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्, आमन्त्रिताद्युदात्तत्वम् । अवयवेषु समुदायशब्दस्तद्धर्मश्चोपचर्यते । हे रेवतीः रयिमन्तः पश्ववयवाः, यज्ञपतिं यजमानं, प्रियधा प्रियं धारयन्त्य आविशत यजमानस्य यागसिद्ध्यर्थं अवदानात्मना प्रीतिपूर्वकं तिष्ठत । प्रियं दधातीति दधातेः 'आतोनुपसर्गे कः' इति कः, टाप्, कृदुत्तरपदप्रकृतिस्वरत्वम्, 'सुपां सुलुक्' इति जसो लुक् । यद्वा—प्रियधा प्रियस्य धारणेन आविशत प्रियं धारयित्वैव यजमाने तिष्ठत । प्रियस्य धानं प्रियधा । तृतीयैकवचने आतो लोपे उदात्तनिवृत्तिस्वरत्वम् । यद्वा—व्यत्ययेन असङ्ख्याया अपि विधार्थे धाप्रत्ययः । प्रियप्रकारेणेत्यर्थः । यज्ञदेवता वा यज्ञपतिस्तां प्रीतिपूर्वकं भक्ष्यत्वेन सयुग्भावेन वा आविशत । यद्वा—सर्वे पशव उच्यन्ते—अयमस्माकमेको हन्तुं नीयत इति उद्वेगं मा कार्ष्ट ।

*सं. ६-३-६.

वातेनास्य हविषस्त्मना यज सम-
स्य तनुवा भव वर्षीयो वर्षीयसि

अस्य । हविषः । त्मना । यज । सामिति । अस्य । तनुवा । भव । वर्षीयः । वर्षीयासि । यज्ञे ।

---

यजमानस्योपभोगाय प्रीतिपूर्वकं तस्मिन्वर्तध्वम् । अन्तरिक्षशब्देन पशोस्सुषिराणि श्रोत्रादीनीन्द्रियाण्युच्यन्ते; समुदायापेक्षमेकवचनम् । हे उरो विस्तीर्ण अन्तरिक्ष श्रोत्रादीन्द्रियसमुदाय त्वं सजूः समानप्रीतिर्भूत्वा । 'समानस्य छन्दसि' इति सभावः, 'ससजुषोः' इति रुत्वम्, 'त्रिचक्रादीनामन्तः' इत्युत्तरपदान्तोदात्तत्वम् । केन सजूः ? देवेन दीप्तिमता वातेन पशुप्राणेन । किञ्च—त्मना आत्मना पशुक्षेत्रज्ञेन च सजूः । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः । एवमाभ्यामपि सह त्वं समानप्रीतिर्भूत्वास्य हविषो यज इदं पश्वात्मकं हविर्देहि यागार्थमिदानीं सर्वेपि* यूयमनुजानीतेत्यर्थः । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणस्सम्प्रदानत्वात् 'चतुर्थ्यर्थे बहुळम् छन्दसि' इति षष्ठी । यजतिर्दानकर्मा । उरो इति पादादित्वान्निघाताभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । 'नामन्त्रिते समानाधिकरणे' इति तस्याविद्यमानवत्त्वनिषेधात्परमामन्त्रितं निहन्यते । किञ्च—अस्य पशोस्तन्वा शरीरेण सम्भव संयुज्यस्व । देवभूतस्याप्यस्य पशोश्शरीरं मा हिंसीः । अपि च—हे वर्षीयः प्रवृद्धतरश्रोत्रादीन्द्रियसमुदाय वर्षीयसि प्रवृद्धतरे यज्ञे यज्ञपतिं यजमानं धाः धारय अविघ्नेन स्थापय । हविष्यमस्य अनुभावय

---

*क—गार्थमिदं सर्वमपि.

**य॒ज्ञे य॒ज्ञप॑तिं धाः पृ॒थि॒व्यास्स॒म्पृचः॑**

**य॒ज्ञप॑ति॒मिति॑ य॒ज्ञ–प॒ति॒म् । धाः॒ । [12]पृ॒थि॒व्याः ।**

---

शीघ्रं यज्ञं निर्वर्तय । यद्वा—यज्ञफले स्थापय यागसाधनद्वारेण यजमानं यज्ञफलभाजं कुरु । अथवा—अस्य हविषो यजेति पूर्वं हविषः प्रार्थना कृता, अधुना तदेव हविरुच्यते—हे हविः अस्य पशोस्तन्वा सम्भव पौष्कल्येन सम्पद्यस्व । पुनरपि तदेवामन्त्र्यते—हे वर्षीयो हविः वर्षीयसि यज्ञे यागसाधनद्वारेण यज्ञपतिमविघ्नेन स्थापय । धा इति दधातेर्लेटि, 'बहुलं छन्दसि' इति शपो लुक्, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः । तनुवेति 'तन्वादीनां छन्दसि बहुलम्' इत्युवङादेशः । यज्ञपतिशब्द उक्तस्वरः ॥

[12]पशुनिहननस्थाने निहन्यमानाय बर्हिरुपास्यति—पृथिव्या इति ॥ प्रस्तरनिधाने व्याख्यातम् * । अत्रैवं वा—पृथिवीसम्पर्कदोषात्पशुं रक्षेति । 'पृथिव्यास्सम्पृचः पाहीति बर्हिरुपास्यत्यस्कन्दायास्कन्नꣳ हि तद्यद्बर्हिषि स्कन्दति '† इति च ब्राह्मणम् । यद्वा—पृथिवीसाम्पर्कादन्यान्पशूनूक्षेति ॥

[13]पत्नीमादित्यमुदीक्षयति—नमस्त आतानेति ॥ हे आतान आदित्य तुभ्यं नम इदमस्तु । आतन्वन्ति विस्तारयन्ति विश्वं जगदित्याताना: आदित्यरश्मयः । 'आदित्यस्य वै रश्मय आतानास्तेभ्य एव नमस्करोति'† इति ब्राह्मणम्, 'पश्चाल्लोका वा एषा प्राच्युदानीयते यत्पत्नी '† इति च । तनोतेराङ्पूर्वाल्ल्युटयूच्च् ।

---

*सं. १-१-२[10] †सं–६–३–८.

पाहि नर्मस्त आतानानर्वा प्रेहि

सम्पृच इतिं सं-पृचंः । पाहि । [13]नर्मः । ते ।

यद्वा—आतन्यन्ते विस्तार्यन्ते भास्करेणेत्याताना: रश्मयः । कर्मणि घञ्, थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । अत्र तु तद्वानादित्य एवातान इत्युच्यते ॥

[14]प्राचीमुदानयन्वाचयति—अनर्वा प्रेहीति ॥ कुत्सितमरणं गमनमर्वा; 'भ्रातृव्यो वा अर्वा'* इति च ब्राह्मणम् । 'अवद्यावमाधमार्वरेफाः कुत्सिते' इत्यर्तेः कनिन् प्रत्ययोर्वादेशश्च निपात्यते तद्रहित अनर्वा । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यस्मात्त्वमनर्वा अनवद्या सदा भर्तुर्वशंगता तस्मात्प्रेहि प्राचीं गच्छ, प्राच्यां हि स्वर्गो लोकः । प्रशब्देन प्राक्त्वं द्योत्यते, यथा 'प्रेयमगात्'† इति । अधुना परमसुखस्वरूपस्वर्गप्राप्तिहेतुत्वं गमनस्याह—घृतस्य कुल्या मन्विति । घृतकुल्योपलक्षितस्वर्गाख्यस्थानविशेषो घृतकुल्याशब्देनोच्यते, तामनुगच्छ तत्र गच्छेत्यर्थः । अनोर्लक्षणे कर्मप्रवचनीयत्वम् । किमेकाकिनी सती? नेत्याह—सह प्रजया सह रायस्पोषेण गच्छ । यद्वा—किं केवलं घृतकुल्योपलक्षितं स्थानमेव प्राप्यते? नेत्याह—सह प्रजया सह रायस्पोषेण प्रजां धनपोषं च प्राप्नुहीति । प्रजाशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । 'ऊडिदम्' इति रैशब्दात्परस्या विभक्तेरुदात्तत्वम् ॥

*सं. ६-३-८. †सं. १-१-२[3]

घृतस्य कुल्यामनु सह प्रजया सह
रायस्पोषेणापो देवीश्शुद्धायुवश्शु-
द्धा यूयं देवाꣳ ऊढ्वꣳ शुद्धा वयं

आतानेत्या-तान। अनर्वा। प्रेति। इहि। घृतस्य। कुल्याम्। अन्विति। सह। प्रजयेति प्र-जया। सह। रायः। पोषेण। [15]आपः। देवीः। शुद्धायुव इति शुद्ध-युवः। शुद्धाः। यूयम्।

---

[15]अपोऽवेक्षमाणां पत्नीं वाचयति—आपो देवीरिति चतुष्पदयाऽनुष्टुभा विद्युन्मालया ॥ हे आपो देवीः देव्यः। 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। शुद्धायुवः शुद्धा आपः शुद्धान् देशकालादीनिच्छन्ति आत्मनः परेषां वा। 'छन्दसि परेच्छायामपि' इति क्यच्, 'नच्छन्दस्यपुत्रस्य' इतीत्वप्रतिषेधे 'अकृत्सार्वधातुकयोः' इति दीर्घः, 'क्याच्छन्दसि' इत्युप्रत्ययः, 'जसादिषु वा वचनं प्राङ्णौ चङ्युपधायाः' इति 'जसि च' इति गुणो न क्रियते। अथवा—अज्जातेश्शुद्धायुरिति संज्ञा, व्युत्पत्तिमात्रं तु क्रियते। तत्र 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यूङ्प्रत्ययः, 'तन्वादीनां छन्दसि' इत्युवङ्, 'विभाषितं विशेषवचने बहुवचनम्' इति आप इत्यस्यामन्त्रितस्याविद्यमानवत्त्वनिषेधात्परमामन्त्रितद्वयं निहन्यते। शुद्धास्स्वयमपि सर्वदा शुद्धाः यूयं देवान् पशोर्वागादीनीन्द्रियाणि ऊढ्वं प्रापयध्वं स्वकारणस्थानं प्रापयत। यद्वा—इमं पशुं देवान् ऊढ्वं वाहयत प्रापयत, यथा

परिविष्टाः परिवेष्टारो वो भूया-
स्म ॥ १५ ॥

देवान् । ऊर्ध्वम् । शुद्धाः । वयम् । परिविष्टा इति परि—विष्टाः । परिवेष्टार इति परि—वेष्टारः । वः । भूयास्म ॥ १५ ॥

देवेन चतुश्चत्वारिंशच्च ॥ ८ ॥

---

देवा भजन्ते तथा कुरुत । वहतिस्स्वरितेत्, तस्माण्ण्यन्ताल्लोटि 'बहुलं संज्ञाछन्दसोः' इति णिलुक्, 'बहुलं छन्दसि' इति शपो लुक्, ङित्यपि बहुलवचनात् वच्यादिना सम्प्रसारणम्, ढत्वादि, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घत्वम् । यद्वा—ऊहतेरनुदात्तेतः प्राप्तिकर्मणो लोटि पूर्ववच्छपो लुक् । यद्वा—देवान्प्रति ऊढ्वं यथेमं पशुं देवा भुञ्जते तथा ऊढ्वं यतध्वमिति यावत् । अत्र देवानित्यत्र नकारस्य संहितायां 'आतोऽटि नित्यं' इति रुत्वम्, 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यनुनासिकः, 'अनुनासिकात्परोनुस्वारः' । वयमपि युष्माभिः परिविष्टास्सर्वतोनुप्रविष्टाः अत एव शुद्धाः युष्मदवेक्षणादियोग्याः वः युष्माकं परिवेष्टारः सर्वतः परिवेष्टारो भूयास्म अवेक्षणादिना । 'गतिरनन्तरः' इति परिशब्दे पूर्वपदप्रकृतिस्वरत्वम् । परिवेष्टृशब्दे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

इति तृतीये अष्टमोनुवाकः.

---

वाक्त आ प्यायतां प्राणस्त आ
प्यायतां चक्षुस्त आ प्यायताꣳ श्रो-
त्रं त आ प्यायतां या ते प्राणाञ्छु-

[1]वाक् । ते । एति । प्यायताम् । [2]प्राण इति प्र-अनः । ते । एति । प्यायताम् । [3]चक्षुः । ते । एति । प्यायताम् । [4]श्रोत्रम् । ते । एति । प्यायताम् । [5]या । ते । प्राणानिति प्र-अनान् ।

---

[1]पत्नी अनुपूर्वं पशोः प्राणानाप्याययति । तत्र वाचमाप्याययति—वाक्त इति ॥ हे पशो त्वदीया वाक् वाक्स्थानं आप्यायतां शुद्ध्यतु ; वृद्धिहेतौ शुद्धौ प्यायतिर्लक्षणया वर्तते । यद्वा—जननान्तरे देवत्वं गतस्य वा तव वाक् * वर्धताम् । 'पशोर्वा आलब्धस्य प्राणान्' † इत्यादि ब्राह्मणम् ॥

[2]प्राणानाप्याययति—प्राणस्त इति ॥ स्पष्टम् । थाथादिस्वरेण प्राणशब्दोन्तोदात्तः ॥

[3]चक्षुराप्याययति—चक्षुस्त इति ॥ गतम् ॥

[4]श्रोत्रमाप्याययति—श्रोत्रं त इति ॥ सुबोधम् ॥

[5]पुनर्वागादीनभिमृशति—या ते प्राणानिति बृहत्या पञ्चपदया अष्टर्तुवसुषडष्टाक्षरया ॥ हे पशो त्वदीयान्प्राणान् या शुक् जगाम प्राप या चक्षुर्जगाम या च श्रोत्रं जगाम, यच्च ते क्रूरमस्माभिः कृतम् । किं पुनस्तत् ? निकर्तनमेव । यच्चान्यद्वक्षःप्रभृति मांस-

---

*क—गतस्य या तव वाक्सा. †सं. ६-३-९.

ऽज॒गाम॒ या चक्षु॒र्या श्रोत्र॑ं यत्ते॑
क्रू॒रं यदास्थि॑तं॒ तत्त॒ आ प्या॑यतां॒ तत्त॑
ए॒तेन॑ शुन्धतां॒ नाभि॑स्त॒ आ प्या॑य-
तां पा॒युस्त॒ आ प्या॑यता॒ꣳ शु॒द्धा-

शुक् । ज॒गाम॑ । या । चक्षुः॑ । या । श्रोत्र॑म् । यत् । ते॒ । क्रू॒रम् । यत् । आस्थि॑त॒मित्या—स्थि॒त॒म् । तत् । ते॒ । एति॑ । प्या॒य॒ता॒म् । तत् । ते॒ । ए॒तेन॑ । शु॒न्ध॒ता॒म् । [6]नाभिः॑ । ते॒ । एति॑ । प्या॒य॒ता॒म् । [7]पा॒युः । ते॒ । एति॑ । प्या॒य॒ता॒म् । [8]शु॒द्धाः । च॒रित्राः॑ । शम् ।

---

लोभेन त्वामास्थितं आश्रित्य स्थितम्* । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । तत्ततः । 'सुपां सुलुक्' इति पञ्चम्या लुक् । ततश्शुचः क्रूरादास्थातुश्च त्वदीयं प्राणादिकं सर्वमाप्यायतां तस्मादनिष्टरूपान्निर्मुक्तं वर्धताम् । किञ्च—तस्मादेव निर्मुक्तमेतेन प्रक्षाळेनेन शुन्धतां शुद्धं भवतु । व्यत्ययेनात्मनेपदम् ॥

[6]नाभिं सम्मृशति—नाभिस्त इति ॥ गतम् ॥

[7]पायुं सम्मृशति—पायुस्त इति ॥ गतमेव ॥

[8]सम्प्रगृह्य पदः प्रक्षाळयाति सहैव—शुद्धा इति ॥ चरित्राश्चरणाः । 'अर्तिलूधूसूखनसहचर इत्रः' इतीत्रप्रत्ययः । ते

---

*ख. ग—अवाशिष्टस्थं.

श्चरित्रारशमद्भ्यः ॥ १६ ॥ शमो-
षधीभ्यश्शं पृथिव्यै शमहोभ्यामो-

अद्भ्य इत्यत्-भ्यः ॥ १६ ॥ शम् । ओषधीभ्य इत्योषधि-भ्यः । शम् । पृथिव्यै । [9]शम् । अहोभ्यामित्यहः-भ्याम् । [10]ओषधे । त्रायस्व । एनम् ।

शुद्धाः अनेन क्षाळनेन भवन्त्विति शेषः । शं सुखं शान्तिर्वा । शाम्यतेर्विच् । अद्भ्य ओषधीभ्यः पृथिव्याश्च हेतुभ्यः, अस्य पशोश्शं भवत्विति शेषः । तादर्थ्ये वा चतुर्थी, अबाद्यर्थं शमस्त्विति । 'ऊडिदम्' इत्यादिना अद्भ्यो विभक्तेरुदात्तत्वम् । ओषधिशब्दो दासीभारादिः, 'ओषधेश्च विभक्तावप्रथमायाम्' इति दीर्घः । 'उदात्तयणो हल्पूर्वात्' इति पृथिव्या विभक्तेरुदात्तत्वम् ॥

[9]अवशिष्टा दक्षिणतोनुपृष्ठमपो निनयति—शमहोभ्यामिति ॥ अहोभ्यां अह्ना रात्र्या च हेतुभ्यां पृथिव्याश्शं भवतु । कुत एतत्? तस्या अनन्तरप्रकृतत्वात् । 'अहोरात्राभ्यामेव पृथिव्यै शुचं शमयति'* इति च ब्राह्मणम् । अहस्सहचरिता रात्रिरप्यहरित्युच्यते, तत एकशेषः । यद्वा—व्यत्ययेन विरूपयोरप्येकशेषः प्रवर्तते । 'सा प्राणेभ्योधि पृथिवीम्'* इत्यादि ब्राह्मणम् ॥

[10]वपाग्रहणदेशे प्राचीनाग्रं बर्हिर्निदधाति—ओषधे त्रायस्वैनमिति ॥ व्याख्यातम् † ॥

*सं. ६-३-९. †सं. १-३-५³.

पॆधे त्रायस्वैनꣳ स्वधिते मैनꣳ
हिꣳसी रक्षसां भागोसीदमहꣳ
रक्षोधमं तमो नयामि योऽस्मान्द्वेष्टि
यं चं वयं द्विष्म इदमेनमधमं तमो

[11]स्वधित इति स्व-धिते । मा । एनम् । हिꣳसीः ।
[12]रक्षसाम् । भागः । असि । इदम् । अहम् ।
रक्षः । अधमम् । तमः । नयामि । यः । अस्मा-
न् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इदम् ।

---

[11]स्वधितिं निदधाति—स्वधिते मैनं हिंसीरिति ॥ व्याख्यात-
मेव* ॥

[12]उपाकरणबर्हिषोर्मूलं लोहितेनाङ्क्त्वा इमां दिशं निरस्यति—
रक्षसां भागोसीति ॥ रक्षसां भागस्त्वमसि । भागशब्दः 'कर्षा-
त्वतः' इत्यन्तोदात्तः । यत्पुनरिह लोहितभक्षणे व्याप्तं रक्ष-
स्तदिदमधमं निकृष्टं तमो नरकं अहमध्वर्युर्नयामि प्रापयामि ।
किञ्च—योस्मान्द्वेष्टि यं च वयं द्विष्मस्तमप्येनं द्वेष्टारं द्वेष्यं
च इदमेव प्रसिद्धं अधमं तमो नरकाख्यं नयामि । 'द्वौ
वाव पुरुषौ'† इत्यादि ब्राह्मणम् ॥

---

*सं. १-३-५[१].    †सं. ६-३-९.

नयामीषे त्वा घृतेन द्यावापृथि-

एनम् । अधमम् । तमः । नयामि । [13]इषे । त्वा ।
[14]घृतेन । द्यावापृथिवी इति द्यावा—पृथिवी । प्रेति ।

[13]वपामुत्खिदति—इषे त्वेति ॥ इट् अन्नं, यजमानस्यैषणीयत्वात् । 'इच्छत इव ह्येष यो यजते'* इत्यादि ब्राह्मणम् ॥ यद्वा—कर्मसिद्धं स्वर्गादिकं कर्मनिर्वृत्तिं वा इच्छतीतीट् यजमानः, तदर्थं तस्याभिमतसिद्ध्यर्थं त्वामुत्खिदामीति शेषः ॥

[14]वपया वपाश्रपण्यौ प्रोर्णोति—घृतेनेति ॥ हे द्यावापृथिवी द्यावापृथिव्यौ द्यावापृथिव्यात्मके वपाश्रपण्यौ । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । द्यावापृथिव्यात्मना वपाश्रपण्यौ स्तूयेते । यद्वा—द्योतनात् द्यौः । दिवेर्डिविप्रत्ययः । पृथुत्वात्पृथिवी । प्रथेष्षिवन्प्रत्ययः । हे ईदृश्यौ वपाश्रपण्यौ घृतेन स्निग्धत्वाद्घृततुल्यया वपयात्मानं प्रोर्ण्वाथां प्रकर्षेणाच्छादयतम् । यद्वा—घृतेन सलिलेन सर्वं जगत्प्रोर्ण्वाथाम् । अथवा—द्यावापृथिव्यावेवोच्येते । हे द्यावापृथिव्यौ घृतस्थानीयया वपया वपाश्रपण्यौ प्रोर्ण्वाथाम् । एवं वा—हे द्यावापृथिव्यौ घृतेन सलिलेन विश्वं प्रोर्ण्वाथाम् । अनेन वपाश्रपण्याच्छादनेन आत्मानमेव प्रोर्ण्वाथाम् । 'द्यावापृथिवी एव रसेनानक्ति'* इति ब्राह्मणम् ॥ 'दिवो द्यावा' इति द्यावादेशः ॥

*सं. ६-३-९.

वी प्रोर्णुवाथामच्छिन्नो रायस्सुवीरं
उर्वन्तरिक्षमन्विंहि वायो वीहिं

ऊर्णुवाथाम् । [15]अच्छिन्नः । रायः । सुवीर इति सु-वीरः । [16]उरु । अन्तरिक्षम् । अन्विति । इहि । [17]वायो इति । वीति । इहि । स्तोकानाम् ।

[15]अधस्ताद्वपां परिवासयति—अच्छिन्न इति ॥ व्याख्यातम् *॥

[16]एति—उर्वन्तरिक्षमन्विहीति ॥ व्याख्यातमेव† । हे वपे उत्स्वेदनविबाधिते अधुना महान्तमन्तरिक्षाख्यं पन्थानं अनुगच्छेति विशेषः । 'क्रूरमिव वा एतत्करोति यद्वपामुत्खिदति '‡ इत्यादि ब्राह्मणम् ॥

[17]आहवनीयस्यान्तिमेष्वङ्गारेषु वपायै प्रातितप्यमानायै अधस्ताद्बर्हिषोग्रमुपास्यति—वायविति ॥ हे वायो स्तोकानां वीहि स्तोकान्वीहि । 'क्रियाग्रहणं कर्तव्यम्' इति सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । वीहि विविधं गच्छ पृथक्पृथक्सर्वान्स्तोकान्विभजेति यावत् । 'तस्माद्विभक्ता स्तोका अव पद्यन्ते '‡इति ब्राह्मणम् । प्रथमं स्तोकान्गृह्णाति, ततो वृष्टिरूपेण विसृजति, ततो महाजलेन विभ्राजति, ततस्तोकात्मना अवपद्यन्ते पृथिव्यामाप इति । एवं बर्हिरग्रदहनजन्मा वायुरामन्त्र्यते 'अग्रं वा एतत्पशूनां यद्वपाग्रम् '‡ इत्यादि ब्राह्मणम् ॥

*सं. १-३-५[9]. †सं. १-१-२[18]. ‡सं ६-३-९.

स्तोकाना॑ᳪ स्वाहो॒र्ध्वन॑भसं मारु॒तं ग॑च्छतम् ॥ १७ ॥

सं ते॒ मन॑सा॒ मन॒स्सं प्रा॒णेन॑ प्रा॒णो

[18] स्वाहा॑ । ऊ॒र्ध्वन॑भस॒मित्यू॒र्ध्व—न॒भ॒स॒म् । मा॒रु॒तम् । ग॒च्छ॒त॒म् ॥ १७ ॥

अ॒द्भ्यो वी॒हि॒ पर्श्वं च ॥ ९ ॥

[1] समिति॑ । ते॒ । मन॑सा । मनः॑ । समिति॑ । प्रा॒णेनेति॑ प्र—अ॒नेन॑ । प्रा॒ण इति॑ प्र—अ॒नः ।

[18] वपाश्रपण्यौ प्रहरति—स्वाहेति ॥ हे वपाश्रपण्यौ युवां स्वाहा स्वाहुते भूत्वा ऊर्ध्वनभसं ऊर्ध्वनभस्संज्ञं मारुतं गच्छतं, यथा तेनैव प्रहृते स्याताम् । ऊर्ध्वं नभत इत्यूर्ध्वनभाः । णभ हिंसायां, अत्र तु गतिकर्मा, तस्मात् 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इत्यसुन्प्रत्ययः । 'ऊर्ध्वनभा ह स्म वै मारुतो देवानाम्'* इत्यादि ब्राह्मणम् ॥

इति तृतीये नवमोनुवाकः.

[1] पृषदाज्येन हृदयमभिघारयति—सन्ते मनसेति ॥ हे हृदय ते तव मनसा मनस्स्थानीयेन मननीयेन वानेन पृषदाज्येन देवानां मनस्सङ्गतमस्तु, तथा देवानामिदं स्पृहणीयमस्तु यथा

*सं. ६-३-९.

जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहैन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदैन्द्रोऽपानो

जुष्टम् । देवेभ्यः । हव्यम् । घृतवदिति घृत-वत् । स्वाहा । [2]ऐन्द्रः । प्राण इति प्र-अनः ।

तेषां मनो न जहातीति । समित्युपसर्गश्रुतेर्योग्यं क्रियापदमध्याह्रियते । किञ्च—त्वदीयेन प्राणेन प्राणस्थानीयेन प्राणसाधनेन वानेन पृषदाज्येन देवानां प्राणस्सङ्गतोस्तु । प्राणशब्दस्थाथादिस्वरेणान्तोदात्तः । एतादृशेन देवानां प्रियतमेन पृषदाज्येन त्वामभिघारयामीति भावः । त्वं च तादृशेनानेनाभिघारितं देवानां जुष्टं प्रियतमं भविष्यसि । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी । 'नित्यं मन्त्रे' इति जुष्टशब्द आद्युदात्तः । किञ्च—हव्यं घृतवत् अनेन पृषदाज्येन तद्वत्कृतं हवनार्हं* च भविष्यसि । 'छन्दसि च' इति हवशब्दाद्यः । यद्वा—'अचो यत्' इति यत्, तदा उञ्छादिर्द्रष्टव्यः । स्वाहा इत्थं त्वामभिघारयामीति स्वैव प्रजापतेर्वागाह । यद्वा—ईदृशं त्वं स्वाहाकार्यं च भविष्यसीति । 'प्राणापानौ वा एतौ पशूनां यत्पृषदाज्यं पशोः खलु वा आलब्धस्य हृदयमात्माभिसमेति '† इत्यादि ब्राह्मणम् ॥

[2]पशोरवदानानि सम्मृशति—ऐन्द्रः प्राण इत्यनुष्टुभा षट्पदया ॥ इन्द्रः ईश्वरः शारीर आत्मा तस्यायमैन्द्रः प्राणः । 'ऐन्द्रः खलु वै देवतया '‡ इति ब्राह्मणम् । सः अस्य

*तं–घृतवत् सघृतं त्वं भक्षणार्हः. †सं. ६-३-१०. ‡सं. ६-३-११.

अङ्गा॑अङ्गा॒ वि वो॑भुव॒द्देव॑ त्वष्ट॒र्भूरि॑
ते॒ सꣳस॑मेतु॒ विषु॑रूपा॒ यत्सल॑-

अङ्गा॑अङ्ग॒ इत्यङ्गा॑—अ॒ङ्गे॒ । नीति॑ । दे॒ध्य॒त् । ऐन्द्रः॑ । अ॒पा॒न इत्य॑प—अ॒नः॒ । अङ्गा॑अङ्ग॒ इत्यङ्गा॑—अ॒ङ्गे॒ । वीति॑ । वो॒भु॒व॒त् । देव॑ । त्व॒ष्टः॒ । भूरि॑ । ते॒ ।

---

पशोरङ्गेअङ्गे सर्वेष्ववयवेषु निदेध्यत् नियमेनात्यर्थं ध्रियतां तिष्ठत्वित्यर्थः, ऐन्द्रत्वादेव । धीङ् आधारे, यङ्लुगन्ताल्लेट्, 'लेटोऽडाटौ' इत्यडागमः, 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति गुणाभावः अलघूपधस्यापि बहुळवचनात् । यद्वा—लटश्शत्रादेशः । अस्त्विति शेषः । यद्वा—विकरणव्यत्ययेन शः, 'एरनेकाचः' इति यणादेशः, 'इतश्च लोपः' । प्राणशब्द उक्तस्वरः । 'अङ्ग इत्यादौ च' इति संहितायां प्रकृतिभावः, आम्रेडितस्य 'अनुदात्तं च' इत्यनुदात्तत्वम् । 'घ्नन्ति वा एतत्पशुं यत्संज्ञपयन्ति'* इत्यादि ब्राह्मणम् । अपानः अधोवृत्तिर्वायुः । सोप्यैन्द्रः; 'ऐन्द्रोऽपानः'* इति च ब्राह्मणम् । सः अङ्गेअङ्गे अस्य पशोर्विवोभुवत् अत्यर्थं विभवतु तिष्ठत्विति यावत् । भवतेर्यङ्लुगन्ताल्लेडादि सर्वं पूर्ववत्, 'भूसुवोस्तिङि' इति हि [तीह?] यङ्लुगन्ते नास्ति [प्यस्ति?] । पूर्ववदपानशब्दोपि थाथादिस्वरेणान्तोदात्तः । एवं प्राणापानवत्त्वं पशोस्सम्पाद्यते । तेन सर्वेपि पशवः प्राणापानवन्तः कृता भवन्ति ।

---

*सं. ६-३-११.

क्ष्माणो भवथ देवत्रा यन्त्नमवसे

सङ्गमिति सं-सम् । एतु । विषुरूपा इति विषु-रूपाः । यत् । सलक्ष्माण इति स-लक्ष्माणः । भवथ । देवत्रेति देव-त्रा । यन्तम् ।

'प्राणापानाविव पशुषु दधाति' *इति ब्राह्मणम् । हे देव त्वष्टः। पादादित्वात्प्रथमं न निहन्यते । 'नामन्त्रिते समानाधिकरणे' इति तस्याविद्यमानत्वनिषेधाद्वितीयं निहन्यत एव । भूरि सर्वं संसमेतु सङ्गच्छताम्। ते त्वत्तः त्वत्प्रसादादिति यावत् । 'त्वाष्ट्रा हि देवतया पशवः'* इति ब्राह्मणम् । एतदुक्तं भवति, यद्विकर्तने पश्वङ्गं विच्छिन्नमवशिष्टं† तत्सर्वं त्वया आर्द्रतया एकीकार्यमिति । एवं हि कृत्स्नेन पशुना यागः कृतो भवति । 'प्रसमुपोदः पादपूरणे' इति समो द्विर्वचनम् । 'अनुदात्तं च' इति द्वितीयस्यानुदात्तत्वम् । किञ्च—हे पशो सर्वेपि यूयं विषुरूपा नानारूपा अतुल्यस्वरूपा अपि सन्त इदानीं सलक्ष्माणः समानलक्षणा हवीरूपेण वावदानरूपेण वा देवान् गच्छन्तस्तुल्यस्वरूपा यद्यस्माद्भवथ। तव खलु हविष्ट्वापत्तौ सर्वेपि युष्मत्सम्बन्धिनः पशवो जात्यभेदात् हविस्स्वरूपास्सम्पद्यन्ते। 'समानस्य छन्दसि' इति सभावः । यद्वा—सह लक्ष्मणा वर्तन्त इति सलक्ष्माणस्सल्ल‡क्षणोपेताः हविष्ट्वापत्त्या सर्वेपि यूयं भवथ। 'वोपसर्जनस्य' इति सहस्य सभावः, 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वम् । 'विषुरूपा ह्येते सन्तस्सलक्ष्माणः

*सं. ६-३-११. †क—यद्विकीर्तितच्यं पश्वङ्गं विशि[श्लि]ष्टं. ‡क—सर्वल.

सखायोनु त्वा माता पितरौ मद-
न्तु श्रीरस्यग्निस्त्वा श्रीणात्वापस्स-

अवसे । सखायः । अन्विति । त्वा । माता । पितरः । मदन्तु । [3]श्रीः । असि । अग्निः । त्वा ।

एतर्हि भवन्ति '* इति ब्राह्मणम् । तस्माद्देवत्रा यन्तं देवान्गच्छन्तम् । 'देवमनुष्यपुरुष' इति त्राप्रत्ययः । सखायस्समानख्याना बन्धवः । 'समाने ख्यस्सचोदात्तः' इतीन्प्रत्ययः । ते च मातरश्च पितरश्च त्वामनुमदन्तु अनुमन्यन्तामनुमोदन्तामिति यावत् । अहो! अयमस्मत्सम्बन्धी पशुर्हवीरूपमापन्नो देवांस्तर्पयितुं याति, ततस्स्वयमपि देवो भविता, ततो वयमपि देवीभूय तेन सह स्वर्गे मोदितास्महे, ततस्सर्वं कुलमनुगृहीतं भविष्यतीति । तदेवाह—अवसे रक्षणाय तव चात्मनश्च । तृप्त्यर्थं वा, अवतिर्हि तृप्तौ च पठ्यते । तस्मादसुन् । 'अनुमतमेवैनं मात्रा पित्रा सुवर्गं लोकं गमयति '* इति च ब्राह्मणम् । मदि हर्षे, दैवादिकः विकरणव्यत्ययेन शप् ॥

[3]पार्श्वेन होमार्थां वसां प्रयौति आलोडयति—श्रीरसीति ॥ श्रीः श्रपणीया पचनीयासि हे वसे । पक्वं हि हूयते । आलोडनजन्मा विशेषः पाकः । श्रीञ् पाके, क्रैयादिकः, तस्मात्सम्पदादिलक्षणः कर्मणि क्विप् । यत एवं तस्मात् अग्निरेव स्वयमागत्य त्वां श्रीणातु पाकविशेषशालिनीं करोतु यस्सर्वस्य पाकहेतुरिति भावः । किञ्च—तथा क्रियमाणां त्वां आपस्समरिणन् सङ्गच्छन्तु त्वा मा मुचन् मा शोषं गमन् इति । री गतिरेषणयोः

*सं. ६-३-११.

मरिणन्वार्तस्य ॥ १८ ॥ त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषंधी-

श्रीणातु । आपः । समिति । अरिणन् । वार्तस्य । ॥ १८ ॥ त्वा । ध्रज्यै । पूष्णः । रꣳह्यै । अपाम् ।

---

क्रैयादिकः उदात्तेत् प्वादिः, तस्मात् 'छन्दसि लुङ्लङ्लिटः' इति लङ्, 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम्, 'श्नाभ्यस्त-योरातः' इत्याकारलोपः । अद्भिस्सङ्गतायां मयि के गुणाः ? इति चेदाह—वातस्य त्वा ध्रज्यै गमनाय । अशुष्कायां हि त्वयि यागनिर्वृत्त्या वातो गच्छति सदागतिर्भवतीत्यर्थः । तस्मा-द्वातस्य ध्रज्यैत्वामापस्समरिणन् इति । ध्रजध्रजि गतौ, तस्मात् 'इन् सर्वधातुभ्यः' इतीन्प्रत्ययः । किञ्च—पूष्णः आदित्यस्य रंह्यै रंहणाय उदयाय । रहि गतौ, इदित्वान्नुम्, पूर्ववदिन्प्रत्ययः, उदात्तनिवृत्तिस्वरेण पूष्णो विभक्तिरुदात्ता । किञ्च—अपां चोषधीनां च रसं रोहिष्यै रोहणाय उत्पत्तये । 'प्रथै रोहिष्यै अव्यथिष्यै' इति निपात्यते । तस्माद्वातादिप्रवृत्तये अग्निस्त्वां श्रीणातु आपश्च त्वां समरिणन् इति । 'ऊडिदम्' इत्यादिना अद्भ्यो विभक्तिरुदात्ता । ओषधिशब्दो दासीभारादित्वादाद्युदा-त्तः । 'पार्श्वेन वसाहोमं प्रयौति मध्यं वा एतत्पशूनाम्'* इत्यादि ब्राह्मणम् । यद्वा—श्रीः श्रयणीया पार्श्वेन मिश्रयि-तव्यासि । 'क्विब्वचि' इत्यादिना श्रयतेः क्विपि दीर्घत्वम् । तस्मादाहवनीयोग्निस्त्वां श्रीणातु सेवतां भक्षयतु† । श्रयतेर्व्यत्य-

---

*सं. ६-३-११. †ख, ग—भजताम्.

नाꣳ रोहिण्यै घृतं घृतपावानः पिब-
त वसां वसापावानः पिबता-
न्तरिक्षस्य हविरसि स्वाहा त्वा-
न्तरिक्षाय दिशः प्रदिश आदिशो

ओषधीनाम् । रोहिण्यै । [4]घृतम् । घृतपावान इति घृत-पावानः । पिबत । वसाम् । वसापावान इति वसा-पावानः । पिबत । अन्तरिक्षस्य । हविः । असि । स्वाहा । त्वा । अन्तरिक्षाय । [5]दिशः । प्रदिश इति प्र-दिशः । आदिश इत्या-

---

येन श्नाप्रत्ययः, धातोश्च दीर्घत्वम् । आपश्च समरिणन्, त्वय्येकीभवन्तु । मा मुचन्नित्येवमर्थं त्वां मिश्रयामीति शेषः, पुनश्च त्वाशब्दश्रुतेः । एवं क्रियमाणे के गुणा लोकस्य ? इत्याह—वातस्येत्यादि ॥ सुबोधम् ॥

[4]वसां जुहोति—घृतमिति ॥ हे घृतपावानो घृतस्य पातारो देवा यूयं घृतं वसागतं पिबत । हे वसापावानः वसायाः पातारः, यूयमपि वसां पिबत । पिबतेः 'आतो मनिन्' इत्यादिना वनिप् । हे वसे त्वमन्तरिक्षस्य अन्तरिक्षवासिनो देवगणस्य हविरसि । यस्मादेवं तस्मात् अन्तरिक्षाय त्वां स्वाहाकरोमीति शेषः ॥

[5]वसाहोमोद्रेकेण दिशो जुहोति दिग्भ्यो जुहोति—दिशः प्रदिश इति ॥ यद्यप्येकैव नित्या सर्वगता दिक्, तथाप्युपा-

वि॒दिश॑ उ॒द्दिश॒स्स्वाहा॑ दि॒ग्भ्यो
नमो॑ दि॒ग्भ्यः ॥ १९ ॥

दिशः॑ । वि॒दिश॒ इति॑ वि-दिशः॑ । उ॒द्दिश॒ इत्यु॑त्-दिशः॑ । स्वाहा॑ । दि॒ग्भ्य इति॑ दिक्-भ्यः॑ । नमः॑ । दि॒ग्भ्य इति॑ दिक्-भ्यः॑ ॥ १९ ॥

वात॑स्या॒ष्टावि॑ꣳशतिश्च ॥ १० ॥

---

थिभेदेन सा भिद्यते, यथा—यत्रादित्य उदेति सा प्राची, यत्रास्तमेति सा प्रतीची, यत्र दृश्य*मानो गच्छति सा दक्षिणा, यत्रादृश्यमानो गच्छति सोदीची, अवाग्गता अधरा†, उद्गता ऊर्ध्वेत्यादि । तत्र दिक्शब्देनाविशेषात्सर्वासां ग्रहणम् । प्रदिगादयस्तु शब्दा विशेषवचनाः । या इति चाध्याह्रियते । अयमर्थः—प्रदिगादिविशेषभिन्ना या दिशः ताभ्यो दिग्भ्यस्स्वाहा स्वाहुतोयं वसाशेषोस्तु । नमश्चास्तु ताभ्यो दिग्भ्यः । अत्र प्रधानभूताः दिशः प्राच्यादयः प्रदिशः । आस्थिता दिशः आदिशः या जन्तुभिरास्थीयन्ते । आगता वा अधोदिशो मध्यदिशश्च । विगता विविधस्वभावा दिशो विदिशः । ताः पुनर्दक्षिणपूर्वादयः कोणदिशः । उद्गता दिश उद्दिशः ऊर्ध्वदिशः । सर्वत्र 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—प्राधान्येन दिशन्तीति प्रदिशः आगत्य दिश-

---

*क—प्रकाश.

†ख—अधोगच्छति यत्र साधोदिक्. ग—अवाग्गता मध्या.

समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ

[1]समुद्रम् । गच्छ । स्वाहा । [2]अन्तरिक्षम् ।

---

न्तीत्यादिशः । विविधं दिशन्तीति विदिशः । ऊर्ध्वं दिशन्तीत्युद्दिशः । ऋत्विगादिना दिशेः क्विन्, कृदुत्तरपदप्रकृतिस्वरत्वम् । ईदृश्यो या दिशस्ताभ्यस्स्वाहा नमश्च दिग्भ्य इति । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । 'दिशो जुहोति दिश एव रसेनानक्ति '* इति ब्राह्मणम् ॥

इति तृतीये दशमोनुवाकः.

---

[1]उपयष्टोपयजति गुदस्य प्रच्छेदात्—समुद्रं गच्छ स्वाहेत्येकादशभिर्मन्त्रैः ॥ समुद्रादिशब्दवाच्याश्च देवताः प्रसिद्धाः । गुदावदानं चेह गच्छेत्युच्यते । समुद्रवाच्यां देवतां गच्छ, स्वाहा करोमीति शेषः, समुद्राय त्वा स्वाहुतं करोमीति । एवमन्तरिक्षादिष्वपि योज्यम् । 'समुद्रं गच्छ स्वाहेत्याह रेत एव तद्दधाति '† इति ब्राह्मणम् । प्रजावृद्धिहेतुत्वादुपयजामेवमुक्तम् । 'यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपयड्भिरेव '† इत्यादि ब्राह्मणम् ॥

[2]अन्तरिक्षं प्रजानां प्रजननं, 'अन्तरिक्षं ह्यनु प्रजाः प्र जायन्ते '† ॥

---

*सं. ६-३-११. †सं. ६-४-१.

स्वाहा देवꣳ सवितारं गच्छ स्वाहा-
होरात्रे गच्छ स्वाहा मित्रावरुणौ
गच्छ स्वाहा सोमं गच्छ स्वाहा
यज्ञं गच्छ स्वाहा छन्दाꣳसि

गच्छ । स्वाहा । [3]देवम् । सवितारम् । गच्छ । स्वाहा । [4]अहोरात्रे इत्यहः-रात्रे । गच्छ । स्वाहा । [5]मित्रावरुणाविति मित्रा-वरुणौ । गच्छ । स्वाहा । [6]सोमम् । गच्छ । स्वाहा । [7]यज्ञम् । गच्छ ।

---

[3]सविता देवस्सर्वस्य प्रेरकः, तेन सवित्रा प्रसूत एवास्मै प्रजाः प्रजनयति ॥

[4]अहोरात्रे प्रजानामाधारत्वेन जन्महेतू, 'अहोरात्रे ह्यनु प्रजाः प्र जायन्ते'* । 'अहस्सर्वैकदेश' इत्यच्समासान्तः, 'हेमन्तशिशिरावहोरात्रे' इति निपात्यते ॥

[5]प्रजानां प्राणापानौ मित्रावरुणौ । तेन 'प्रजास्वेव प्रजातासु प्राणापानौ दधाति'* । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

[6]सोमः प्रजानां देवता, 'सौम्या हि देवतया प्रजाः'* इति ॥

[7]यज्ञः प्रजानामभ्युदयकारी । तेन 'प्रजा एव यज्ञियाः करोति'* इति ॥

---

*सं ६-४-१.

गच्छ स्वाहा द्यावापृथिवी गच्छ
स्वाहा नभो दिव्यं गच्छ स्वाहा-
ग्निं वैश्वानरं गच्छ स्वाहाद्भ्य-

स्वाहा । [8]छन्दाꣳसि । गच्छ । स्वाहा । [9]द्यावापृथिवी इति द्यावा-पृथिवी । गच्छ । स्वाहा । [10]नभः । दिव्यम् । गच्छ । स्वाहा । [11]अग्निम् ।

---

[8]छन्दांसि स्वयं पशवः, तेन पशूनेवावरुन्धे यजमानः प्रजानामेव पुष्ट्यर्थम् ॥

[9]द्यावापृथिव्यौ प्रजानां वृष्टिहेतू, तेन 'प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि गृह्णाति '* इति । 'दिवो द्यावा' इति द्यावादेशः, पूर्ववदुभयपदप्रकृतिस्वरत्वम् ॥

[10]नभस्सलिलम् । दिवे हितं दिव्यं देवेभ्यो हितं सस्याद्युत्पत्तिहेतुत्वेन यागहेतुत्वात् वर्षजलमुच्यते, 'प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नि यच्छति '* इति । समुद्रे† निषेकः । तस्य दिव्येव‡ रक्षा§ 'भवे छन्दसि '¶ इति यत्प्रत्ययः ॥

[11]विश्वेषां नराणाम् सम्बन्धी अग्निर्वैश्वानरो जाठर उच्यते । तेन 'प्रजा एव प्रजाता अस्यां प्रतिष्ठापयति '* इति । आयुष्मतीः करोति । 'नरे संज्ञायाम्' इति पूर्वपदस्य दीर्घत्वम् ॥

---

*सं—६-४-१. †ख. ग. सामुद्रे. ‡क. ग. दिव्येन.

§अत्र सर्वेष्वेव कोशेष्वेवं पाठो दृश्यते । गुरुस्तु—'नियमनं च समुद्रे निषेक्तव्य दिव्येव रक्षा' इति पाठः ।

¶ग. 'छन्दसि च'

स्वाहा देवꣳ सवितारं गच्छ स्वाहा-
होरात्रे गच्छ स्वाहा मित्रावरुणौ
गच्छ स्वाहा सोमं गच्छ स्वाहा
यज्ञं गच्छ स्वाहा छन्दाꣳसि

गच्छ । स्वाहा । [3]देवम् । सवितारम् । गच्छ ।
स्वाहा । [4]अहोरात्रे इत्यहः-रात्रे । गच्छ । स्वाहा ।
मित्रावरुणाविति मित्रा-वरुणौ । गच्छ । स्वाहा ।
सोमम् । गच्छ । स्वाहा । [7]यज्ञम् । गच्छ ।

[3]सविता देवस्सर्वस्य प्रेरकः, तेन सवित्रा प्रसूत एवास्मै
जाः प्रजनयति ॥

[4]अहोरात्रे प्रजानामाधारत्वेन जन्महेतू, 'अहोरात्रे ह्यनु
जाः प्र जायन्ते '* । 'अहस्सर्वैकदेश' इत्यच्समासान्तः,
हेमन्तशिशिरावहोरात्रे' इति निपात्यते ॥

[5]प्रजानां प्राणापानौ मित्रावरुणौ । तेन 'प्रजास्वेव प्रजा-
सु प्राणापानौ दधाति '* । 'देवताद्वन्द्वे च' इति पूर्वोत्त-
दयोर्युगपत्प्रकृतिस्वरत्वम् ॥

[6]सोमः प्रजानां देवता, 'सौम्या हि देवतया प्रजाः '* इति ॥

[7]यज्ञः प्रजानामभ्युदयकारी । तेन 'प्रजा एव यज्ञियाः करो-
'* इति ॥

*सं ६-४-१.

गच्छ स्वाहा द्यावापृथिवी गच्छ
स्वाहा नभो दिव्यं गच्छ स्वाहा-
ऽग्निं वैश्वानरं गच्छ स्वाहाद्भ्य-

स्वाहा । [8]छन्दाꣳसि । गच्छ । स्वाहा । [9]द्यावापृथिवी इति द्यावा—पृथिवी । गच्छ । स्वाहा । [10]नभः । दिव्यम् । गच्छ । स्वाहा । [11]अग्निम् ।

---

[8]छन्दांसि स्वयं पशवः, तेन पशूनेवावरुन्धे यजमानः प्रजानामेव पुष्ट्यर्थम् ॥

[9]द्यावापृथिव्यौ प्रजानां वृद्धिहेतू, तेन 'प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि गृह्णाति '* इति । 'दिवो द्यावा' इति द्यावादेशः, पूर्ववदुभयपदप्रकृतिस्वरत्वम् ॥

[10]नभस्सलिलम् । दिवे हितं दिव्यं देवेभ्यो हितं सस्याद्युत्पत्तिहेतुत्वेन यागहेतुत्वात् वर्षजलमुच्यते, 'प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नि यच्छति '* इति । समुद्रे† निषेकः । तस्य दिव्येव‡ रक्षा§ 'भवे छन्दसि '¶ इति यप्रत्ययः ॥

[11]विश्वेषां नराणाम् सम्बन्धी अग्निर्वैश्वानरो जाठर उच्यते । तेन 'प्रजा एव प्रजाता अस्यां प्रतिष्ठापयति '* इति । आयुष्मतीः करोति । 'नरे संज्ञायाम्' इति पूर्वपदस्य दीर्घत्वम् ॥

---

*सं—६-४-१. †ख. ग. सामुद्रे. ‡क. ग. दिव्येन.

§अत्र सर्वेष्वेव कोशेष्वेवं पाठो दृश्यते । युक्तस्तु—'नियमनं च समुद्रे निषेक्तव्यस्य दिव्येव रक्षा' इति पाठः ।

¶ग. 'छन्दसि च'

स्त्वौषधीभ्यो मनो मे हार्दि
यच्छ तनूं त्वचं पुत्रं नप्तार-
मशीय शुगसि तमभि शोच

वैश्वानरम् । गच्छ । स्वाहा । [12]अद्भ्य इत्यत्–भ्यः ।
त्वा । ओषधीभ्य इत्योषधि–भ्यः । मनः । मे ।
हार्दि । यच्छ । [13]तनूम् । त्वचम् । पुत्रम् ।
नप्तारम् । अशीय । [14]शुक् । असि । तम् ।

---

[12]बर्हिषि हस्तौ निमार्ष्टि—अद्भ्यस्त्वेति ॥ हस्तगतो गुदावदानलेपः उच्यते । अपामोषधीनां च सिद्धिर्यजमानस्य स्यादिति त्वां निमार्ज्मीति शेषः । बर्हिष्युदकेन शोधयामीत्यर्थः । उक्तस्वरौ चैतौ । स त्वं मे हार्दि हर्षवन्मनो यच्छ देहि मदीयं मनो हृष्टं कुर्विति यावत् । हृदि भवो हार्दः हृदयविकारः प्रार्थनीयः, स च हर्षः प्रसादो वा, सोस्यास्तीति हार्दि । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृद्भावः, वृषादित्वादाद्युदात्तत्वं द्रष्टव्यम् । 'प्राणानां वा एषोऽवद्यति योऽवद्यति गुदस्य मनो मे'* इत्यादि ब्राह्मणम् ॥

[13]धूममन्वीक्षते—तनूमिति ॥ शोभनतन्वादीनामाशासनस्य युक्तत्वात् शोभनास्तन्वादयो गृह्यन्ते । तन्वादीनि शोभनान्यशीय प्राप्नुयाम् । अश्नोतेर्लिङि 'बहुलं छन्दसि' इति शपो लुक्, सीयुडादि । 'कृषिचमितनि' इत्यादिना तनोतेरूप्रत्ययः ॥

[14]हृदयशूलमुद्वासयति—शुगसीति ॥ हे हृदयशूल शुक् शोक-

---

*सं. ६-४-१.

**योऽस्मान्द्वेष्टि यं च व॒यं द्वि॒ष्मो धा-**
**म्नोधाम्नो राजन्नि॒तो वरुण नो मु॒ञ्च**

**अ॒भीति॑ । शो॒च॒ । यः । अ॒स्मान् । द्वेष्टि॑ । यम् । च॒ । व॒यम् । द्वि॒ष्मः । [15]धाम्नोधाम्न॒ इति॒ धाम्नः-धा॒म्नः । रा॒ज॒न् । इ॒तः । व॒रु॒ण॒ । न॒ः । मु॒ञ्च॒ । यत् । आपः ।**

---

स्त्वमसि, तस्माद्योऽस्मान्द्वेष्टि, यं च वयं द्विष्मस्तमभिशोच आभिमुख्येन शोचय । 'पशोर्वा आलब्धस्य हृदयं शुगृच्छति सा हृदयशूलमभि समेति' *इत्यादि ब्राह्मणम् ॥

[15]सर्व एवाद्भिर्मार्जयन्ते—धाम्नोधाम्न इति ॥ धाम्नोधाम्नः स्थानात्स्थानात् । कस्य? शुगसीति प्रकृतत्वाच्छोकस्य । शोकस्थानं च द्वेष्टा द्वेष्यश्च 'योऽस्मान्द्वेष्टि यं च वयं द्विष्मः'† इति यौ प्रकृतौ । अयमर्थः—इतः प्रकृताच्छोकस्य स्थानात् द्वेष्टृलक्षणाद्द्वेष्यलक्षणाच्च, हे राजन् वरुण अस्मान्मुञ्च द्वेष्ट्रादिलक्षणात्सर्वस्माच्छोकस्थानादस्मान्मुञ्चेति । वीप्सायां द्विर्वचनम्, आम्रेडितस्य चानुदात्तत्वम् । किञ्च—हे वरुण ततोभिशापादस्मान्मुञ्च । कुतः? शोकाभितप्ता वयं हे आपः हे अघ्न्याः हे वरुण इति यच्छपामहे यच्छापेनास्माभिः पापमुपार्जितं तस्मादपीत्यर्थः । शापो हि प्रशस्तदेवतानामसङ्कीर्तनेन परेषामनर्थाशंसनम् । यथा—कश्चिच्छोकाभितप्त आह—हे आपः यूयमेवेह जाल्मं द्रष्टुमर्हथ ; 'आपो वै सर्वा देवताः'‡ इति मन्यामह इति । एवं गवादिष्वपि

---

*सं. ६-४-१. †सं. १-३-११[14] ‡ब्रा. ३-२-४.

यदापो अघ्निया वरुणेति शपामहे
ततो वरुण नो मुञ्च ॥ २० ॥

अघ्नियाः । वरुण । इति । शपामहे । ततः ।
वरुण । नः । मुञ्च ॥ २० ॥

असि षड्विꣳशतिश्च ॥ ११ ॥

---

द्रष्टव्यम् । निदर्शनं चैतत् प्रशस्तदेवतानामन्यासामपि । यथा—हे ईश्वर, हे तपन, हे विधातरिति । तत्र लौकिकानां कृताद्युदात्तानामामन्त्रणपदानामिदमनुकरणम् । ततश्च सत्यपि पदात्परत्वे आमन्त्रितनिघातो न प्रवर्तते । न ह्यत्र मार्जयमाना अबादीनामन्त्रयन्ते । शप आक्रोशे स्वरितेत्त्वादात्मनेपदम् । यद्वा—'शप उपालम्भने' इत्यात्मनेपदम् । वाचा शरीरस्पर्शनमुपालम्भः । अतोयमर्थः—हे आपः युष्मभ्यं शपामहे नेदमस्माभिर्ज्ञातमिति । एवं यच्छपामहे सत्यसति वा विषये शोकावेगेन ततोपि पापादस्मान्मुञ्चेति । अघ्नियाशब्दो यत्प्रत्ययान्तोन्तोदात्तः । यथा 'पतिराघ्नियानाम्'* इति । तस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । वरुणेत्यप्यघ्नियाशब्दानन्तरमामन्त्रितानुकरणत्वान्न निहन्यते, अन्यस्तु निहन्यत एव ॥

इति तृतीये एकादशोनुवाकः.

---

*ब्रा. ३-१-१.

ह॒विष्म॑तीरि॒मा आपो॑ ह॒विष्मा॑न्दे॒-
वो अ॑ध्व॒रो ह॒विष्मा॑ꣳ आ वि॑वास-

[1]ह॒विष्म॑तीः । इ॒माः । आपः॑ । ह॒विष्मा॑न् । दे॒वः । अ॒ध्व॒रः । ह॒विष्मा॑न् । एति॑ । वि॒वा॒स॒ति॒ ।

---

[1]वसतीवरीर्गृह्णाति—हविष्मतीरिति चतुष्पदया ॥ 'अनुष्टुभा गृह्णाति '* इत्यादि ब्राह्मणम् । इमा वसतीवरीसंज्ञा आप हविष्मतीः हविष्मत्यः हविषा सोमेन संस्कार्येण तद्वत्यः सोमसंस्कारकारका इत्यर्थः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । एताभिश्च सोममनुप्रविश्य स्वयमपि हविष्ट्वमापन्नाभिर्हविष्मानस्तु । देवो देवनादिगुणोध्वरो यागः, हिंसकरहितत्वात् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—यागेनाराध्यो देवस्सर्वविजयी हविष्मानस्तु । 'अनुदात्ते च कुधपरे' इति संहितायां देवो इति प्रकृत्या भवति । ततश्चानेनैव प्रकारेण यजमानोपि हविष्मान्सन् आविवासति आविवासतु परिचरतु देवान् । 'आतोऽटि नित्यम्' इति संहितायां नकारस्य रुत्वम्, 'अत्रानुनासिकः पूर्वस्य तु वा', 'अनुनासिकात्परोनुस्वारः' । तदर्थमेताभिर्गृह्यमाणाभिः हविष्मान्भगवान् सूर्योस्तु । एतासां हविष्ट्वसम्पादनाय यावद्ग्रहणमस्तं नेयादित्यर्थः । 'यस्यागृहीता अभि निम्रोचेत्'* इत्यादि ब्राह्मणम् । पूर्ववत्संहितायां रुत्वम् । 'देवा वै यज्ञमाग्नीध्रे व्यभजन्त ततो यदत्यशिष्यत'* इत्यादि ब्राह्मणं समस्तोनुवाकः ॥

---

*सं. ६-४-२.

ति हविष्मा॑ऽ अस्तु सूर्यः । अग्ने-
र्वोऽपंन्नगृहस्य सदसि सादयामि
सुम्नायं सुम्निनीस्सुम्ने मा धत्तेन्द्रा-

हविष्मान् । अस्तु । सूर्यः । [2]अग्नेः । वः । अपंन्न-
गृहस्येत्यपंन्न-गृहस्य । सदसि । सादयामि । सु-
म्नायं । सुम्निनीः । सुम्ने । मा । धत्त । [3]इन्द्राग्नियो-
रितीन्द्र-अग्नियोः । भागधेयीरिति भाग-धेयीः ।

---

[2]ता जघनेन शालामुखीयं वेद्यां संसृष्टास्सादयति—अग्नेर्व इति ॥ अपन्नगृहस्य अविपन्नगृहस्य नित्यगृहस्य च सदसि तदधिष्ठिते तत्समीपस्थाने युष्मान् सुम्नाय सुखार्थं सादयामि यजमानस्य सुखं स्यादिति । हे सुम्निनीः सुम्निन्यः सर्वदा सुखहेतुभूताः। पूर्ववत्पूर्वसवर्णदीर्घत्वम् । मामध्वर्युमपि सुम्ने धत्त स्थापयत ' अस्मै वै लोकाय गार्हपत्य आधीयते '* इत्यादि ब्राह्मणम् ॥

[3]ता आदाय दक्षिणया द्वारोपनिर्हृत्य सव्येंसे निधाय दक्षिणेन परीत्य दक्षिणतो यूपेन संस्पृष्टास्सादयति—इन्द्राग्नियोरिति ॥ इन्द्राग्न्योर्भागधेयीः भागभूता यूयं स्थ । ' भागरूपनामभ्यो धेयः ' इति स्वार्थे धेयप्रत्ययः, ' केवलमामकभागधेय ' इत्यादिना ङीप् । इन्द्राग्निशब्दस्य ' देवताद्वन्द्वे च ' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वे ' नोत्तरपदेनुदात्तादौ ' इति प्रतिषिद्धे समासान्तोदात्तत्वमेव, तत्र ' उदात्तयणः ' इति विभक्तेरुदात्तत्वम् । ' सर्वतः परिहरति रक्षसामपहत्यै '* इति ब्राह्मणम् ॥

---

*सं. ६-४-२.

म्रियोर्भागधेयीस्स्थ मित्रावरुणयो-
र्भागधेयीस्स्थ विश्वेषां देवानां भा-
गधेयीस्स्थ यज्ञे जागृत ॥ २१ ॥

स्थ । [4]मित्रावरुणयोरिति मित्रा—वरुणयोः । भाग-
धेयीरिति भाग—धेयीः । स्थ । [5]विश्वेषाम् । देवा-
नाम् । भागधेयीरिति भाग—धेयीः । स्थ । [6]यज्ञे ।
जागृत ॥ २१ ॥

हविष्मतीश्चतुस्त्रिꣳशत् ॥ १२ ॥

[4]दक्षिणेंऽसे निधाय एतेनैव यथोक्तमेत्य जघनेन गार्हपत्यं पूर्व-
वत्सादयति—मित्रावरुणयोर्भागधेयीस्स्थेति ॥ सुबोधम् । 'मित्रा-
वरुणौ वा अपां नेतारौ '* इति ब्राह्मणम् । 'देवताद्वन्द्वे च '
इति पूर्वोत्तरपदयोः प्रकृतिस्वरत्वम् ॥

[5]पूर्वया द्वारोपनिर्हृत्य दक्षिणे अंसे निधायोत्तरतः परीत्य उत्तरतो
यूपेन संमृष्टास्सादयति—विश्वेषां देवानां भागधेयीस्स्थेति ॥ गतम् ॥

[6]सव्येंऽसे निधायैतेनैव यथेतमेत्य जघनेनैवाग्नीध्रियं धिष्ण्यं
संस्पृष्टास्सादयति—यज्ञे जागृतेति ॥ हे वसतीवर्यः, यज्ञेऽस्मिन्जा-
गृत यज्ञार्थमप्रमत्ता भवत । 'आग्नीध्र उपवासयत्येतद्वै यज्ञस्या-
पराजितम् '† इत्यादि ब्राह्मणम् 'आ तृतीयसवनात्परि शेरे यज्ञस्य
सन्तत्यै '† इत्यन्तम् ॥

इति तृतीये द्वादशोऽनुवाकः.

*सं. ६-४-३. †सं. ६-४-२.

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ सोम राजन्नेह्य-

[1]हृदे । त्वा । मनसे । त्वा । दिवे । त्वा । सूर्याय । त्वा । ऊर्ध्वम् । इमम् । अध्वरम् । कृधि । दिवि । देवेषु । होत्राः । यच्छ । [2]सोम ।

---

[1—2]दक्षिणस्य हविर्धानस्यान्तरेणेषे राजानमुपावहरति अवतारयति हविर्धानात्—हृदे त्वेति ॥ हे सोम त्वां हृदे हृदयवद्भ्यो मनुष्येभ्यः उपावहरामीति शेषः । 'हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति'* इत्यादि ब्राह्मणम् । मनसे मनस्विभ्यः पितृभ्यश्च । 'पितृभ्य एवैतेन करोति'* इत्यादि ब्राह्मणम् । दिवे दिविष्ठेभ्यो देवेभ्यश्च त्वामुपावहरामि । सूर्याय च त्वामुपावहरामि ; प्राधान्यात्पुनरुपादानम् । 'देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्यः'* इत्यादि ब्राह्मणम् । हृदे दिवे इति 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । हे सोम अवरोप्यमाणश्च त्वमिममध्वरं यज्ञमूर्ध्वं कृधि अविघ्नेन समाप्तं कुरु । ऊर्ध्वं देवाभिमुखं वा कुरु । यद्वा—इमं यज्ञमध्वरं बाधकरहितं कुरु । 'बहुलं छन्दसि' इति शपो लुक्, 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिभावः । किञ्च—दिवि दिवि स्थितेषु देवेषु होत्रा अस्मदीया वाचः स्तुतिरूपाः यच्छ अवस्थापय । तदर्थं हे सोम राजन्

---

*सं. ६-४-३.

व॑ रोह॒ मा भेर्मा सं विक्था॒ मा त्वा॑ हि॑ꣳसिषं प्र॒जास्त्वमु॒पाव॑रोह प्र॒जा-

रा॒ज॒न् । एति॑ । इ॒हि॒ । अवेति॑ । रो॒ह॒ । मा । भेः । मा । समिति॑ । वि॒क्थाः । मा । त्वा॒ । हि॒ꣳसि॒-षम् । प्र॒जा इति॑ प्र—जाः । त्वम् । उ॒पाव॑रो॒हे-

एहि आगच्छ मम हस्तम् । अत्र सोमराजन्नित्यारभ्य मन्त्रान्तरम् । यथाह भगवान्—" हृदे त्वा मनसे त्वा सोम राजन्नेह्यव रोहेति द्वाभ्याम् " इति । ततश्चापदादिपरत्वात्सोमशब्दो न निहन्यते । 'नामन्त्रिते समानाधिकरणे' इति तस्याविद्यमानवत्त्वनिषेधाद्राजन्निति निहन्यते । आगत्य च मम हस्तं हविर्धानादवरोह । अवरोहंश्च मा भेः मा च भैषीः मामयं भेत्स्यतीति । 'बहुळं छन्दसि' इतीडभावः, व्यत्ययेन सिचिवृद्धिर्न क्रियते । मा संविकथाः मा च कम्पिष्ठाः । कस्मादित्याह—मा खलु त्वामहं हिंसिषम्, यागसाधनत्वापन्त्या उत्तमा गतिस्त्वया प्राप्स्यत इति । का पुनस्सोत्तमा गतिरित्याह—प्रजास्सर्वा दैवीर्मानुषीश्च उपावरोह अनुप्रविश । प्रजाश्च त्वामुपावरोहन्तु अनुप्रविशन्तु । अतस्सर्वासामेव प्रजानामाधिपत्ये वर्तितुमारभसे । स कथं मया हिंस्यसे? अतो मा भैषीरिति । अत्र कथि यच्छेति द्वे तिङ्विभक्ती; तत्र कथि यच्छेति चार्थस्य गम्यमानत्वात् 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्निहन्यते; एवं मा च भेर्मा च सं विकथाः इत्यत्र तेनैव सूत्रेण प्रथमा तिङ्विभक्तिर्ननिहन्यते; एहि चावरोह च इत्यत्रापि प्रथमायास्तेन निघातः प्रवर्तत एव ।

स्त्वामुपावरोहन्तु शृणोत्वग्निस्समि-
धा हवं मे शृण्वन्त्वापो धिषणाश्च

त्युप–अवरोह । प्रजा इति प्र–जाः । त्वाम् ।
उपावरोहन्त्वित्युप–अवरोहन्तु । [3]शृणोतु । अग्निः ।
समिधेति सं–इधा । हवम् । मे । शृण्वन्तु ।

---

ननु गत्यर्थलोटा युक्तत्वाद्द्वितीयायास्तिङ्विभक्तेः 'लोट् च' इति निघातेन न भवितव्यम् । 'विभाषितं सोपसर्गमनुत्तमम्' इति निहन्यत एवेत्यदोषः । उपावरोहेत्यत्र 'गतिर्गतौ' इति पूर्वस्यानुदात्तत्वम् ; 'उदात्तवता तिङा' इति समासः । तथा उपावरोहत्वित्यत्रापि । 'ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युस्स्याद्यस्सोममुपावहरन्'* इत्यादि ब्राह्मणम् ॥

[3]एकधनादिलक्षणा अपो जिघृक्षन् स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये जुहोति—श्रृणोत्वग्निरिति त्रिष्टुभा चतुष्पदया ॥ समिध्यतेनयाग्निरिति समिधाज्याहुतिरुच्यते । इन्धेः क्विप्, अनुनासिकलोपः, कृदुत्तरपदप्रकृतिस्वरत्वम् । अनया सन्दीप्तया आज्याहुत्या तृप्तोऽग्निर्मदीयं हवमाह्वानं शृणोतु । 'बहुलं छन्दसि' इति ह्वयतेः प्राक्प्रत्ययोत्पत्तेस्सम्प्रसारणे कृते 'ऋदोरप्' इत्यप् । यद्वा—'भावेनुपसर्गस्य' इत्यप्सम्प्रसारणं च । किञ्च—याश्चापो मया गृहीष्यन्ते ताश्चानयाऽऽहुत्या मम हवं शृण्वन्तु । कीदृश्यः ? धिषणाः धृष्टाः यागसम्पादननिपुणाः । 'धृषेर्धिष च

---

*सं. ६-४-३.

देवीः । शृणोतं ग्रावाणो विदुषोऽ-
नु ॥ २२ ॥ यज्ञꣳ शृणोतु देवस्स-
विता हवं मे । देवीरापो अपां न-

आपः । धिषणाः । च । देवीः । शृणोतं । ग्रावाणः । विदुषः । नु ॥ २२ ॥ यज्ञम् । शृणोतु । देवः । सविता । हवम् । मे । देवीः । आपः ।

संज्ञायाम्' इति क्युप्रत्ययः । देवीः देव्यः दानादिगुणयुक्ताः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । यद्वा—धिषणाः विद्याः, 'विद्या वै धिषणा'* इति । दानादिगुणयुक्ताश्च शृण्वन्त्विति । चशब्देन तासां समुच्चयः । अधुना प्रत्यक्षवदुच्यते—हे ग्रावाणः । ग्रावाणो ग्रावकल्पा इत्येके । वर्षणशीला मेघा इत्यन्ये । ग्रावाण एवेत्यपरे । यूयमपि शृणोत शृणुत । 'तप्तनप्तनथनाश्च' इति तप् । किं ? विदुषोस्य यजमानस्य यज्ञम् । नु इति वितर्के, ननु विदुषोस्य यज्ञश्श्रोतव्य इति । क्षिप्रं श्रृणुतेति वा । यद्वा—प्रथमाबहुवचनस्य व्यत्ययेन शस्, नुशब्दश्च इवार्थे, विद्वांस इव शृणुत इत्यर्थः । किञ्च—देवस्सविता सर्वस्य प्रेरकः मे मदीयं हवं शृणोतु । 'सवितृप्रसूत एव देवताभ्यो निवेद्यापोच्छैति'† इति ब्राह्मणम् । अग्न्यादयो मे हवं श्रुत्वा आगच्छन्तु, यज्ञं निर्वर्तयन्त्विति भावः ॥

अप्सु बर्हिः प्रास्याभिजुहोति—देवीरापइति यजुरन्तया गायत्र्या ॥ मदिन्तम इत्यन्तं व्याख्यातम्‡ । तं यथोक्तगुणविशिष्ट-

*ब्रा. ३-२-२. †सं. ६-४-३. ‡सं. १-२-३[17]

पाय ऊर्मिर् हविष्यं इन्द्रियावान्म-
दिन्तमस्तं देवेभ्यो देवत्रा धत्त
शुक्रꣳ शुक्रपेभ्यो येषां भागस्स्थ
स्वाहा कार्षिरस्यपापां मृध्रꣳ

अपाम् । नपात् । यः । ऊर्मिः । हविष्यः ।
इन्द्रियावानितीन्द्रिय—वान् । मदिन्तमः । तम् ।
देवेभ्यः । देवत्रेति देव—त्रा । धत्त । शुक्रम् ।
शुक्रपेभ्य इति शुक्र—पेभ्यः । येषाम् । भागः ।
स्थ । स्वाहा । [5]कार्षिः । असि । अपेति ।

---

मूर्मिं देवत्रा देवेषु धत्त स्थापयत । किमर्थं? देवेभ्यः देवार्थं देवानामिवोपभोगार्थम् । 'देवमनुष्यपुरुष' इत्यादिना त्राप्रत्ययः । यद्वा—देवाधीनं धत्त देवानामिवोपभोगार्थम् । 'देये त्रा च' इति त्राप्रत्ययो दधातियोगेपि भवति, देवयागार्थमस्मभ्यं धत्तेति यावत् । पुनश्च विशेष्यते—शुक्रं सोमं सोमीभविष्यन्तम् । केभ्यः? शुक्रपेभ्यः देवानां मध्ये ये शुक्रपास्सोमपास्तेभ्यः । पुनश्च देवा विशेष्यन्ते—हे आपः येषां देवानां यूयं भागस्स्थ भागभूता भविष्यथ तेभ्यो धत्तेति । स्वाहा स्वाहुतं चेदं युष्मभ्यमाज्यमस्तु । 'आहुत्यैवैना निष्क्रीय गृह्णात्यथो हविष्कृतानामेवाभिघृतानां गृह्णाति'* इति ब्राह्मणम् । भागशब्दः 'कर्षात्वतः' इत्यन्तोदात्तः ॥

[5]मैत्रावरुणचमसेनाहुतिं स्रावयति—कार्षिरसीति ॥ हे आज्य

---

*सं. ६–४–३.

सं॒मु॒द्रस्य॒ वोक्षि॑त्या॒ उन्न॑ये । यम॑ग्ने

अ॒पाम् । मृ॒ध्रम् । स॒मु॒द्रस्य॑ । व॒ः । अक्षि॑त्यै । उदिति॑ । न॒ये॒ । यम् । अ॒ग्ने॒ । पृ॒त्स्विति॑ पृ॒त्–सु ।

अप्सु हुतं कार्षिः कर्षणीयमपनेतव्यमसि । 'कृषेर्वृद्धिश्छन्दसि' इति कृषेरिञ्प्रत्ययः । यस्मादेवं तस्मात्त्वामपप्लावयामि अपनयामीत्यर्थः । अपेत्युपसर्गश्रुतेर्योग्यं क्रियापदमध्याह्रियते । कुतः पुनरिदमवसीयत इत्याह—अपां मृध्रं यस्मात्त्वमपां सम्बन्ध्यनिष्टरूपं ; युद्धाभिधायिना मृधशब्देनानिष्टरूपत्वं लक्ष्यते । तदस्यास्तीति मृध्रम् । 'लुगकारेकाररेफाश्च वक्तव्याः' इति मत्वर्थीयो रप्रत्ययः । दोषरूपं त्वामपनयामीत्यर्थः । यद्वा—कठिनत्वं लक्ष्यते ; आज्यं च जलगतं चेत्कठिनं भवति ; तस्य दोषरूपत्वादपनयामीति । 'कार्षिरसीत्याह शमलमेवासामप प्लावयति '* इति ब्राह्मणम् ॥

[6]बर्हिष्यन्तर्धायोन्नयति—समुद्रस्य व इति ॥ समुद्रस्योदकराशेः पूर्वेद्युर्गृहीतस्य वसतीवरीशब्दवाच्यस्य अक्षित्यै अक्षणाय युष्मानुन्नये मैत्रावरुणचमसेन गृह्णामीति । 'मित्रावरुणौ वा अपां नेतारौ '* 'तस्मादुह्यमानाः '* इत्यादि ब्राह्मणम् ॥

[7]क्रतुकरणं जुहोति—यमग्न इति त्रिपदया गायत्र्या ॥ 'यद्यग्निष्टोमो जुहोति '* इति ब्राह्मणम् । हे अग्ने यं मर्त्यं पृत्सु सङ्ग्रामेषु आवः रक्षसि । 'छन्दसि लुङ्लङ्लिटः' इत्यवतेर्लङ्,

*सं. ६-४-३.

पृत्सु मर्त्यमावो वाजेषु यं जुनाः ।
स यन्ता शश्वतीरिषः ॥ २३ ॥

मर्त्यम् । आवः । वाजेषु । यम् । जुनाः । सः । यन्ता । शश्वतीः । इषः ॥ २३ ॥

नु सप्तचत्वारिꣳशच्च ॥ १२ ॥

---

आडागम उदात्तः । ' मांस्पृत्स्नूनामुपसङ्ख्यानम् ' इति पृतनाशब्दस्य पृद्भावः, ' सावेकाचः ' इति विभक्तेरुदात्तत्वम् । कः पुनरसौ ? यं पृतनासु रक्षसीत्याह वाजेष्वन्नेषु निमित्तभूतेषु । ' निमित्तात्कर्मसंयोगे ' इति सप्तमी । अन्नार्थं यं जुनाः गच्छसि । जु इति सौत्रो धातुः वेगितायां गतौ वर्तते, तस्मात्पूर्ववल्लुङ्, श्नाप्रत्ययः, ' बहुलं छन्दस्यमाङ्योगेपि ' इत्यडभावः । हवींषि ग्रहीतुं यस्य सकाशं सदा गच्छसीत्यर्थः । स एव खलु त्वया सङ्ग्रामेषु रक्ष्यत्वेन गृह्यते । यश्च त्वयैवं रक्ष्यते स एव खलु त्वयानुगृहीतः यन्ता यमयिता वशीकर्ता । ' न लुट् ' इति निघातप्रतिषेधः, उदात्तनिवृत्तिस्वरो व्यत्ययेन प्रवर्तते । किं वशीकरिष्यतीत्याह—शश्वतीः नित्याः इषः अन्नादि प्रभूतं धनं प्राप्नोतीत्यर्थः । शश्वच्छब्दात् ' उगितश्च ' इति ङीप् ॥

इति तृतीये त्रयोदशोनुवाकः.

त्वम॑ग्ने रु॒द्रो असु॑रो म॒हो दि॒वस्त्वꣳ शर्धो॒ मारु॑तं पृ॒क्ष ई॑शिषे । त्वं वातै॑-

[1]त्वम् । अ॒ग्ने॒ । रु॒द्रः । असु॑रः । म॒हः । दि॒वः । त्वम् । शर्धः॑ । मारु॑तम् । पृ॒क्षः । ई॒शि॒षे॒ । त्वम् ।

[1]अतः परं याज्याकाण्डं वैश्वदेवम् ॥ तत्र 'अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्'* इत्यस्य पुरोनुवाक्या—त्वमग्न इति जगती ॥ हे भगवन्नग्ने स्वयं रुद्र एव त्वं, यो रोदयिता सर्वेषामुपसंहारे । 'रोदेर्णिलुक्' इति रक्प्रत्ययः । रोदनहेतुमाह—असुरः निरसिता सर्वाधिकाराणां[†] । 'असेरुरन्' इत्युरन्प्रत्ययः । एवं संहारमूर्तिरूपेणाग्निस्स्तूयते, शत्रुमारणादौ रुद्रवद्भावात् । यथा 'एषा वा अस्य घोरा तनूः'* इति । यद्वा—रुद्रवान् रुद्रः, मत्वर्थीयोकारः, रुद्रपराक्रमवानित्यर्थः । दिवो द्युलोकस्य महः उत्सवकारी त्वं हविषां प्रदानेन । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । यद्वा—देव उच्यते । दिवः द्युलोकवासिनां देवानां महः महान् महादेव इत्यर्थः । महतीति महः, पचाद्यच् । त्वमेव पृक्षः अन्नस्य ईशिषे । 'ईशस्से' इतीडागमः । पृडित्यन्ननाम । पृक्षतिश्छान्दसः पृणक्तिपर्यायः, ततः क्विप्, 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । यस्मादन्नस्येशिषे, तस्मात्त्वमेव मारुतं मरुतां सम्बन्धि शर्धः बलं च, त्वदा[‡]यत्तत्वात् । त्वं वातैर्वाततुल्यैः वातजवैः अरुणैः सन्ध्यावर्णैः अश्वैर्यासि । शंगयः सुखगृहं त्वमेव पूषा पोषको

*सं. २-२-२.

[‡]ख. ग—बलं मरुदा.

[†]ग—सर्वासुराणामाधिकाराणां पात्राधिकरणे.

ख—सर्वसुराणां दण्डीकारणे पात्राधिकरणे.

रुरुणैर्यासि शङ्ग्यस्त्वं पूषा विधतः पासि नु त्मना । आ वो राजानमध्वरस्य रुद्रꣳ होतारꣳ सत्ययजꣳ रोदस्योः । अग्निं पुरा तनयित्नोर-

वातैः । अरुणैः । यासि । शङ्ग्य इति शं—गयः । त्वम् । पूषा । विधत इति वि—धतः । पासि । नु । त्मना । [2]एति । वः । राजानम् । अध्वरस्य । रुद्रम् । होतारम् । सत्ययजमिति सत्य—यजम् । रोदस्योः । अग्निम् । पुरा । तनयित्नोः । अचित्ता-

भूत्वा विधतः परिचरतः पासि चरुपुरोडाशादिभिस्त्वामर्चयतो रक्षसि । 'श्वन्नुक्षन्पूषन्' इति पुषेः कनिन्प्रत्ययो निपातितः । विध विधाने तौदादिकः, 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । नु क्षिप्रं त्मना आत्मना स्वयमेव । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः । हे अग्ने रुद्ररूप एवंगुणविशिष्टस्त्वं रुद्रतुल्यपराक्रमो भूत्वा अनया घोरया तन्वा अस्माकं शत्रून्मारयेति भावः । 'एषा वा अस्य घोरा तनूर्यद्रुद्रः'* इत्यादि ब्राह्मणम् ॥

[2]तस्यैव याज्या—आ व इति त्रिष्टुप् ॥ हे ऋत्विग्यजमानाः अध्वरस्य राजानं प्रधानाधिपतिं रुद्रं होतारमभिमतानां दातारं, आह्वातारं वा । 'बहुळं छन्दसि' इति सम्प्रसारणम् । रोदस्योः

*सं. २–२–२.

चित्ताद्धिरण्यरूपमवसे कृणुध्वम् ।
अग्निर् होता निषसादा यजीयानु-

त् । हिरण्यरूपमिति हिरण्य-रूपम् । अवसे । कृणुध्वम् । [3]अग्निः । होता । नीति । ससाद ।

द्यावापृथिव्योस्सत्ययजं सत्यस्यान्नस्य दातारम् । 'अन्येभ्योपि दृश्यते, इति विच्, कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा—सत्यममोघं यजनं यस्य । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—सत्यमेव यजनं यस्य । यद्वा—सत्यस्य परमार्थस्यानन्द*-लक्षणस्य सङ्गमयितारम् । हिरण्यरूपं हिरण्यवर्णमग्निं अग्निरूपेणाव-स्थितं वः युष्माकमवसे रक्षणाय तृप्तये वा कृणुध्वं आत्म-सात्कुरुध्वम्, शत्रुमारणादियुष्मदभिमतसिद्ध्यर्थं भजध्वमित्यर्थः । कृवि हिंसाकरणयोः, 'धिन्विकृण्व्योरच' इत्युप्रत्ययः, व्यत्य-येनात्मनेपदम् । करोतेर्वा व्यत्ययेन श्नुप्रत्ययः । अचित्तात्पुरा, चित्तस्याभावोऽचित्तं अन्तःकरणोपसंहारो मरणमिति यावत् । यद्वा—यस्मिन्सति चित्तं नास्ति तन्मरणमेव । ततः प्रागेव देवं भजध्वमिति । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदा-त्तत्वम् । कीदृशादचित्तात्? तनयित्नोः तनयित्नुर्मेघस्तादृशात्; अनिश्चितकालत्वात् । स्तन शब्दे चुरादिरदन्तः, 'स्तनिहृषि-पुषिगदिमदिभ्यो णेरित्नुच्' इतीत्नुच्प्रत्ययः सकारलोपश्छान्दसः ॥

[3]'अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयात्'[1] इत्यस्य पुरोनुवाक्या—

*ख—परमात्मानन्द. [1]सं. २-२-२.

पस्थे मातुस्सुरभावु लोके । युवा कविः पुरुनिष्ठः ॥ २४ ॥ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ।

यजीयान् । उपस्थ इत्युप-स्थे । मातुः । सुरभौ । उ । लोके । युवा । कविः । पुरुनिष्ठ इति पुरु-निष्ठः ॥ २४ ॥ ऋतावेत्यृत-वा । धर्ता । कृष्टी-

अग्निर्होतेति त्रिष्टुप् ॥ होता देवानामाह्वाता । पूर्ववत्सम्प्रसारणम् । यजीयान् यष्टृतमः मानुषाद्धोतुः । 'तुश्छन्दसि' इति यष्टृशब्दादीयसुन्प्रत्ययः, 'तुरिष्ठेमेयस्सु' इति टिलोपः । युवा नित्यतरुणः । कविर्मेधावी । पुरुनिष्ठः पुरुषु बहुषु स्थानेषु स्थितः । 'आतश्चोपसर्गे' इति कः, थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । ऋतावा ऋतवान् यज्ञवान् । 'छन्दसीवनिपौ' इति वनिप्प्रत्ययः, 'अन्येषामपि दृश्यते' इति दीर्घः । धर्ता धारयिता कृष्टीनां मनुष्याणाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । उत अपि च मध्ये तेषां मनुष्याणां हृदये इद्धः दीप्तः । एवं सर्वोपकारी सर्वसद्गुणान्वितोऽयमग्निः मातुः मातृस्थानीयाया वेदेः, निर्मात्र्या वा श्रेयसामुपस्थे उपस्थस्थानीये उत्सङ्गसदृशे* सुरभौ शोभनहविर्गन्धयुक्ते लोके आलोकवति अस्मिन्प्रदेशे निषसाद निषीदति । 'छन्दसि लुङ्लङ्लिटः' इति लिट् । सोयमस्माकं भेषजं करोत्विति भावः । 'एषा वा अस्य भेषज्या तनूर्यत्सुरभिमती'† इति ब्राह्मणम् ॥

*क—उपस्थस्थाने कीदृशे. †सं. २-२-२.

साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् । स आयु-

नाम् । उत । मध्यै । इद्धः । [4]साध्वीम् । अकः । देववीतिमिति देव-वीतिम् । नः । अद्य । यज्ञस्य । जिह्वाम् । अविदाम । गुह्याम् । सः ।

[4]तत्रैव याज्या—साध्वीमिति त्रिष्टुप् ॥ यस्माद्वयं यज्ञस्यास्य जिह्वां जिह्वास्थानीयं भगवन्तमग्निमविदाम ज्ञातवन्तः लब्धवन्तो वा । वेत्तेर्विन्दतेर्वा व्यत्ययेन शप्रत्ययः, नुमभावश्च । कीदृशीं जिह्वां ? गुह्यामविदुषां गूहनीयाम् । गुहायां भवेति दिगादित्वा द्यत्, 'यतोऽनावः' इत्याद्युदात्तत्वम् । तादृशीं तां भक्तिसामर्थ्याद्वयमविदाम । तस्मादद्य अस्मिन्नह्नि, नः अस्माकमस्माभिः क्रियमाणां देववीतिं देवभक्षं* देवपूजां वा साध्वीं शोभनां अकः करोतु । 'छन्दसि लुङ्लङ्लिटः' इति लुङ्, 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । किञ्च—स एवाग्निः आयुः वसानः आच्छादयन् आयुषा परिवीयमाणः अस्मान्वा आयुषा परिवारयन् आयुष्मतोस्मान्कुर्वन्, सुरभिस्सुगन्धिः चरुपुरोडाशादिगन्धयुक्तः अस्मानागादागच्छतु । पूर्ववल्लुङ्, 'गातिस्था' इत्यादिना सिचो लुक् । आगत्य चास्माकमायुरर्थं, अद्यास्मिन्नहनि नः अस्माकं देवहूतिं देवा हूयन्ते अस्यामिति देवहूतिरिष्टिः तां भद्रां शोभनां यथोक्तमनुतिष्ठतां अकः करोतु इति । स एव लुङ् । देववीतिदेवहूतिशब्दयोः दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् ॥

*तं.—देवभाक्तं

रागात्सुरभिर्वसानो भद्रामकर्देवहू-
तिं नो अद्य । [5] अक्रन्ददग्निस्स्तनयन्नि-

आयुः । एति । अगात् । सुरभिः । वसानः । भद्राम् । अकः । देवहूतिमिति देव-हूतिम् । नः । अद्य । अक्रन्दत् । अग्निः । स्तनयन् ।

---

[5] ‘ अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्सङ्ग्रामे संयत्ते ’* इत्यस्य पुरोनुवाक्या—अक्रन्ददिति त्रिष्टुप् ॥ अयमग्निरक्रन्दत् क्रन्दतु शब्दं करोतु अस्मच्छत्रुकुलं दहन् । छान्दसो लङ् । स्तनयन् द्यौरिव यथा द्यौर्घनपटलसञ्छन्ना स्तनयति । स्तन शब्दे चुरादिरदन्तः । यद्वा—क्रन्दयतु अस्मद्रिपुकुलं गर्जन्तीव द्यौरन्तरिक्षं; दिवि हि गर्जन्त्यां भयेन जना महारवं कुर्वन्ति । किं कुर्वन्नित्याह—क्षाम क्षीणं, दग्धमस्मच्छत्रुकुलं रेरिहन्नत्यर्थं लिहन् आस्वादयन् सर्वतो दहन् इत्यर्थः । क्षयि जयि षायि क्षये ‘ भूतेपि दृश्यन्ते ’ इति भूतेपि कर्मणि मनिन् प्रत्ययः । रिहेर्यङ्लुगन्ताच्छतृप्रत्ययः, ‘ नाभ्यस्ताच्छतुः ’ इति नुमभावः, ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । ‘ कपिलकादीनां संज्ञाछन्दसोर्वालो रमापद्यते ’ इति रत्वम् । ‘ अन्येषामपि दृश्यते ’ इति क्षामशब्दस्य संहितायां दीर्घत्वम् । पुनश्च विशेष्यते—वीरुधस्समञ्जन् सम्मृक्षन् सन्दहन्; उपलक्षणं चैतत्, तृणगुल्मलतावनस्पतीनामुवान्नित्यर्थः । किमीदृशी शक्तिरप्यस्य विद्यत इत्याह—विहीमिति । हि यस्मादर्थे वर्तते । ईमित्यवधारणे ।

---

*सं. २-२-२.

व॒ द्यौः क्षामा॑ रेरि॑हद्वी॒रुधः॑स॒म॒ञ्जन्।
स॒द्यो ज॑ज्ञा॒नो वि ही॑मि॒द्धो अख्य॒दा

इ॒व॒ । द्यौः । क्षाम॑ । रेरि॑हत् । वी॒रुधः॑ । स॒म॒ञ्ज॒न्निति॑ सं-अ॒ञ्जन् । स॒द्यः । ज॒ज्ञा॒नः । वीति॑ । हि । ई॒म् । इ॒द्धः । अख्य॑त् । एति॑ । रोद॑सी॒ इति॑ ।

---

यस्मादयमग्निः जज्ञानो जायमानः । जनी प्रादुर्भावे दैवादिकः, 'बहुळं छन्दसि' इति शपः श्लुः । यद्वा—जन जनने जुहोत्यादिकः, व्यत्ययेनात्मनेपदम् । सद्य एव तत्क्षणादेव इद्धः दीप्तः रोदसी द्यावापृथिव्यौ व्यख्यत् व्यचेष्टत व्यपश्यत्* । छान्दसो लुङ्, 'अस्यतिवक्तिख्यातिभ्योऽङ्,' 'हिच' इति निघातप्रतिषेधः । स्वयं च भानुना तेजसा अन्तर्द्यावापृथिव्योर्मध्ये आभाति समन्तात्प्रकाशते । यद्वा—रोदसी व्यख्यत् विचष्टे यथावत्प्रकाशयति । स्वयमपि तयोर्मध्ये भाति । तस्मान्महातेजसानेन किं हि नाम कर्तुं न शक्यते इति भावः । 'भागधेयेनैवैनꣳशमयित्वा ऽग्नानभि निर्दिशति '† इति ब्राह्मणम् ।

'अभि वा एष एतानुच्यति येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते पुरुषाहुतिर्ह्यस्य प्रियतमाग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् '† इत्यस्यापीयमेव पुरोनुवाक्या । तदेवं योजनीयम्—अयमेवंगुणविशिष्टोग्निरस्माकं पूर्वापरप्रमादहेतुं पापं क्षाम क्षीणं यथा तथा रेरिहत् आस्वादयन् नाशयन् अनेन हविषा समिद्धः शब्दं करोत्विति । 'भागधेयेनैवैनं शमयति नैषां पुरायुषोपरः प्र मीयते '† इति ब्राह्मणम् ।

---

*क—विचष्टे विपश्यति. †सं. २-२-२.

रोदसी भानुना भात्यन्तः । त्वे
वसूनि पुर्वणीक ॥ २५ ॥ होतर्दो-
षा वस्तोरेरिरे यज्ञियासः । क्षामेव

भानुना । भाति । अन्तः । [6]त्वे इति । वसूनि । पुर्वणीकेति पुरु–अनीक ॥२५॥ होतः । दोषा । वस्तोः । एति । ईरिरे । यज्ञियासः । क्षाम ।

---

'अभि वा एष एतस्य गृहानुच्यति यस्य गृहान्दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्'* इत्यस्यापीयमेव पुरोनुवाक्या । तत्र त्वेवं व्याख्येयम्—क्षाम क्षीणं दग्धमस्मद्गृहं रेरिहत् आस्वादयन्वीरुधो गृहावयवान् स्थूणावंशादीन् समञ्जन् भक्षयन्नयं खल्वग्निरक्रन्दत् । तस्मादिममिदानीमेवानेन हविषा प्रसन्नं करोमि, यथा पुनरस्मद्गृहं न धक्ष्यतीति । 'भागधेयेनैवैनं शमयति नास्यापरं गृहान्दहति'* इति ब्राह्मणम् ॥

[6]तेषु त्रिष्वपि याज्या—त्वे वसूनीति त्रिष्टुप् ॥ हे पुर्वणीक बहुबल होतः देवानामाह्वातः त्वे त्वयि खलु एरिरे । 'सुपां सुलुक्' इति शे आदेशः । वसूनि धनानि वासहेतुत्वाद्वरिष्ठानि† वा धनानि हविर्लक्षणानि दोषावस्तोः रात्रावह्नि च यज्ञियासः यज्ञार्हाः आईरिरे आभिमुख्येन प्रेरयन्ति प्रक्षिपन्तीत्यर्थः । ईर गतौ अनुदात्तेत् । 'यज्ञर्त्विग्भ्यां घखञौ,' 'आज्जसेरसुक्' । कीदृशे त्वयीत्याह—यस्मिन्पावके त्वयि

---

*सं. २–२–२. †ख. ग.—वासिष्ठानि.

विश्वा भुवनानि यस्मिन्त्सꣳ सौ-
भगानि दधिरे पावके । तुभ्यं ता

इव । विश्वा । भुवनानि । यस्मिन्न् । समिति ।
सौभगानि । दधिरे । पावके । [7]तुभ्यम् । ताः ।

---

सति विश्वा भुवनानि सर्वाणि भूतजातानि सौभगानि सौभाग्यानि सन्दधिरे सम्यग्धारयन्ति । 'सुभगं मन्त्रे' इत्यञ् । त्वदनुग्रहात् पूर्वं किमिवावस्थितानीति चेत्? उच्यते—क्षामेव क्षाम क्षीणं दग्धवहुलमस्माकं शत्रुबलं [बलेन] यादृशं बलं, पूर्वापरजनमरणं वा यादृशं, गृहं वा दग्धं यादृशं तदिव पूर्वमसुभगानि भुवनानि त्वत्प्रसादेन सुभगानि भवन्तीति । तस्मादस्माकं शत्रुबलं पूर्वापरमरणं गृहदाहं च शमयित्वा सुभगानस्मान्कुरु श्रीमतो यशस्विनश्च कुरु । पुनातेर्ण्यन्ताण्ण्वुल्, उदात्तनिवृत्तिस्वरेण पावकशब्दस्यान्तोदात्तत्वम् ॥

7 'अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेत्'* इत्यस्य पुरोनुवाक्या—तुभ्यं ता इति गायत्री ॥ हे अङ्गिरस्तम गन्तव्यतम गतिमत्तमेति वा । अगि रगि लगि गत्यर्थाः, अस्मादसुनि इरुडागमो† निपात्यते ; हे अग्ने तुभ्यं ताः प्रसिद्धाः विश्वास्सुक्षितयः शोभना क्षितिर्गतिर्यासां ताः प्रजाः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—शोभनं क्षयन्ति वसन्तीति सुक्षितयो मनुष्याः । 'मन्क्तिन्व्याख्यान' इत्युत्तरपदान्तोदात्तत्वम् । पृथक्कामाय नानाविधेभ्यः कामेभ्यः कामसिद्धये येमिरे यमन्ति

---

*सं. २-२-३. †तं—इरुगागमो.

अङ्गिरस्तम विश्वास्सुक्षितयः पृथ-
क् । अग्ने कामाय येमिरे । अश्या-
म तं काममग्ने तवोत्यश्याम रयिꣳ
रयिवस्सुवीरम् । अश्याम वाजम-

अङ्गिरस्तमेत्यङ्गिरः—तम । विश्वाः । सुक्षितय इति सु—क्षितयः । पृथक् । अग्ने । कामाय । येमिरे । [4]अश्याम । तम् । कामम् । अग्ने । तव । ऊती । अश्याम । रयिम् । रयिव इति रयि—वः । सुवीरमिति सु—वीरम् । अश्याम । वाजम् ।

---

त्वामाराधयितुमात्मानं विषयेभ्यो व्यावर्तयन्ति । व्यत्ययेनात्मनेपदम् । यद्वा—पृथग्यमयन्ति नानाविधैरुपायैरात्मानं यमयन्ति त्वामाराधयितुम् । तस्माद्वयमप्यस्मत्कामसिद्धये त्वामेव भजामह इति भावः । 'स एवैनं कामेन समर्धयत्युपैनं कामो नमति '* इति ब्राह्मणम् ॥

[4]तत्रैव याज्या—अश्यामेति त्रिष्टुप् । ऊत्यन्तः प्रथमः पादः ॥ हे अग्ने तं काममश्याम अश्नुवीमहि, यदर्थमात्मा तुभ्यं निवेदितः । अशू व्याप्तौ, व्यत्ययेन परस्मैपदम्, 'बहुलं छन्दसि ' इति शपो लुक्, यासुडादि । तवोती तव रक्षया । अवतेः क्तिनि ज्वरत्वरादिना ऊठादेशः, 'ऊतियूतिजूति ' इति क्तिन उदात्तत्वं निपात्यते, तृतीयैकवचनस्य 'सुपां सुलुक्'

भि वाजयन्तोऽश्याम द्युम्नमजराजरं ते । श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर ॥ २६ ॥ वसो पुरुस्पृ-

अभीति । वाजयन्तः । अश्याम । द्युम्नम् । अजर । अजरम् । ते । [1]श्रेष्ठम् । यविष्ठ । भारत । अग्ने । द्युमन्तमिति द्यु—मन्तम् । एति । भर । ॥ २६ ॥ वसो इति । पुरुस्पृहमिति पुरु—स्पृहम् ।

---

इति पूर्वसवर्णादेशः । किञ्च—हे रयिवः रयिमन् । 'मतुवसोः' इति रुत्वम्, 'छन्दसीरः' इति मतोर्वत्वम् । सुवीरं रयिमश्याम प्राप्नुयाम, शोभनाः वीराः पुत्रादयो यस्मिन्तं पुत्रपौत्रादिसमृद्धिहेतुं धनं प्राप्नुयाम । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । किञ्च—वाजयन्तः वाजमन्नमात्मन इच्छन्तः । क्यचि 'न छन्दस्यपुत्रस्य' इतीत्वप्रतिषेधः । यदा वयं वाजं लिप्सामहे तदा वाजमन्नं आभिमुख्येनाश्नुवीमहि लिप्सेमहि । स्वरानवग्रहौ दुर्घटौ । यद्वा—वाजमाचक्षत इति णिच् । किञ्च—हे अजर जरारहित अजरमक्षयं द्युम्नं यशः ते त्वत्प्रसादात् अश्याम बिभृयाम । 'नञो जरमरमित्रमृताः' इत्यजरशब्दे उत्तरपदाद्युदात्तत्वम् ॥

[1] 'अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वा'* इत्यस्य पुरोनुवाक्या—श्रेष्ठमिति गायत्री ॥

हꣳ रयिम् । साश्विंतानस्तंन्यतू रोचनस्था अजरेभिर्नानंदद्भिर्यविं-

रयिम् । [10]सः । श्वितानः । तन्यतुः । रोचनस्था इतिं रोचन-स्थाः । अजरेभिः । नानंदद्भिरिति

---

भारतेति प्रथमपादान्तः । हे अग्ने यविष्ठ युवतम । यौतिः पृथक्करणे, 'कनिन्युवृषि' इत्यादिना यौतेः कनिन्प्रत्ययः । पृथक्कर्तृतम आदाय दातः । यद्वा—तरुणतम भारत यज्ञस्य भर्तारः ऋत्विजो भरताः । 'भृमृशि' इत्यादिना बिभर्तेरतच्प्रत्ययः । एतैरुत्पादित भारत हे वसो वासहेतो । 'शृस्वृस्निहि' इत्यादिना वसेरुप्रत्ययः । श्रेष्ठं प्रशस्यतमं द्युमन्तं दीप्तिमन्तं पुरुस्पृहं पुरुभिर्बहुभिस्स्पृहणीयम् । कर्मणि क्विप् । यद्वा—बह्वयस्स्पृहा यस्मिन् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदान्तोदात्तत्वम् । ईदृशं रयिं धनमस्मभ्यमाभर स्पर्धमानेभ्य आच्छिद्यास्मभ्यं देहि । 'स एवास्माद्रक्षांसि यवयति नैनमभिचरन्स्तृणुते'* इति ब्राह्मणम् ॥

[10]तत्रैव याज्या—सश्वितान इति त्रिष्टुप् ॥ यः पावकः पावयिता शोधयिता । पुनातेर्ण्यन्तात् ण्वुलि णिलोपे उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वम् । पुरुतमः बहुतमः सर्वात्मकत्वात् । छान्दसं प्रत्ययाद्युदात्तत्वम् । यद्वा—पुरूणां पूरणः । छान्दसस्तमप्प्रत्ययः । पुरूणि बहूनि पृथूनि विस्तीर्णानि पुरोडाशादीनि हवींषि भर्वन् भक्षयन् । भर्व हिंसायाम् । अनुयात्यनुक्रमेण गच्छति यजमानगृहान् । स खल्वयमग्निर्हविःप्रियोस्माभिः

---

*सं. २-२-३.

ष्ठः । यः पा॑व॒कः पु॑रु॒तमः॑ पु॒रूणि॑ पृ॒थून्य॒ग्निर॑नु॒याति॒ भर्व॑न्न् । आयु॑ष्टे

नान॑दत्—भिः॒ । यवि॑ष्ठः । यः । पा॒व॒कः । पु॒रु॒तम॒ इति॑ पुरु—तमः॑ । पु॒रूणि॑ । पृ॒थूनि॑ । अ॒ग्निः । अ॒नु॒याती॒त्यनु—याति॑ । भर्व॑न्न् । [11]आयुः॑ । ते॒ ।

---

हविषाराध्यत इत्यर्थः, तस्माद्यमस्मच्छत्रून्विनाशयत्विति भावः । अधुना तस्यैव हवींषि भुञ्जानस्य गुणानाह—श्वितानः दीप्यमानः । श्विता वर्णे अनुदात्तेत्, ताच्छीलिकश्चानश्, लसार्वधातुकानुदात्तत्वाभावात् 'चितः' इत्यन्तोदात्तत्वम्, 'बहुलं छन्दसि' इति शपो लुक् । तन्यतुः तनिता विस्तारयिता सिद्धीनां दीप्तीनां वा । 'ऋतन्यञ्जि' इत्यादिना तनोतेर्यतुच्प्रत्ययः । रोचनस्थाः रोचनेषु दीप्तिमत्स्थानेषु स्थितः । 'अनुदात्तेतश्च हलादेः' इति रोचतेर्युच्प्रत्ययः । रोचनेषु तिष्ठतीति वा तिष्ठतेः क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम् । अजरेभिर्जरारहितैः अक्षीणैः । 'नञोजरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम्, 'बहुलं छन्दसि' इत्यैसभावः । नानदद्भिरत्यर्थं नदद्भिः स्तुवद्भिः ऋत्विग्भिः यजमानगणैर्वा परिवृतः । यङ्लुगन्ताच्छतरि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । यविष्ठः युवतमः सोयमेवंविधोस्मदीयेन हविषा तृप्तोस्मच्छत्रून्विनाशयत्विति शेषः ॥

[11]'अग्नय आयुष्मते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत सर्वमायुरियाम्'* इत्यस्य पुरोनुवाक्या—आयुष्ट इत्यनुष्टुप् ॥

विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते
प्राण आयति परा यक्ष्मꣳ सुवामि
ते । आयुर्दा अग्ने हविषो जुषाणो

विश्वतः । दधत् । अयम् । अग्निः । वरेण्यः । पुनः । ते । प्राण इति प्र–अनः । एति । अयति । परेति । यक्ष्मम् । सुवामि । ते । [12]आयुर्दा इत्यायुः–दाः । अग्ने । हविषः । जुषाणः । घृतप्रतीक

हे यजमान अयमग्निर्वरेण्यः वरणीयः । 'वृञ एण्यः', वृषादित्वादाद्युदात्तत्वम् । ते तुभ्यं विश्वतः विश्वमायुर्दधत् दधातु । 'इतराभ्योपि दृश्यन्ते' इति द्वितीयान्तात्तसिल् । दधातेर्लेटि 'लेटोडाटौ' इत्यडागमः, 'घोर्लोपो लेटि वा' इत्याकारलोपः । 'युष्मत्तत्ततक्षुष्वन्तःपादम्' इति संहितायां आयुस्सकारस्य षत्वम् । यदायं प्रसीदति तदानीं गतोपि प्राणः पुनरायाति पुनराभिमुख्येनास्मान्प्राप्नोति । इ गतौ भौवादिक उदात्तेत् । यद्वा—पुनरपि* त्वदीयः प्राण आयात्वस्य† प्रसादेन । अहमपि तदर्थं त्वदीयं शत्रुपक्षं परासुवामि नाशयामि । षू प्रेरणे तौदादिक उदात्तेत् । 'स एवास्मिन्नायुर्दधाति'‡ इति ब्राह्मणम् ॥

[12]तत्रैव याज्या—आयुर्दा इति त्रिष्टुप् ॥ हे अग्ने आयुर्दाः अस्य यजमानस्य आयुषो दाता एधि भव । 'अन्येभ्योपि दृश्यते' इति ददातेर्विचि कृदुत्तरपदप्रकृतिस्वरत्वम् । हविषो

घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि ॥ २७ ॥ रक्षतादिमम् । तस्मै ते प्रतिहर्यते जातवेदो विचर्षणे ।

इति घृत-प्रतीकः । घृतयोनिरिति घृत-योनिः । एधि । घृतम् । पीत्वा । मधु । चारु । गव्यम् । पिता । इव । पुत्रम् । अभीति ॥ २७ ॥ रक्षतात् । इमम् । [13]तस्मै । ते। प्रतिहर्यत इति प्रति-हर्यते। जातवेद इति जात-वेदः । विचर्षण इति

जुषाणः हविस्सेवमानः भुञ्जानः । 'क्रियाग्रहणं कर्तव्यम्' इति सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । जुषी प्रीतिसेवनयोः तौदादिक अनुदात्तेत्, ताच्छीलिकश्चानश्, हविस्सेवनशीलः, लसार्वधातुकत्वाभावात् 'चितः' इत्यन्तोदात्तत्वम्, 'बहुलं छन्दसि' इति शपो लुक् । घृतप्रतीकः घृतारम्भः, घृतं खल्वग्नेरारम्भः । यद्वा—आघाराभिप्रायमिदं घृतयागारम्भः । घृतयोनिः घृतकारणकः, ईदृशस्त्वमस्यायुर्दाः एधि इदं घृतं पीत्वा । कीदृशं ? मधु मधुरं चारु शोभनं निर्मलं गव्यम् । 'गोपयसोर्यत्', 'यतोऽनावः' इत्याद्युदात्तत्वम् । किं बहुनेत्याह—पिता पुत्रमिवेमं यजमानं अभिरक्षतात् आभिमुख्येन रक्षतु ॥

[13]'अग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद्भूतिकामः'* इत्यस्य पुरोनुवाक्या—तस्मै त इति गायत्री ॥ हे अग्ने

अग्ने जनामि सुष्टुतिम् । दिवस्प-
रि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि

वि-चर्षणे । अग्ने । जनामि । सुष्टुतिमिति
सु-स्तुतिम् । [14]दिवः । परीति । प्रथमम् । जज्ञे ।
अग्निः । अस्मत् । द्वितीयम् । परीति । जातवेदाः

जातवेदः जातप्रज्ञ । यद्वा—जातानां भूतानां वेदितः । 'गति-कारकयोरपि' इत्यसुन् । विचर्षणे विविधदर्शन [विविधचर्षणे] विविधमनुष्य, एतेषामुत्पादकत्वात् । तस्मै ते तादृशाय तुभ्यं प्रतिहर्यते कामयमानाय वक्ष्यमाणां स्तुतिम् । यद्वा—प्रतिगन्तुमिच्छते । यद्वा—प्रतिगृह्णते* । हर्य गतौ । सुष्टुतिं शोभनां स्तुतिं जनामि जनयामि । जनेर्ण्यन्ताल्लट्, 'बहुलं संज्ञाछन्दसोः' इति णिलुक् । जातवेद इत्यस्यामन्त्रितस्याप्यविद्यमानवत्त्वात् विचर्षण इत्येतदपि न निहन्यते । अग्ने इत्यस्याविद्यमानत्वात् जनामीति तिङन्तं न निहन्यते । 'मन् क्तिन् व्याख्यान' इति सुष्टुतिशब्दस्यान्तोदात्तत्वम् । अन्ये खलु दुराराधाः स्तुतिमपि न गृह्णन्ति, त्वं तु स्तुतिं च प्रतिगृह्णासि, ददासि चेप्सितानि । तस्मात् स्तुतिप्रियाय ते स्तुतिं जनयामि । त्वं च तां प्रतिगृह्य यजमानं भूतिं गमयेति भावः । 'स एवैनं भूतिं गमयति भवत्येव'† इति ब्राह्मणम् ॥

[14]तत्रैव याज्या—दिवस्परीति त्रिष्टुप् ॥ अध्यर्थे परिशब्दः । दिवस्परि द्युलोकस्योपरि दिवः अधि अग्निः प्रथमं जज्ञे आदि-

जातवेदाः । तृतीयमप्सु नृमणा
अजस्रमिन्धान एनं जरते स्वाधीः ।

इति जात-वेदाः । तृतीयम् । अप्स्वित्यप्-सु ।
नृमणा इति नृ-मनाः । अजस्रम् । इन्धानः ।

---

त्यात्मना अजनिष्ट । 'पञ्चम्याः परावध्यर्थे' इति विसर्जनीयस्य सत्वम्, अत एव ज्ञापकात्पञ्चमी । अस्मत् अस्मत्तः परि अस्मास्वधि द्वितीयं जज्ञे द्वितीयं जन्माकरोत् वैश्वानरात्मना । जातवेदाः जातानां भूतानां वेदिता, जातधनो वा अप्स्वन्तरिक्षे तृतीयं जज्ञे तृतीयं जन्म चकार वैद्युतात्मना । यद्वा—अप्सु सलिले और्वात्मना जज्ञे । अजस्रं सर्वदा सर्वेष्वपि जन्मसु, नृमणाः नृषु मनो यस्योपकरोमीति स नृमणाः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्, 'छन्दस्यृदवग्रहात्' इति णत्वम् । सर्वदा प्रजानामेवोपकारार्थं जज्ञ इति । तमेनमेवंगुणकं इन्धानः समिच्चरुपुरोडाशाद्यैस्सन्दीपयन् । इन्धी दीप्तौ, रौधादिकः, अनुदात्तेत्, 'श्नान्नलोपः' 'विभाषा वेण्विन्धानयोः' इत्याद्युदात्तत्वम् । स्वाधीः स्वा आत्मीयैव धीर्यस्य स स्वाधीः स्वकर्मनिरतः । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम्, पूर्ववदुत्तरपदाद्युदात्तत्वम् । यद्वा—स्वमात्मानं ध्यायतीति स्वाधीः आत्मनिष्ठः । 'ध्यायतेस्सम्प्रसारणं च' इति क्विप् । इन्धानः कर्मनिष्ठः, इन्धानश्च स्वाधीश्च एनं जरते स्तौति । जॄ वयोहानौ छन्दसि स्तुतिकर्मा चौरादिकः आधृषीयः, व्यत्ययेनात्मनेपदम् ॥

शुचिः पावक वन्द्योऽग्ने बृहद्वि रोच-
से । त्वं घृतेभिराहुतः । दृशानो

एनम् । जरते । स्वाधीरिति स्व-धीः । [15]शुचिः ।
पावक । वन्द्यः । अग्ने । बृहत् । वीति । रोचसे ।
त्वम् । घृतेभिः । आहुत इत्या-हुतः । [16]दृशानः ।

---

[15]' अग्नये रुक्मवते पुरोडाशमष्टाकपालं निर्वपेद्रुक्कामः '* इत्यस्य पुरोनुवाक्या—शुचिरिति गायत्री । वन्द्योन्तः प्रथमः पादः ॥ हे अग्ने । पादादित्वान्न निहन्यते, षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । पावक शोधक, त्वं खलु शुचिश्शुद्धः न केवलं शोधयिता वन्द्यस्स्तुत्यश्च सर्वेषाम् । ' ईडवन्दवृशंस ' इत्याद्युदात्तत्वम् । स त्वं घृतेभिः घृतैः । ' बहुलं छन्दसि ' इत्यैसभावः । अनेकपात्रगतत्वा†द्बहुवचनम् । तैराहुतः आभिमुख्येन मर्यादया वा हुतः । ' गतिरनन्तरः ' इति पूर्वपदप्रकृतिस्वरत्वम् । बृहत् भृशं विरोचसे विविधमनेकप्रकारं दीप्यसे । त्वं हि शुचित्वादिगुणैः प्रागेव रोचसे, अधुना तु घृतैरप्याहुतो बृहद्विरोचसे । स त्वमस्मिन्यजमाने रुचं देहीति भावः, शेषो वा । ' स एवास्मिन्रुचं दधाति रोचत एव '* इति ब्राह्मणम् ॥

[16]तत्रैव याज्या—दृशान इति त्रिष्टुप् ॥ ' अत्र प्रयाजान्मे '‡ इत्यग्निना हवींषि प्रार्थयता ' अग्नेश्च दीर्घमायुरस्तु देवाः '‡ इत्यायुश्च प्रार्थितम् । ' तव प्रयाजाः '‡ इत्यादिना च देवैः

---

*सं. २-२-३. †ख. ग—अनेकपाकसाधनत्वा. ‡ऋ. १०-५१-८.

रु॒क्म उ॒र्व्या व्य॑द्यौद्दु॒र्मर्॑ष॒मायु॑श्श्रि॒ये रु॑चा॒नः । अ॒ग्निर॒मृतो॑ अभवद्व-

रु॒क्मः । उ॒र्व्या । वीति॑ । अ॒द्यौ॒त् । दु॒र्मर्॑ष॒मिति॑ दुः—मर्ष॑म् । आयुः॑ । श्रि॒ये । रु॒चा॒नः । अ॒ग्निः । अ॒मृ- ...भ॒व॒त् । वयो॑भि॒रिति॒ वयः॑—भिः ॥ २८ ॥

प्रत्तानीति दाशतये श्रूयते । तदिदमत्रोच्यते—दृशानः साध्वंशा-निरूपकः । 'युधिबुधिदृशः किच्च' इत्यानच्प्रत्ययः । रुक्मः रोचनशीलः दीप्तिमान् उर्व्या महत्या । तया दीप्त्येति सामर्थ्या-द्गम्यते । अयं व्यद्यौत् विविधं भासावान् । द्यु अभिगमने, आदादिकः, अतो लङ्, 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः। किं भासवान्? दुर्मर्षं दुर्धर्षं अन्यैरप्रधृष्यमायुर्जीवनमन्नं वा। कीदृशः? श्रिये श्रयणाय सेवायै तादृशस्यायुषो लाभाय रुचान इच्छन् । व्यत्ययेन लसार्वधातुकानुदात्तत्वाभावः । ताच्छीलिको वा चानश् । किञ्च—अतोयमग्निरमृतोभवत् अमरणधर्मा बभूव। वयोभिरन्नैर्देवदत्तैः प्रजातिभिः । यद्यस्मादेनमग्निं द्यौः द्युलोक-वासी देवगणः तात्स्थ्याल्लक्षणया द्यौरिति व्यपदिश्यते । अज-नयत् एवंगुणकमकरोत् । सुरेताः अमोघवीजः । 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । तस्मादमृतो भवेति । यद्वा—अयमग्निः दुर्मर्षमायुर्जीवनमन्नं वा श्रिये श्रयितुं देवेभ्यो लब्धुं रुचान इच्छन् । तुमर्थे केप्रत्ययः, 'दृशे विख्ये च' इति चका-रस्य अनुक्तसमुच्चयार्थत्वात् । रुक्मः पूर्वमेव द्योतनशीलः अधु-नाभीष्टवरलाभेन उर्व्या महत्या दीप्त्या व्यद्यौत् व्यद्युतत् विविधं

योभिः ॥ २८ ॥ यदेनं द्यौरजनय-
त्सुरेताः । आ यदिषे नृपतिं तेज

यत् । एनम् । द्यौः । अजनयत् । सुरेता इति
सु-रेताः । [17]एति । यत् । इषे । नृपतिमिति
नृ-पतिम् । तेजः । आनट् । शुचि । रेतः ।

---

दीप्तवान् । द्युत दीप्तौ, 'द्युद्भ्यो लुङि' इति परस्मैपदम्, विकरणव्यत्ययेनाङं बाधित्वा च्लेस्सिजादेशः, तस्य 'छन्दस्युभयथा' इति सार्वधातुकत्वादिडभावः, हलन्तलक्षणा वृद्धिः, 'बहुलं छन्दसि' इतीडभावः, हल्ङ्यादिसंयोगान्तलोपौ । अत्रैव हेतुमाह—अमृतः खल्वयं वयोभिरभवदिति । तदपि कुत इत्याह—यदेनं द्यौरेवंविधमजनयदिति । तस्मादयमस्मद्दत्तान्यात्मीयानि हवींषि गृहीत्वा यजमाने रुचं दधात्विति शेषः ॥

[17]'अग्नये तेजस्वते पुरोडाशमष्टाकपालं निर्वपेत्तेजस्कामः'* इत्यस्य पुरोनुवाक्या—आ यदिति त्रिष्टुप् ॥ यत्तेजः शुचि शुद्धं, नृपतिं मनुष्याणां रक्षकम् । 'पातेर्डतिः' 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । निषिक्तं वृष्टं रेतः उदकं आनट् अश्नुते प्राप्नोति इषे अन्नाय सस्यादिनिष्पत्तये । न हि वृष्टमात्रमुदकं तदुत्पादने शक्तमपितु पार्थिवेनाग्निना संयुक्तम्† ।

---

*सं. २-२-३. †क.—...संयुक्तम् । केवलोदकेनास्विन्नो नश्येत् । पुरेवतप्रयः । तं.—..........केवलोप्युद.......... । पुरेवतर्पयः ।

आनड्डुचि रेतो निषिक्तं द्यौरभीके।
अग्निश्शर्धमनवद्यं युवानꣳ स्वाधि-

निषिक्तमिति नि-सिक्तम् । द्यौः । अभीके । अग्निः । शर्धम् । अनवद्यम् । युवानम् । स्वाधियमिति स्व-धियम् । जनयत् । सूदयत् । च ।

---

अशू व्याप्तौ, व्यत्ययेन परस्मैपदम्, व्यत्ययेनैव श्नम्प्रत्ययः, व्रश्चादिना षत्वमाडागमः । आङाभिमुख्ये, अयमाभिमुख्येन प्रापत् । सोग्निः द्यौर्दीप्यमानः । दिवेः क्विप् । अभीके आसन्ने काले अचिरादेव वक्ष्यमाणगुणविशिष्टं यजमानं जनयत् जनयतु । जनेर्लेट् । शर्धं बलवन्तं अनवद्यमवद्यरहितम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । युवानं तरुणं स्वाधियं स्वकर्मनिरतं, स्वात्मनिष्ठं वा । ईदृशं यजमानं कुर्यात्, सूदयच्च सूदयतु च । किं? यजमानस्य पापम् । पूर्ववल्लेट्, तिङः परत्वान्न निहन्यते । ईदृशो हि पुरुषस्तेजस्वी भवतीति । 'स एवास्मिन्तेजो दधाति तेजस्व्येव भवति'* इति ब्राह्मणम् । केचिदाहुः—यदिति लिङ्गव्यत्ययः, यमग्निं शर्धमनवद्यं युवानं स्वाधियं नृपतिं वृष्टमुदकमानट् सोग्निर्दीप्यमानः क्षिप्रमेव यजमानस्य तेजो जनयतु तेजोविरोधि च सूदयतु इति । 'चादिषु च' इति द्वितीयस्य तिङो निघातप्रतिषेधः, तिङः परत्वात् ॥

---

*सं. २-२-३.

यं जनयत्सूदर्यं । स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य

[18]सः । तेजीयसा । मनसा । त्वोतः । उत । शिक्ष । स्वपत्यस्येति सु-अपत्यस्य । शिक्षोः । अग्ने ।

---

[18]तत्रैव याज्या—स तेजीयसेति त्रिष्टुप् ॥ हे अग्ने स यजमानः पूर्वोक्तगुणविशिष्टो यस्त्वया तेजस्वीति सः तेजीयसा तेजस्वितरेण मनसा, तेजनं तेजः तद्वता निशिततरेण सावधानेनेत्यर्थः । 'अस्मायामेधास्रजो विनिः,' 'विन्मतोर्लुक्,' 'टेः' इति टिलोपः । त्वोतः त्वया ऊतस्त्वयैव रक्षितोस्त्विति शेषः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । तत्र त्वदूत इति वक्तव्ये पृषोदरादित्वाद्व्यञ्जनलोपः । उत अपि च स्वपत्यस्य शोभनपुत्रपौत्रादेः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । शिक्षोः शक्तुमिच्छतः । 'सनिमीमा' इत्यादिना इस्भावोऽभ्यासलोपश्च, 'सनाशंसभिक्ष उः' । नृतमस्य मनुष्यतमस्य मनुष्योत्तमस्य यजमानस्य रायः धनानि शिक्ष यजमानकार्यसमर्थान्कर्तुं कृतसङ्कल्पोभव* । सन्नन्ताल्लोट्, जिज्ञासाया अविवक्षितत्वात् 'शिक्षेर्जिज्ञासायाम्' इत्यात्मनेपदाभावः । यजमानाय देहीति विवक्षितम् । प्रभूतौ प्रभवार्थं यजमानस्य, यथायं लोके तेजस्वी भवति तदर्थमित्यर्थः । निमित्तात्कर्मसंयोगे सप्तमी, 'तादौ च' इति पूर्वपदप्रकृतिस्वरत्वम् । विश्व— ते तव प्रसादाद्वयं सुष्टुतयः शोभना स्तुतिर्येषां तादृशास्त्वद्वि-

---

*तै—संकल्पोपि.

शिक्षोः । अग्ने रायो नृतमस्य
प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ।
अग्ने सहन्तमा भर द्युम्नस्य प्रास-

रायः । नृतमस्येति नृ—तमस्य । प्रभूताविति प्र—भूतौ । भूयाम । ते । सुष्टुतय इति सु—स्तुतयः । च । वस्वः । [19]अग्ने । सहन्तम् । एति । भर ।

षयामेव शोभनां स्तुतिं सदा कुर्वन्तः, वस्वः वसुमन्तो भूयाम भवेम अमोघप्रयत्नास्स्यामेति भावः । भवतेर्विध्यादि लिङ्, 'बहुलं छन्दसि' इति शपो लुक् । 'लुगकारेकाररेफाश्च' इति वसुशब्दात्परस्य मत्वर्थीयस्य लुक्, 'जसादिषु वा वचनं छन्दसि प्राङ्णौ चङ्युपधायाः' इति गुणाभावः, 'वा छन्दसि' इति पूर्वसवर्णदीर्घाभावः ह्रस्वादपि भविष्यतीति* । यद्वा—तव प्रभूतौ प्रभावे वयं भूयाम प्रभावानुगुणमस्मासु कुर्विति भावः । तदेवाह—सुष्टुतयस्त्वामेव स्तुवन्तो वयं वसुमन्तस्स्याम, यथा ते प्रभावो† न हीयत इति ॥

[19] 'अग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत्सीक्षमाण:'‡ इत्यस्य पुरोनुवाक्या—अग्ने सहन्तमित्यनुष्टुप् ॥ हे अग्ने सहन्तमभिभवन्तं पराभिभवक्षमं पर्याप्तमित्यर्थः । ईदृशं रयिं धनमाभर आहर । 'हृग्रहोर्भश्छन्दसि' इति । द्युम्नस्य यशस्विनः

*क.—भविष्यतीति वक्ष्यामः. †क.—यथा मे प्रहीयतो. ‡सं. २-२-३.

हा रयिम् । विश्वा यः ॥ २९ ॥
चर्षणीरभ्यासा वाजेषु सासहत् ।

द्युम्नस्य । प्रासहेति प्र-सहा । रयिम् । विश्वाः । यः ॥ २९ ॥ चर्षणीः । अभीति । आसा ।

पुरुषस्यास्मदमित्रभूतस्य प्रासहा प्रहसनेन तादृशमस्मदमित्रमभिभूय तदीयं रयिमस्मभ्यमाभर आहर । षह मर्षणे चौरादिकः उदात्तेत् आधृषीयः, तस्माद्भावे क्विप्, 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इत्युपसर्गस्य दीर्घत्वम् । यो भवान् विश्वाश्चर्षणीः मनुष्यसेनाः अस्मद्विपक्षभूताः वाजेष्वन्नेषु निमित्तभूतेषु । उपलक्षणं चैतत् । अस्माकमन्नादिकं साधयितुं अभिसासहत् अभिभवतु । किं कुर्वन्नित्याह—आसा* आसनमात्रेणैव । आसेः क्विप्, 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । सहेर्लेटि 'बहुलं छन्दसि' इति शपश्श्लुः, द्विर्वचने तुजादित्वादभ्यासस्य दीर्घत्वम् । यद्वा—यङ्लुगन्तात् 'लेटोडाटौ' इत्यडागमः तुजादित्वाभावे, अजादेरभावात् 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वाभावः, 'अच्यनिटि' इत्यत्र हि 'ङित्यजादौ' इत्युक्तम् । 'अनुदात्ते च' इति तर्हि प्राप्नोति ? 'छन्दस्युभयथा' इत्यार्धधातुकत्वात् न भविष्यतीत्यदोषः । यद्वा—चुरादिण्यन्तात् 'छन्दसि लुङ्लङ्लिटः' इति लुङ्, चङादि, वर्णव्यत्ययेनाभ्यासस्याकारः, 'चङ्यन्यतरस्याम्' इत्युपोत्तमस्योदात्तत्वम् ॥

*क. ह—अभिभवितुमासि.

तमग्ने पृतनासहꣳ रयिꣳ सहस्व
आ भर। त्वꣳ हि सत्यो अद्भुतो दाता
वाजस्य गोमतः। उक्षान्नाय वशा-

वाजेषु। सासहत्। [20]तम्। अग्ने। पृतनासहमिति
पृतना—सहम्। रयिम्। सहस्वः। एति। भर।
त्वम्। हि। सत्यः। अद्भुतः। दाता। वाजस्य।
गोमत इति गो—मतः। [21]उक्षान्नायेत्युक्ष—अन्नाय।

[20]तत्रैव याज्या—तमग्ने पृतनासहमित्यनुष्टुप् ॥ हे अग्ने सहस्वः महाबल। 'मतुवसोः' इति रुत्वम्। पृतनासहं सर्वशत्रुसेनाभिभवनसमर्थं तत्र पर्याप्तं रयिं धनं आभर आहर। पूर्ववद्धत्वम्। सहेः क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम्। यस्मात्त्वमेव सत्यः अवितथः अद्भुतः आश्चर्यभूतः वाजस्यान्नस्य दाता गोमतः गोसहितस्य वाजस्य* दातेत्यर्थः। तस्मात्तादृशमन्नमस्मभ्यं देहि येन वयं शत्रूनभिभविष्याम इति ॥

[21]'अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नवान् स्याम्'† इत्यस्य पुरोनुवाक्या—उक्षान्नायेति गायत्री ॥ उक्षा अन्नं यस्य तस्मै। एवं वशान्नाय। सोमपृष्ठाय सोमे हविषि स्थितानि पृष्ठानि स्तोत्राणि यस्य स सोमपृष्ठः, पृष्ठस्तोत्रेण सोमे‡नाराध्यत इत्यर्थः। व्यधिकरणो बहुव्रीहिः। मत्वर्थीयो

*क—सहितस्य गवां च. †सं. २-२-४. ‡ख—स सोमपृष्ठः स्तोत्रहीनो.

न्नाय सोमपृष्ठाय वेधसे । स्तोमै-
र्विधेमाग्नये । वद्मा हि सूनो अस्य-
द्मसद्वा चक्रे अग्निर्जनुषाज्मान्नम् ।

वशान्नायेति वशा—अन्नाय । सोमपृष्ठायेति सोम—
पृष्ठाय । वेधसे । स्तोमैः । विधेम । अग्नये ।
22 वद्मा । हि । सूनो इति । असि । अद्मसद्वेत्यद्म—
सद्वा । चक्रे । अग्निः । जनुषा । अज्म । अन्नम् ।

वाऽकारः, सोमवन्ति पृष्ठानि यस्येति । वेधसे विधात्रे मेधाविने । उञ्छादित्वादन्तोदात्तत्वम् । ईदृशायाग्नये तुभ्यं स्तोमैस्स्तोत्रैर्विधेम परिचरेम, एवंगुणकं त्वां परिचरेम इत्यर्थः । विधविधाने तौदादिकः । 'क्रियाग्रहणं कर्तव्यम्' इति सम्प्रदानत्वाच्चतुर्थी, द्वितीयार्थे वा विभक्तिव्यत्ययेन । एवमस्माभिस्स्तुतस्त्वं यजमानमन्नवन्तं कुरु* । 'स एवैनमन्नवन्तं करोत्यन्नवानेव भवति'† इति ब्राह्मणम् ॥

22 तत्रैव याज्या—वद्माहीति त्रिष्टुप् ॥ हे सूनो पुत्र । कस्य? सहसः यजमानस्य वा । यद्वा—पुत्रवत्सर्वेषामभिमतकारिन् । सूनुवत्सूनुः उप‡चारपदं वा । अथवा सोता सूनुः सर्वस्योत्पादकः । सूतेः 'सुवः कित्' इति नुप्रत्ययः । स त्वं वद्मासि, वदत्यनयेति§ वद्मा वाक्, त्वं वागिन्द्रियम् । तस्यापि कारणं प्राणो

*क—कुर्वीति शेषः. †सं. २-२-४.
‡क—अथोप. §ख. ग—...येति तद्भावात्.

स त्वं नं ऊर्जसन ऊर्जं धा राजेव

सः । त्वम् । नः । ऊर्जसन इत्यूर्ज—सने । ऊर्जम् ।

वा, त्वया हि सर्वे वदन्ति । असीत्यस्य 'हि च' इति निघातप्रतिषेधः । वद्मशब्द उञ्छादिषु द्रष्टव्यः । पुनश्चाग्निर्विशेष्यते—अद्मसद्वा अद्यत इत्यद्मा अन्नम् । अदेर्मनिन्प्रत्ययः । अद्मनि सीदन्तीत्यद्मसद्वा । 'अन्येभ्योपि दृश्यते' इति सदेर्वनिप्, कृदुत्तरपदप्रकृतिस्वरत्वम् । 'सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः'* इति जन्तूनां स्थितिहेतुत्वेन प्रवर्तक इत्यर्थः । यद्वा—हवीरूपेन्ने प्राणिनां स्थित्यर्थमेव त्वं सीदसीति । यस्मादेवमत एव खलु अग्निर्भगवान् जनुषा जन्मना जायमान एवान्नं चक्रे उत्पादितवान् । मध्यमस्य वा प्रथमव्यत्ययः । 'जनेरुसिः' इत्युसिप्रत्ययः । कीदृशान्नं? अज्म अजन्त्येतत्सर्वेपि भोक्तृत्वेनेत्यज्म, सर्वाभिलषितामित्यर्थः । अजेर्मनिन्, 'वलादावार्धधातुके वेष्यते' इति वीभावाभावः । यस्मादेवं त्वं सर्वेषां प्राणभूतोसि प्राणस्य च स्थित्यर्थमन्नमुत्पादितवान् तस्मात्स तादृग्विधस्त्वं नः अस्मभ्यमूर्जं अन्नं रसं वा धाः देहि । दधातेर्लेटि 'बहुलं छन्दसि' इति शपो लुक् । हे ऊर्जसने ऊर्जसोन्नस्य दाता सम्भक्ता वा । 'छन्दसि वनसन' इत्यादिनेन्प्रत्ययः, पृषोदरादित्वाद्वचञनस्य लोपः । यद्वा—ऊर्जा रसेन तद्वतां रसवतां अन्नादीनां दातः । ऊर्क्शब्दान्मत्वर्थीयोकारः । पुनरपि प्रार्थितस्य शीघ्रप्रदानार्थं प्ररोचयन् स्तौति—हे अग्ने राजेव जेः यथा राजा सन्निधिमात्रेणानायासेन शत्रुं जयत्येवं त्वं शत्रुं जयसि । जयतेर्लेटि पूर्ववच्छपो लुक् । किञ्च—अवृके, वृका हिंसकाः काम-

*तै. उ. ४-१२.

जेरवृके क्षेष्यन्तः । अग्न आयूꣳषि ॥३०॥ पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् । अग्ने पवस्व स्वपा अस्मे वर्चस्सु-

धाः । राजा । इव । जेः । अवृके । क्षेषि । अन्तः । [23]अग्ने । आयूꣳषि ॥ ३० ॥ पवसे । एति । सुव । ऊर्जम् । इषम् । च । नः । आरे । बाधस्व । दुच्छुनाम् । [24]अग्ने । पवस्व । स्वपा इति सु-अपाः ।

---

क्रोधादयः, तद्रहिते पुरुषे स्वात्मनिरते अन्तः मध्ये तदीये हृदये क्षेषि क्षयसि निवससि तमनुगृहीतुम् । क्षि निवासगत्योः, पूर्ववच्छपो लुक् । स त्वं यजमानमन्नवन्तं कुर्विति ॥

[23]'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावी '* इत्यस्ति त्रिहविष्केष्टिः । तत्राग्नये पवमानायेत्यस्य पुरोनुवाक्या—अग्न आयूंषीति गायत्री ॥ हे अग्ने आयूंषि जीवनान्यन्नानि वास्मदीयानि त्वं खलु पवसे शोधयसि, यथा वर्धन्ते, यथा वा न क्षीयन्ते । अत ऊर्जं रसं क्षीरादिकमिषमन्नं चास्मभ्यमासुव आभिमुख्येन सुव प्रेरय उत्पादयेत्यर्थः । आरे दूरे नीत्वा बाधस्व बाधय नाशय दुच्छुनामुपद्रवं ज्योगामयावित्वलक्षणम् । 'उत यदीतासुर्भवति जीवत्येव '* इति ब्राह्मणम् ॥

[24]तत्रैव याज्या—अग्ने पवस्वेति गायत्री ॥ हे अग्ने स त्वं

---

*सं. २-२-४.

वीर्यम् । दधत्पोष रयिं मयि ।
अग्ने पावक रोचिषा मन्द्रया देव

अस्मे इति । वर्चः । सुवीर्यमिति सु-वीर्यम् । दधत् । पोषम् । रयिम् । मयि । [25]अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया । एति ।

पवस्व स्वपाः शोभनकर्मा । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । अस्मे अस्मभ्यम् । 'सुपां सुलुक्' इति शेआदेशः । वर्चः बलं, सुवीर्यं शोभनवीर्ययुक्तं पवस्व शोधय वर्धय । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । अग्ने इत्यस्याविद्यमानत्वात् पवस्वेति न निहन्यते । किं कुर्वन्नित्याह— पोषं पुष्टिं रयिं धनं च मयि दधत् धारयन् स्थापयन् वर्चो मे धेहीति । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । 'यदग्नये पवमानाय निर्वपति पुनात्येवैनम्'* इति ब्राह्मणम् ॥

[25]अग्नये पावकायेत्यस्य पुरोनुवाक्या—अग्ने पावकेति गायत्री ॥ हे अग्ने पावक शोधक । 'नामन्त्रिते समानाधिकरणे' इति पूर्वस्याविद्यमानवत्त्वनिषेधात्परमामन्त्रितं निहन्यते । रोचिषा रोचनशीलया मन्द्रया श्लक्ष्णया मदनशीलया वा हे देव जिह्वया त्वदीयया वाचा वा देवानावक्षि आवह आह्वय यक्षि च यज च । उभयत्रापि लेटि 'बहुलं छन्दसि' इति शपो लुक्, तिङः परत्वाद्यक्षीति न निहन्यते, 'चादिषु च' इति द्वितीया तिङ्विभक्तिर्न निहन्यते । इष्ट्वा च देवान्यजमानस्य अभिमतं रसं

*सं. -२-२-४.

जिह्वया । आ देवान् वक्षि यक्षि
च । स नः पावक दीदिवोऽग्ने देवाँ
इहा वह । उप यज्ञँ हविश्च नः ।
अग्निश्शुचिव्रततमश्शुचिर्विप्रश्शु-

देवान् । वक्षि । यक्षि । च । [26]सः । नः । पावक ।
दीदिवः । अग्ने । देवान् । इह । एति । वह ।
उपेति । यज्ञम् । हविः । च । नः । [27]अग्निः ।
शुचिव्रततम इति शुचिव्रत—तमः । शुचिः । विप्रः ।

---

सम्पादयेति भावः । 'पूत एवास्मिन्नन्नाद्यं दधाति'* इति च ब्राह्मणम् ॥

[26]तत्रैव याज्या—स नः पावकेति गायत्री ॥ हे अग्ने पावक शोधक दीदिवः दीप्यमानः । 'छन्दसि लुङ्लङ्लिटः' इति दिवेर्लिट् 'क्वसुश्च' इति क्वसुरादेशः, 'वस्वेकाजाद्घसाम्' इति नियमादिडभावः, वलि लोपः, तुजादित्वादभ्यासस्य दीर्घः, 'उगिदचाम्' इति नुम्, 'मतुवसोः' इति रुत्वम् । स त्वं नः अस्माकमिहास्मिन्कर्मणि देवानावह । आहूय च नः अस्माकमिमं यज्ञं च हविश्च उपावह देवेभ्य उपहर, देवान्प्रापयेत्यर्थः । देवानित्यस्य नकारस्य संहितायां पूर्ववद्रुत्वानुनासिकानुस्वाराः ॥

[27]'अग्ने शुचये'* इत्यस्य पुरोनुवाक्या—अग्निश्शुचिव्रत-

चिः क॒विः । शुची॑ रोचत॒ आहु॑तः ।
उद॑ग्ने॒ शुच॑य॒स्तव॑ शु॒क्रा भ्राज॑न्त

शुचि॑ः । क॒विः । शुचि॑ः । रो॒च॒ते॒ । आहु॑त॒ इत्या- हु॒तः । [28]उदिति॑ । अ॒ग्ने॒ । शुच॑यः । तव॑ । शु॒क्राः ।

---

तम इति गायत्री ॥ अयमग्निस्स्वयमेव तावत् शुचिव्रततमः शुद्धकर्मतमः शुद्धान्नतमो वा । अग्नित्वादेव सर्वमेतत्सम्बन्धि शुद्धमित्यर्थः । किञ्च—यस्मादयं विप्रः मेधावी ब्राह्मणो वा ततोपि शुचिश्शुद्धः; तदस्य द्वितीयं शुद्धिकारणमित्यर्थः । किञ्च—यतश्चायं कविः क्रान्तदर्शनः वशीकृतवाङ्मयो वा ततश्च शुचिश्शुद्धः; तृतीयमिदं शुद्धिकारणम् । अथ चतुर्थमुच्यते—यस्मादयमाहुतः मर्यादया शास्त्रोक्तविधिना हुतस्ततोपि हेतोरिदानीं शुचिर्भूत्वा रोचते । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[28]तत्रैव याज्या—उदग्ने इति गायत्री ॥ हे अग्ने तव शुक्रास्तेजोविशेषाः शुचयश्शुद्धाः भ्राजन्तो दीप्यमानाः । व्यत्ययेन परस्मैपदम् । उदीरते उद्गच्छन्ति । ईर गतौ आदादिकः अनुदात्तेत्, 'आत्मनेपदेष्वनतः' इत्यदादेशः । किञ्च—तवैव स्वभूतानि सर्वाणि तानि ज्योतींषि अर्चयः अर्चिषश्च त्वदीया एव । यद्वा—तवार्चयः अर्चयितारः यागादिभिराराधयितारः

ईर॑ते । तव॒ ज्योती॑ꣳष्य॒र्चय॑ः॥३१॥

भ्राज॑न्तः । ईर॑ते॒ । तव॑ । ज्योती॑ꣳषि ।
अ॒र्चय॑ः ॥ ३१ ॥

पु॒रु॒नि॒ष्ठः पु॑र्वणीक भ॒राभि वयो॑भि॒र्य आयू॑ꣳषि॒
विप्र॒श्शु॒चि॒श्चतु॑र्दश च ॥१४॥

दे॒वस्य॑ र॒क्षो॒हणो॑ वि॒भूस्त्वꣳ सो॒मात्य॒न्यानगाँ-पृथि॒व्या इ॒षे त्वा द॑दे॒ वाक्ते॑ सं ते॑ स॒मु॒द्रꣳ ह॒विष्म॑-ती॑र्हृ॒दे त्वम॑ग्ने रु॒द्रश्चतु॑र्दश ॥ १४ ॥

दे॒वस्य॑ ग॒मध्ये॑ ह॒विष्म॑तीः पव॒स्
एक॑त्रिꣳशत् ॥ ३१ ॥
दे॒वस्या॒र्चय॑ः ॥
हरि॑ः ओम् तत्सत्.

---

इः ' इतीप्रत्ययः । यत एवं महाप्रभावस्त्वं तस्मादस्मदभिमतं शीघ्रं सम्पादयेति भावः ॥

इति यजुर्वेदविवरणे तृतिये चतुर्दशोनुवाकः.

इति भट्टकौशिकभास्करमिश्रविरचिते ज्ञान-
यज्ञाख्ये यजुर्वेदभाष्ये प्रथमे काण्डे
तृतीयः प्रपाठकः

# APPENDIX.

## काण्डानुक्रमणिका.



### अथ काण्डक्रमः.

पुरोडाशीयम[1]ध्वर[2]ग्रह[3]दाक्षिणान्य[4]ग्न्याधेय[5]पुनरा-
[6]धेये [7]अग्न्युपस्थान[8]मैष्टिकं याजमानं [9]तद्विधिर्वाजपे-

---

'काण्डशेषान्यथा काण्डम्' इति वचनात् काण्डशेषसंयुक्तानि काण्डानि क्रमेण निर्दिश्यन्ते—.

[1]सं—१मे काण्डे १मे प्रश्ने १मानुवाकमारभ्य १३शानुवाकपर्यन्तम्.

[2]सं—१,२,१–१३. ३,१–१३. तच्छेषः ब्रा–१,४,८मानुवाकः ब्रा–१,१,१मानुवाकश्च.

[3]सं—१,४,१मानुवाकमारभ्य ३६शानुवाकपर्यन्तम्. तत्र ३०शानुवाकादूर्ध्वं आ३,१६शानुवाकमारभ्य २१शानुवाकपर्यन्तं तच्छेषः.

[4]सं—१,४,३७शानुवाकमारभ्य ३९शानुवाकपर्यन्तम्.

[5]ब्रा—१,२,१मानुवाकः ब्रा–१,१,७मानुवाकश्च ॥ आधानविधिः- ब्रा–१,१,२यानुवाकमारभ्य ६ष्ठानुवाकपर्यन्तम्. ब्रा. १,१, ८मानुवाकमारभ्य १०मानुवाकपर्यन्तं च ॥

[6]सं—१,५,३यानुवाकः । पुनराधेयविधिः सं–१,५,१-२वाकौ. ४र्थानुवाकश्च । ब्रा–१,३,१मानुवाकश्च ॥

[7]सं—१,५,५–६नुवाकौ १०मानुवाके १-६मन्त्राः. अग्न्युपस्थानविधिः सं–१,५,७-८-९वाकाः.

[8]सं—१,५,१०मानुवाकः ७ममन्त्रादिः. ६,श्ने १–६ष्ठानुवाकाः ॥ ऐष्टिकयाजमानविधिः सं–१,६,७ मानुवाकमारभ्य ११शानुवाकपर्यन्तम्. सं–१,७,१. ३–६ अनुवाकाश्च.

[10]यस्तद्विधी [11]राजसूयः [12]काम्याः [13]पशवश्चे[14]ष्टयो दार्श्यं [15]ब्राह्मणमुपानुवाक्यम[16]ग्नि[17]स्तद्विधिर्द्वे काण्डे पूर्वं द्विचत्वा[18]रिंशिकमुत्तरं [19]त्रैंशिकं तदग्न्युपानुवाक्यमित्याचक्षतेऽध्वरादीनां त्रयाणां [20]विधिर्या-

---

[10]सं—१,७,७मानुवाकमारभ्य १२शानुवाकपर्यन्तम्.

[11]ब्रा—१,२,२यानुवाकमारभ्य ९मानुवाकपर्यन्तम्.

[12]सं—१,८मः प्रश्नः अन्तिमानुवाकं वर्जयित्वा. ब्रा—१,५,५मानुवाकश्च॥

[13]सं—२,१,१मानुवाकमारभ्य १०मानुवाकपर्यन्तम्.

[14]सं—२,२,१—११. ३,१—१२. ४,१—१२नुवाकाः. ॥

[15]सं—२,५प्रश्ने १मानुवाकमारभ्य ६ष्ठानुवाकपर्यन्तम्. तस्मिन्नेव प्रश्ने ११शोऽनुवाके 'देवा वै सामिधेनीरनूच्य' इत्यादिरनुवाकशेषः। तस्मिन्नेव काण्डे ६प्रश्ने १-६वाकाश्च। ब्रा—१,२,१० मानुवाकस्तच्छेषः ॥

[16]सं—३यः काण्डः. प्रतिप्रश्नमन्तिमानुवाकवर्जम्.

[17]सं—४चतुर्थं काण्डं १—४,७ श्नेष्वन्तिमानुवाकं ६,६—९वाकांश्च वर्जयित्वा. (सं—४,२,७मानुवाकादूर्ध्वं आ—२,१७शोनुवाकः. सं—४,२,११शानुवाकादूर्ध्वं आ—२,१८शोनुवाकः. सं—४,४,९ मानुवाकादूर्ध्वं आ—२,१९शोनुवाकश्च.) ब्रा—१,५,७—८नुवाकौ.

[18]सं—५,१,१—१०वाकाः. तत्रैव २तीयप्रश्ने १—१०अनुवाकाः. ३तीयप्रश्ने १—११वाकाः. ४र्थप्रश्ने १—११वाकाः

[19]सं—५,५मे प्रश्ने १—१०नुवाकाः. ६ष्ठे प्रश्ने १—१० नुवाकाः. ७मे प्रश्ने १—१० नुवाकाश्च ॥

[20]अध्वरविधिः—सं—६ष्ठं काण्डम्. ७,१मे प्रश्ने १-३योनुवाकाः.

ज्या[21] राजसूयविधि[22]स्सत्रायण[23]मश्वमेध[24]स्तस्य क्रमः—

[a]पञ्चादौ सात्रिका दशिन्योनुवाकोनाः.

[b]षडनुवाकमाग्निकं महापृष्ठं नाम.

[c]द्वे त्रैंशिके दशिन्यौ.

[d]त्र्यनुवाकं द्विचत्वारिंशिकं दहरपृष्ठं नाम.

[e]त्रैंशिकोत्तमा दशिनी.

[f]द्विचत्वारिंशिकावनुवाकौ.

[g]दशिन्युत्तमश्च.

---

ब्रा १,४र्थे प्रश्ने १मानुवाकः, ५मे प्रश्ने ४र्थोनुवाकश्च तच्छेषः ॥ दाक्षिणविधिः ब्रा—२,२,५मोनुवाकः ॥

[21]सं—१,१,१४. २,१४. ३,१४. ४,४०. ५,११. ६,१२. ७,१३. ८,२२. २,१,११. २,१२. ३,१४. ४,१४. ५,१२. ६,११-१२. ३,१,११. २,११. ३,११. ४,११. ५,११. ४,१,११. २,११. ३,१३. [४,१२. ७,१५.] ॥

[22]ब्रा—१ मे काण्डे ६—८ प्रश्नाः ४,९—१०वाकौ, ५,६ष्ठानुवाकश्च.

[23]सं—७,१,४—१० वाकाः. २,१—१०. ३,१—१०. ४,१—११ ५,१—१० ब्रा—१,२,२—६नुवाकाः. ब्रा—१,४,५—७नुवाकाश्च. (ब्रा—१,४,५—७नुवाकाः अध्वरादिविधिशेषा इत्येके.)

[24]सं—[a]७,१,११—२०. २,११—२०. ३,११—२०. ४,१२-२२. ५,११—२४. [b]सं—४,४,१२. ६,६—९. ७,१५. [c]सं—५,५, ११—२४. ६,११—२३. [d]सं—५,१,११. २,११-१२. [e]सं—५, ७,११—२४. (आ—३,२०—२१.) सं—५,७,२५—२६. [f]सं—५, ३,१२. ४,१२. [g]सं—...

प्रवर्ग्य[25]स्तद्विधि[26]रग्निहोत्रविधि[27]र्होतार[28]स्तद्विधि[29]रुप-
होमाः[30] कौकिली[31]स्सवा[32]स्सूक्तानि[33] नक्षत्रेष्टयः[34] पुरो-
डाशविधि[35]र्नृमेध[36]पितृमेधौ[37] दाश्यं हौत्रं[38] पाशुकं[39] चा-
च्छिद्रकाण्ड[40]मश्वमेधविधि[41]रित्येतावन्ति शाखाका-
ण्डानि ॥

---

[25]आ—७मः प्रश्नः (‘ नमो वाचे ’ इति प्रश्नः)

[26]आ—८ (देवा वै सत्रमिति प्रश्नः.)

[27]ब्रा. २,१मः प्रश्नः. ब्रा—१,४,३—४वाकौ च तच्छेषौ.

[28]आ. ३,१—१३.

[29]ब्रा. २,२,६—३,११.

[30]ब्रा—२,४—५प्रश्नौ.

[31]ब्रा—२,६ष्ठः प्रश्नः. ब्रा—१,४,२यानुवाकस्तच्छेषः.

[32]ब्रा—२,७मः प्रश्नः.

[33]ब्रा—२,८मः प्रश्नः. ब्रा—२,८,८मानुवाकादूर्ध्वं. आ—३,१४-१५-वाकौ तच्छेषौ.

[34]ब्रा—३,१मः प्रश्नः. ब्रा—१,५,१—३वाकाः तच्छेषाः.

[35]ब्रा—३,२—३प्रश्नौ.

[36]ब्रा—३,४र्थः प्रश्नः.

[37]आ—४र्थः प्रश्नः.

[38]ब्रा—३,५मः प्रश्नः. सं—२,५,७मानुवाकमारभ्य ११वाके ‘लोकं-चाभिजयाति’ इत्यन्तम्. तद्विधिः. सं—१,७,२यानुवाकः. सं—२,६,७-१०वाकाश्च तच्छेषाः.

[39]ब्रा—३,६ष्टः प्रश्नः.

[40]ब्रा—३,७मः प्रश्नः.

उपनिषदो वेदान्तास्तास्त्रय्यस्सांहित्यो[42] याज्ञि-
क्यो[43] वारुण्य[44]श्चेत्येतावत्तित्तिरिः प्रोवाच ॥

अथाष्टौ काठकानि सावित्र[45]नाचिकेत[46]चातुर्हो-
त्र[47]वैश्वसृज[48]आरुणाः[49] पञ्च चितयो दिवश्श्येनयो[50]पामा-
श्चैष्टयस्[51]स्वाध्यायब्राह्मण[52]मष्टममथ श्लोकाः ॥

इति प्रथमोऽध्यायः

---

शाखादिं[*1] याजमानं[8] च होतॄन्[28] हौत्रं[38] च दार्शिकम्[15] ।
तद्विधीन्[35-9-29] पितृमेधं[37] च नवाहुः कस्य[†] तद्विदः ॥१॥
अध्वरप्रभृति[2—4] त्रीणि तद्विधि[20]र्वाजपेयिके[10-11] ।
सवाश्शुक्रिय[32]काण्डे[25-26] च नवेन्दोरिति धारणा ॥ २ ॥

---

[42]आ—९,१—१२ वाकाः.
[43]आ—६ ष्ठः प्रश्नः.
[44]आ—९,१३-१९वाकाः.
[45]ब्रा—३,१०.
[46]ब्रा—३,११.
[47]ब्रा—३,१२,९.
[48]ब्रा. ३,१२,६—९.
[49]आ—१.मः प्रश्नः
[50]ब्रा—३,१२,१—२.
[51]ब्रा—३,१२,३—४.
[52]आ—२यः प्रश्नः.

---

*इतः परमुपरि निहिता अङ्काः प्रथमाध्याये तत्तदङ्काङ्कितकाण्डान् सूचयन्ति.
†प्रजापतेरित्यर्थः.

त्रिष्वग्न्याधेयपूर्वेषु[5-6-7] अग्नौ[17] च साविधिद्वये[18-19] ।
विधौ चैवाग्निहोत्रस्य[27] सप्तस्वाग्निमृषिं विदुः ॥ ३ ॥
अवशिष्टानि यानि स्युः काण्डान्यन्यानि षोडश ।
विश्वान्देवानृषींस्तेषु विदुर्वेदविदो जनाः ॥ ४ ॥
सब्राह्मणो राजसूयः पशुबन्धस्सहेष्टिभिः[34] ।
उपानुवाक्यं याज्याश्च अश्वमेधस्सब्राह्मणः ॥५॥
सत्रायणं[23] चोपहोमास्[30]सूक्तानि[33] च सहेष्टिभिः[34] ।
सौत्रामणी[31] सहाच्छिद्रैः[40] हौत्रं[39] मेधश्च[36] षोडश ॥ ६ ॥
काण्डनामोपनिषत्सु[42—44] काठकाग्निषु[45—48] हव्यवाट् ।
तदिष्टिकाण्डयोर्[50—51]विश्वे ब्रह्माम्नायविधावृषिः[52] ॥ ७ ॥
ऐकाग्निको विधिः*काण्डं वैश्वदेवमिति स्थितिः ।
आरण्यको[49] विधिः काण्डमरुणास्तत्रदैवतम् ॥ ८ ॥
काण्डशेषान्यथाकाण्डं विदध्यात्तु विचक्षणः ।
यथा सारस्वते पाठे ज्ञानमात्रमिहोच्यते ॥ ९ ॥
अथ काण्डऋषीनेतानुदकाञ्जलिभिश्शुचिः ।

---

*प्रसुग्मन्तीति प्रश्नद्वयम. अदितेनुमन्यस्वेत्यादयः परिषेचनमन्त्राः. अग्नये स्वाहे-

अव्यग्रस्तर्पयेन्नित्यमन्नैः पर्वाष्टमीषु च ॥१०॥
काण्डोपाकरणेष्वेतान्पुरस्तात्सदसस्पतेः ।
जुहुयात्काण्डसमाप्तौ च श्रुतिरेषा सनातनी ॥११॥

इति द्वितीयोऽध्यायः.

---

होतॄन्[28] प्रवर्ग्यकाण्डं[25] च याश्चोपनिषदो[42-44] विदुः ।
अरुणा[49]म्नायविधि[52]श्चैव काठके परिकीर्तितौ* ॥१॥
†रुद्रा नारायण[43]श्चैव मेधो यश्चैव पित्रियः[37] ।
एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति ॥ १३ ॥
कारीर्यश्चाथ‡ पित्र्याश्च§ दिवाकीर्त्येति येषु च¶ ।
†रुद्रास्सन्ततिरित्येतावनुवाकौ च सात्रिकौ** ॥१४॥
होतृविध्यवसाने चानुवाकचतुष्टयम्†† ।
सूक्तेषु सूक्तं यत्सौर्यं‡‡ मेधो यश्चैष पित्रियः[37] ॥१५॥
काठकानि[45–52] च सर्वाणि सर्वाण्यारण्यकानि[25,28,42–44] च ।
दिवाकीर्त्यानि शाखायामेतावन्तीति धारणा ॥१६॥

---

*काण्डानुक्रमव्याख्ययान्तु ‘काठके परिकीर्तिताः सावित्रचित्यादयः’ इति व्याख्यातम्.
†सं.४,५. ‡सं–२,४,७–१०.
§सं–१,८,५. २,६,१२. ब्रा–१, ३,१०. ६,८–९. ब्रा. २,६,१६.
¶सं–७,३,१०. **ब्रा–१,२,३-४. ††ब्रा. २,३,८—११.

कल्पे पितृविधिश्चैव प्रवर्ग्यविधिरेव च ।
काठकानां विधिश्चैव कारीरीविधिरेव च ॥ १७ ।
अरुणाम्नायविधिश्चैव शतरुद्रविधिस्तथा ।
कल्पेषु तु य आम्नाता मन्त्रास्तानप्यतन्द्रितः॥१८।
यथाक्रममुपाकृत्याधीयीतेति चोच्यते ।
अक्षारलवणं भूमौ मुखेन पशुवत्कविः ॥ १९ ।
चतूरात्रन्तु भुञ्जीत कारीर्यध्ययने व्रतम् ।
कारीरीव्रतवच्चापि काल*व्रतमिहोच्यते ॥ २० ॥
न तत्र पशुवद्भुञ्ज्यान्न च भूमाविति स्थितिः।
काल*व्रतं तु यत्प्रोक्तं अग्निकाण्डे तदिष्यते ॥२१।
सावित्रीभ्यः† प्रभृत्यूर्ध्वमौषध्यनुवाकादिति‡ ।
समित्कलापं त्र्यहमाहरन्ति मृगारेष्ट्याम्§ ॥२२।
एष्वन्येषु तु यानन्यान्यमानाचक्षते द्विजाः ।
तान्यथोक्तान्यथोक्तैश्चाधीयीतेति च शासनम्॥२३।
स्वाध्यायब्राह्मणं काण्डं काठके पठितो विधिः।
स्वयम्भूश्चात्र दैवत्यं सर्वभूताधिपपतिः ॥ २४ ॥
वैशम्पायनो यास्कायैतां प्राह पैङ्गये ।
यास्कस्तित्तिरये प्राह उखाय प्राह तित्तिरिः॥२५।

उखस्शाखामिमां प्राह आत्रेयाय यशस्विने ।
तेन शाखा प्रणीतेयमात्रेयीति च सोच्यते ॥२६॥
यस्याः* पदकृदात्रेयो वृत्तिकारस्तु कुण्डिनः।
तां विद्वांसो महाभागां† भद्रमश्नुवते महत् ॥२७॥
त्रिशीर्षाणं नवात्मानमष्टपुच्छं द्विरंसकम् ।
त्रिंशत्पक्षं समन्विच्छेच्छकुनिं ब्रह्मसम्भवम्‡॥२८॥

42-44 25-26
उपनिषदोस्य शिरोर्कावंसौ भुवनपतेर्नव§ यान्या-
त्मा सः ।

42-52
कठविहितानि विदुः पुच्छेष्टौ यदपि च शेषमत-
स्तौ पक्षौ ॥ २९ ॥

25 45-52 42-44
मन्त्रात्मा घर्मशृङ्गोसावष्टास्योप¶निषत्ककुत् ।

47
विध्यङ्ग**ऋषभस्त्वविंश्चतुर्होतृललामवान् ॥३०॥
शाखाद्यादिं विपाप्मानं विधिमन्त्रमयं शुभम्†† ।
सामान्य‡‡मेतं पन्थानं दिव आहुर्मनीषिणः॥३१॥

42-44
रहस्यमूल ऋक्पर्णो यजुष्पुष्पप्रवालवान् ।
यज्ञकर्मफलश्श्रीमान्विप्रभ्रमरसेवितः ॥ ३२ ॥

---

*यस्यां. †महाशाखां. ‡ब्रह्मसम्मितम्.
§1,8,9,15,28,29,35,37,38. काण्डाः ¶शृङ्गोष्टकाठकाख्यौ.
**9,11,18,20,22,26,27,29,35,41. काण्डाः

छन्दस्स्कन्धस्शाखाशाखो ब्राह्मो वृक्षस्साक्षादेषः ।
यस्तं विद्यात्स ऋषिर्विप्रस्स स्वर्गच्छेदायुः कीर्तिम्
॥ ३३ ॥
एतानृषीन्यजुर्वेदे यः पठन्वेद वेदवित् ।
ऋषीणामेति सालोक्यं स्वयम्भोश्चैति साम्यताम्*
स्वयम्भोश्चैति साम्यतामिति ॥ ३४ ॥

इति तृतीयोध्यायः.

---

काण्डानुक्रमणिका सम्पूर्णा.



# शुद्धाशुद्धपत्रिका.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २८ | ३ | प्रोक्षिता स्था | प्रोक्षितास्स्था |
| ३२ | २ | देवो | [17]देवो |
| ३३ | २,४ | दिवस्कम्भ | दिवस्स्कम्भ |
| ३४ | १ | देवस्यं | [6]देवस्यं |
| ३८ | ५ | चितंस्थ | चितंस्स्थ |
| ४१ | १ | प्रजातास्थ | प्रजातास्स्थ |
| ४४ | २ | ॥ १३ ॥ | ॥ १२ ॥ |
| ४६ | ५ | ॥ १४ ॥ | ॥ १३ ॥ |
| ४८ | २ | ॥ १३ ॥ | ॥ १४ ॥ |
| ,, | ४ | रुद्रास्त्वा | [18]रुद्रास्त्वा |
| ,, | ५ | सादित्यास्त्वा | सा [19]दित्यास्त्वा |
| ,, | ६ | [18]देवस्यं | [20]देवस्यं |
| ५१ | १ | योऽम्रर्वं | योऽम्रेर्वं |
| ५६ | ३ | ह्यग्निस्ते | ह्यग्निस्ते |
| ६१ | १ | विष्णोस्तूपो | विष्णोस्स्तूपो |
| ७८ | १,४ | वित्वा | वित्वा |
| [illegible] | २ | इमं नो | इमं नो |
| [illegible]० | ६ | दाक्षणः | दक्षिणः |
| ११९ | ८ | सङ्ख्स्राव | सङ्ख्स्राव |
| १२६ | ९ | सङ्ख्स्राव | सङ्ख्स्राव |
| १२० | ४,८ | वित्वा | वित्त्वा |

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १६८ | २ | लिंङि | लुंङि |
| २३३ | ५ | दुपदस्य | दुपधस्य |
| २६०. | १ | ग्रान्धि | ग्रान्थि |
| ३०८ | १२ | १–१–४[8] | १–२–१[1] |
| ३१६ | १ | मास्करेण | भास्करेण |
| ३६६ | १ | रुक्मवते | रुक्मते |
| ३८० | २ | तृतिय | तृतीये |

